कचः — अयि भोः भार्गव ! सेवया तत्र भवन्तं, गानेन देवयानीं च प्रतोषयितव्यं तन्मे कर्तव्यामिति तत्र भवता आज्ञाप्तोऽस्मि ।

शुक्रः — कच ! यदुक्तं त्वया तत् सत्यमेव । त्वं सकलकला प्रवीणोऽसि । मां सेवया, नाट्य गान वादनैः देवयानीं च सन्तोषयसि । अद्य प्रभृति गाः चारणाय नीत्वा विपिनं, ताभिस्साकं सायं निलयं प्रत्यागन्तव्यं इति अधिक सेवां ते प्रददामि ।

कचः — अयि उशनः । वः शासनं शिरोधार्यं भवति मे । अनुगृहीतोऽस्मि । (इति गच्छति । देवयानी शुक्रौ भूमौ उपविशतः)

शुक्रः — दुहितः । अद्यसायं वृषपर्वणः भवनं गन्तव्यं विद्यते । एषः राज्ञः आदेशः ।

देवयानी — असुराचार्याणां, शुक्राचार्याणां, वृषपर्वणः आदेशः शिरोधार्यः ? किमत्रविचित्रम् ? एतत् आश्चर्यं भवति मम ।

शुक्रः — राज्ञः आज्ञा अनुपालनीया । एषः राजादेशः । राजा प्रजा रक्षकः । तस्य आज्ञा सर्वेषां शिरोधार्या भवति । यदि प्रजाः तस्याज्ञां धिक् कुर्वन्ति तर्हि पालनाचक्रं अस्तव्यस्तं भविष्यति यतः ।

यथाऽर्क-भासस्ता-हीने । लोके ध्वान्तं भविष्यति ।
तथा राजाज्ञया-हीने । शुक्र-नीतिरियं श्रुणु ॥

(देवयानी अन्यत्र दत्तदृष्टिः भवति)

(तां विलोक्य) देवयानि ! ते हृदयमद्य विषयान्तरे संलग्नं भाति । किमत्र कारणम् ?

देवयानी — कचः कारणम् ।

शुक्रः — (आश्चर्येण) किं कचः कारणम् ?

देवयानी — (संकोचमभिनयन्ती) नहि । किंतु पितः ! कचः अनया विद्यया किं साधयिष्यतीति, विचार मग्ना संजाताऽस्मि ।

**शुक्र :** — यत् अन्ये साधयन्ति तदेव सोऽपि साधयिष्यति । किमत्र ते विचारणीयं विद्यते ?

**देवयानी** — जनक ! किमर्थं वृषपर्वा आमन्त्रणं प्रेषितवान् ?

**शुक्रः** — असुरेषु कलयः संजायते, तं कलहं प्रशामयितुं, राजा मम साहाय्यं अपेक्षते इति मे वितर्कः ।

**देवयानी** — कीदृश स्वरूपोऽयं कलहः ?

**शुक्रः** — बाले ! त्वं तव प्रश्न परम्परया मे शिरोवेदनां जनयसि । सर्वमेतत् असंबद्धं अपिच असाम्प्रतं ते भवति ।

**देवयानी** — पितः ! अयं ते शिष्यः कचः अतीव सरसः । कलाप्रियः । प्रत्यहं तव सेवां करोति । गायति । नृत्यति । सः मे रोचतेऽत्यन्तम् । सोऽपि मयि स्निह्यति ।

**शुक्रः** — बाले ! उत्तिष्ठ। गच्छावः । माध्यान्हिकं निर्वर्तनीयं भवति । (इति गच्छतः)

(यवनिकापतति)

☆ ☆ ☆

# ॥ तृतीयं दृश्यम् ॥

(उद्याने सायं समयः । देवयानी सख्या विलासिन्या सार्थं प्रकृति शोभां पश्यन्ती संभाषते)

**देवयानी** — सखि ! विलासिनि पश्य एते वातपोतकाः मन्दं मन्दं वहन्तः मे तनुलतां पुलकाङ्कुरैः कम्पयन्ति ।

गीतम् (काफी रागे)

१ सखि कुसुमे भ्रमरः मकरन्दम् । पिबति पदेपदे पश्य सानन्दम् ॥धृ॥

२ आनन्त्यं मलयानिलोयमखिलं । चुम्बति गात्रं क्षणेक्षणे चपलम् ॥

**३ याचे नाहं किमपि मे जीवने । सेहे नाहं दर्पक बाधां यौवने ।।**

**४ वीक्ष्ये सुखदं गुरु-सुत-रूपम् । भोक्ष्ये मधुरं-रतिपति-रुपम् ।।**

**विलासिनी** — (आश्चर्येण) देवयानि ! त्वं कदापि मे नोक्तवती ते हृदय भावनां । अद्य जानामि ते हृदय वेदनां । कथ्यतां कोऽय कचः । का कथेयम् ।

**देवयानी** — विलासिनि ! अयं सुरगुरोः पुत्रः ब्रह्मचारी । रतिराज सुन्दरः । समविभक्ताङ्गः । विनीतः । शीलवान् । सुशिक्षितः । कर्मसु कुशलः । गाननृत्य विद्या विशारदः । कामयेऽहंतम् ।

**विलासिनी** — देवयानि ! कथमयं अत्रागतः ।

**देवयानी** — पितृपादानां सकाशे विद्यामभ्यस्तुं समागतः ।

**विलासिनी** — देवयानि ! यथा त्वं तस्मिन् लग्नाऽसि, तथा सः त्वयि लग्न चित्तः अस्ति किं ? कामना श्रृङ्गार रसप्रपूर्णा भवितुं, परस्परायत्त चित्त संलग्नमावश्यकं भवति । तादृश विवाहानुबन्धनं सुष्टु शोभते ।

**परस्पर-प्रेम-रसाभिनीताः । भावाः परं वर्धित कामरूपाः ।।**
**आजीवितान्तं मधुरं प्रवृद्धाः । कुर्वन्ति कल्याण ममुत्रलोके ।।**

**देवयानी** — सखि मयि सः अत्यन्तानुरक्तः । यत् अहं कामये तत् सर्वं सः करोति । मयासह गायति । नृत्यति । वादयति च ।

**विलासिनी**—सखि! एकत्रैवानुरागश्चेत् सः रसाभासः भवति। तस्मात् सः त्वयि लग्न चित्तः यथा भवति तथा कुरु। नोचेत् तत् कल्याणं न भवति ।

**एकत्र भावनापूर्णं । कल्याणं नास्ति भामिनी ।**
**कल्याणं सततं भाति । यत्रान्योऽन्यं मनोभवः ।।**

**देवयानी** — सखि ! सः श्रृङ्गारभावपरम्पराभिसज्जित-रसप्रपूर्ण दृष्टया, मां सर्वदा संतोषयति । फलपुष्प पल्लवानि समानयति । मम कर्मणि सहायकः भवति । रहसि सकौतुकं पश्यति ।

**विलासिनी** — एतावन्मात्रेण सः त्वयि बद्धानुरागः इति कथं भाव्यते।

**देवयानी** — आवयोः हृदये जानीतः विलासिनि। हृदये प्रणय वचनैः सगूढं रहसि भाषेते।

**विलासिनी** — सखि! देवयानि! त्वं न जानासि। सः देवकुमारः। भवती राक्षस गुरोः शुक्राचार्यस्य कुमारी। अपिच लोके एवं प्रथा विद्यते, यत् जन्मतः सुराऽसुराणां कलहः भवति, नतु कल्याणमिति।

**देवयानी** — विलासिनी! प्रेम जाति वर्गान् न जानाति।

**विलासिनी** — देवयानि! प्रेमइति न वक्तव्यम्। किन्तु कामः इति कथय।

**देवयानी** — तथा किमर्थं वक्तव्यम्।

**विलासिनी** — देवयानि! प्रेमकामयोः महदन्तरं विद्यते।

**देवयानी** — विलासिनी! अङ्गीकरोमि ते वचनं। कामः इति भणामि। कामः वर्णं न जानाति। यदि सः जानाति सर्वदा सर्वथा तृणी करोति तत् वर्णम्। कामः स्वच्छन्द वृत्तिः राजते।

**विलासिनी** — यथा रोचते ते तथा कुरु।

**देवयानी** — इतः पश्य सखि।

**सायं सन्ध्या-रक्तदेहोंशुमाली। रक्तः पूर्णं चुम्बतीहप्रतीचीम्॥**
**गाढं श्रान्तः सर्व लोकः प्रयाति। स्वीयं गेहं पूर्णं सौख्यायतूर्णम्॥**

तरणिः पश्चिमाम्बुधौ पतति। एहि गच्छावः। अधुना कचः गोभिस्साकं प्रत्यावृत्तः भवति। तं द्रष्टुं मे मनः त्वरयति। तस्य दर्शनेन विना स्थातुं न शक्नोमि। (इति निष्क्रान्ते)

(यवनिकापतति)



# चतुर्थं दृश्यम्

**शुक्रः** — (भूमौ उपविश्य आसवं पिबति। देवयानी द्वारि स्थित्वा कचस्यागमनं निरीक्षन्ती तिष्ठति। गवां अम्बारावाः श्रूयन्ते)

**देवयानी** — (ससंभ्रमं पितरमुपसृत्य) तात। गावः समागताः। किन्तु कचः न संलक्ष्यते। तात ते अग्निहोत्रः आहुतः। सूर्यश्चास्तंगतः। किंतु कचः न संदृश्यते। तात वने व्याघ्रादयः विचरन्ति। तेभ्यः तस्य न किंचित् बाधा मा भूयात् इत्येवं मन्ये। जनक। तं विना नाहं जीवेयम्। सत्यं ब्रवीमि ते। सः ब्रह्मचारी। तपोधनश्च : सः कर्मसु दक्षः। तस्यागमन पर्यन्तं नाहं भोक्ष्ये। तस्यामार्गान्वेषणं करिष्ये। अयं मे प्रियवत्तमः। अभिरूपः। (इतिभय कम्पिता रोदिति)

**शुक्रः** — पुत्रि मा बिभेहि। अयमापन्नः नहि अयं सजीवो बभूव।

**देवयानी** — तात, किं भणसि ?

**शुक्रः** — प्रशान्त चित्ता श्रुणु भवती। अयं दानवैः गुरोः पुत्रः इति संहतः दग्धश्च। तत् दग्धचयं सुरायां मिश्रणं कृत्वा दानवाः मे अयच्छन पातुं। अविचारः सुरालोलुपोऽहं तां सुरां अपिबम्। सः मम उदरे आसीत्। सः उदरे मत्सकाशात् मृत संजीविनीं विद्यां अभ्यस्य मदीयाऽज्ञया मे कुक्षि विदार्य विप्रः बहिः निर्विचक्राम। सः जीवन आस्ते। बाले अद्य प्रभृति सुरापानमहं विसृजामि। सुरापायिनां मतिः मन्दः भवति इतिशपामि। कचः श्वः प्रभाते परिसमाप्त विद्यः त्रिदशालयं गच्छति। मा विचारय। मारोदि। वाले कचः आवां द्रष्टुं समागच्छति। पश्य।

**राहुमुक्तइवाब्जोऽसौ। निर्गतश्चोदरान्मम ॥**
**विराजते यथापूर्वं। परिपूर्ण कलानिधिः ॥**

**देवयानी** — तातगच्छाम्यहं संगीत शालाम्। (इति निष्क्रान्ता)

(ततः प्रविशति कचः)

**कचः** — भार्गव ! अभिवादये (इति नमस्करोति) भवतां अनुज्ञया, करुणया, कृपया, परिसमाप्त विद्यः अभवम् । मे मनः त्वरते त्रिदशालयं गन्तुं । मां गन्तुमाज्ञापयन्तु भवन्तः ।

**शुक्रः** — कच ! निष्कण्टकं अतिसुखदं ते मार्गं भवतु गच्छ । (इत्याशीः प्रददाति)

**कचः** — आचार्य, भगिनी देवयानी कुत्र ।

**शुक्रः** — कच ! देवयानी तवागमनं निरीक्षन्ती इदानीमेव संगीत शालां गतवती । तत्र तां द्रक्ष्यसि ।

**कचः** — कवे ! गच्छाम्यहं तां द्रष्टुम् ।

**शुक्रः** — आम् गच्छ ।

(यवनिकापतति)



## पंचमं दृश्यम्

**देवयानी** — (सर्वालङ्कार भूषिता संगीत शालायां उपविश्य आत्मगतम्) कचः त्रिदशालयं गच्छति । अधुना मत्समीपं समागमिष्यति । निर्भीका त्वमनुसरेयम् । यदि मयि सः अनुरक्तः वा न वा विचार्य, अनुरक्तश्चेत् परिणेतुं प्रक्ष्यामि । मयि अननुरक्तश्चेत् तं बलात् आलिङ्गय सुमुखमनस्कं करिष्यामि । यदि मां तिरस्करोति तर्हि तं शपेयम् । स्त्रीबुद्धिः प्रळयान्तका इति दर्शयेयम् । (ततः प्रविशति कचः)

**कचः** — देवयानि ! अहं समाप्तविद्यः । अधुना त्रिदशालयं गच्छामि । अहं तव दाक्षिण्येन अनुकम्पया स्नेहेन अनुगृहीतोऽस्मि । कथान्तरेषु स्मर्तव्योऽस्मि । नाहं विस्मरिष्यामि ।

**देवयानी** — कच ! त्वं समाप्त विद्यः। मां भक्तां भजितुमर्हसि। विधिवत् मंत्र पूरस्सरं मम पाणिं गृहाण। अहं त्वयि अनुरक्ता। त्वं ब्रह्मचारी असि। मयासार्धं वसन् मां संतोषयन् वादयन् मया नृत्यन् आसीः। त्वं मम हृदि सर्वदा निवससि।

**कचः** — सुभगे ! यथा तवपिता मम पूज्यः, मान्यः, तथा त्वं पूजनीयतरा असि। भद्रे त्वं पूज्या गुरुपुत्री। शुक्रः तव पिता, मम गुरुः।

**देवयानी** — त्वं मे पितुः पुत्रः नहि। त्वं बृहस्पति पुत्रोऽस्मि। तस्मात् द्विजोत्तम त्वं मम मान्यः पूज्यश्च। कच ! त्वं न जानासि मे सौहार्द, अनुरागं, उत्तमां मां त्यक्तुं नार्हसि। अहं त्वयि अनुरक्ता। (इति हावभावादिकं करोति, तस्य पाणिग्रहणं कर्तु उद्युक्ता भवति)

**कचः** — (किंचित् दूरं अपसृत्य) देवयानि ! त्वं धर्मतः मम भगिनी। त्वयि मे मन्युः न विद्यते। विशालाक्षि ! मां त्रिदशालयं गन्तुं आदिश। पथिमे शिवमाशंस। कथान्तरेषु धर्मस्य अविरोधेन स्मर्तव्योऽस्मि। सुभगे ! अप्रमत्ता मम गुरुं नित्यमाराधय।

**देवयानी** — कच ! इयन्तं कालं त्वय्यहं अनुरक्ता, आसक्ताच। स्त्रीणां हृदयभावनां त्वमनभिज्ञोऽसि। त्वमरसिकोऽसि।

**सुन्दरं पुरुषं दृष्टवा। मनोभ्रान्तिर्भविष्यति।**
**स्त्रीणां जगति सर्वसां। रसज्ञानां विशेषतः॥**

**कचः** — देवयानि! अधर्मचारिणां कामुकानां इयं दुरवस्था भविष्यति, न मादृशानां।

**देवयानी** — कोऽयमन्तरः कामुकानां, अपिच युष्मादृशानाम्।

**कचः** — कामुकाः सत्वगुणरहिताः, विचारहीनाः, अत्रत्याः इव। प्रेमिकाः अतिशय सत्वगुणोपेताः तत्रत्याः इव। सवमेतत् त्रिगुणात्मक व्यत्ययरुपं भवति।

**देवयानी** — कच ! त्वदीया कल्पना समयानुकूला। विरम ते भाषणम्। जगति स्त्रीणां स्वैरकामितं लघुरुपं न्यक्कृतरूपं च भवति पुरुषाणां।

स्त्रीकामनां नधुनीहि । अमङ्गलं तत् ते भवति । अरे कच ! किमर्थं अप्रस्तुत सल्लापैः कालं व्ययं करोषि । एहि ।

**कवोष्ण-चुम्बनैस्तूर्णं । गाढाऽलिङ्गन सौख्यदैः ।**
**कुरूरे मे कुचद्वन्द्वम् । चूर्णं निष्पीडनैः कच ॥**

(इति कचं गाढमालिङ्गितुमिच्छति)

**कचः** — (क्रोधेन) पुँश्चलि ! अविनयं चरसि । अपकर्षं विधीयसे शुक्राचार्याणां । नगुरुद्रोही भवेयम् । कामः अन्धः भवति । सः किंकर्तव्यं किं अकर्तव्यं न जानाति । धर्मः तेजस्वी भवति, विचार विचक्षणः भवति ।

**देवयानी** — शुक्राचार्याणां गेहः कलाविलसितः । एतत् स्थानं कला-स्थानं, कलत्र स्थानंच । अत्र शुक्र दृष्टिः अवश्यं भविता ।

**कचः** — देवयानि ! सर्वदा मम गुरु दृष्टिः विद्यते । न कापि हानिः भवति मे । गुरुः संकट निवारकः ।

**देवयानी** — कच, त्वं छान्दसः, मूर्खः । त्वं याचितः मया, यतः धर्म कामार्थे प्रत्याख्यास्यसि ततः न ते विद्या सिद्धि गमिष्यति । (इति शापं ददाति ।

**कचः** — देवयानि, गुरुपुत्रीति कृत्वाहं प्रत्याचक्षे । भवत्याः यः कामः सः न तथा भविष्यति, यथा ते पाणिं ऋषि पुत्रो ग्रहिष्यति । त्वं मां आत्थ, न ते विद्या फलिष्यति इति । तस्मात् विद्यामेनां अध्यापयिष्यामि यस्मै कस्मै, तस्य विद्या फलिष्यति । (इतिशप्त्वा त्रिदशालयं गच्छति कचः)

**देवयानी** — (रुदन्ती) अहो मे दौर्भाग्यम् ।

**निराश्रया मे भुवि यौवन-श्रीः । गतं वयः प्रेम-रसं विनैव ।**
**निकेतनें तिष्ठति भार्गवश्च । तथापि भोक्तव्यमहो स्वकर्म ।।**

मम सर्वं यत्नः शिथिलितः । सर्वा मे यौवन श्रीः निराश्रया ।धिक् मे यौवनं । धिक् मे जीवनम् । (इति रुदन्ती गच्छति)

(यवनिकापतति)



## ॥ श्रावणम् ॥

घनाऽकृति घटाऽश्लिष्टः । तप्तानां वारिदायकः ।
सर्वलोक समाराध्यः । श्रावणोऽयं विराजताम् ॥

(नान्द्यन्ते)

सूत्रधारः — अयिकुटुम्बिनि, इतः आगच्छ ।

नटी — (ससंभ्रमं प्रविश्य) एषास्मिस्वामिन् ।

सूत्रधारः — अयं ग्रीष्मः चण्डरविप्रतप्तः, प्राणिनां तृष्णां प्रजनयति ।

नटी — (विहस्य) किं भवान् तृषितः ?

सूत्रधारः — हन्जे ! हृदयगतां भावनां जानासि त्वम् । एतादृश भावगर्भितं वचः आधुनिकाः न जानन्ति ।

नटी — किं पानीयं दद्याम् ?

सूत्रधारः — पानीयं मास्तु ।

नटी — तर्हि किं दद्याम् ?

सूत्रधारः — लवण-मिश्रिततक्रं पायय ।

नटी — अहो तृषितानां शीतल पानीयं योग्यं भवति, नतु तक्रम् ।

सूत्रधारः — हन्जे त्वं न जानासि, तक्रस्य भैषजगुणम् । तक्रं शक्रस्य दुर्लभम ।

नटी — (हसित्वा) हां तक्रमेव पाययेम् । अधुना किमर्थं, आहूताऽस्मि, निवेदयन्तु भवन्तः ।

सूत्रधारः — शृणु, श्रावणं नाम नाटकं प्रदर्शयितुं समुत्सुकोऽस्मि । तस्मिन् नाटके त्वया गातव्यम् ।

**नटी** — किं श्रावणं नाम नाटकम् ? केन कविना विलिखितमिदम् ।

**सूत्रधारः** — इदंतु गीर्वाणान्ध्रभाषाप्रवीणेन, कुशलेन परीक्षित् शर्मणा विरचितम् ।

**नटी** — आम् विदितम् । अनेन कविना यशोधरा महाकाव्यं, अपिच अक्षय गीत रामायणं इत्यादि काव्यनिचयं विलिखितम् । अयं गीर्वाणान्ध्र प्रपन्चे । सुप्रसिद्ध कविः । अहं अधुना अतीव प्रमुदिताऽस्मि ।

**सूत्रधारः** — भवती प्रमुदिताऽसि । गायस्व ।

**नटी** — कं विषयमुद्दिश्य ।

**सूत्रधारः** — श्रावणमुद्दिश्य ।

**नटी** — केन रागेण गातव्यम् ।

**सूत्रधारः** — हाँ, मेघमल्हार रागेण गातव्यम् ।

**नटी** — श्रुणुत मेघमल्हार रागम् ।

**श्रावणस्तापहारी यः । काव्यरूप विभासकः ।**
**कृष्णमेघालि संभूतः । कुरुते लोक मङ्गलम् ।।**

**सूत्रधारः** — अहो ! साधुगीतं भवत्या ।

(नेपथ्ये)

**पूर्वजन्म कृतं पापं । जन्मन्यस्मिन् समागतम् ।**
**अवश्यमनुभोक्तव्यं । नहिलेशोऽपि संशयः ।।**

**नटी** - (कर्णंदत्वा) आर्य ! कोऽयम् ? स्व दौर्भाग्यं विनिन्दयन् इतः प्रविशति ।

**सूत्रधारः** — हन्जे ! पुत्रहीनं स्वात्मानं विनिन्दयन्, सुमन्त्रेणसार्थं, राजा दशरथः प्रविशति ।

**नटी** — राजा दशरथः सुमन्त्रेण सार्थम् ?

**सूत्रधारः** — ओम् ! मन्त्रिणा सुमन्त्रेण सार्थं इतः एव आगच्छति ।

**नटी** — आर्य ! आवाभ्यां न स्थातव्यमत्र । एहि गच्छावः ।

(इति निष्क्रान्तौ)

(ततः प्रविशति दशरथः सुमन्त्रेण सार्थं विचिन्तयन्)

**दशरथः** — सुमन्त्र, अहो मे दौर्भाग्यं पृथ्वीपतिषु । अहं धराधिपोऽपि सकल सुख समाविष्टितोऽपि, मानसिकानन्दं नह्यनुभवामि । एतत् सत्यमेव मे दौर्भाग्यम् । यतः ।

**पूर्वं जन्म कृतं पापं । जन्मन्यस्मिन् समागतम् ।**
**अवश्यमनुभोक्तव्यं । नहि लेशोऽपि संशयः ॥**

(दशरथः सिंहासने उपविशति, सुमन्त्रः पार्श्वस्थित पीठे उपविशति)

**दशरथः** — अयि सुमन्त्र, मम पूर्वजाः संतानार्थं तापं तापं, यज्ञ याग' तपः पूजादिकं विरच्य, वंशोन्नतिकारकं सन्तानं प्राप्नुवन्तः आसन् ।

वैवस्वतमनोः पुत्रः, मे प्रपितामहः राजा दिलीपः, दिलीपस्य पुत्रः, मम पितामहः रघुः, रघोः पुत्रः, मे पिता अजः, यथाक्रमं, परम्पराऽगतं राज्यधुरं ऊढवा प्रजालिं धर्मं निरताः प्रशासयामासुः । अहं अजस्य सुतः दशरथः । मम एतावत्पर्यंतं वंशाङ्कुरोऽपि न जातः । अहं कति वर्षाणि जीवेयं न जाने । मदनन्तरं कोऽयं कर्ता अस्य राज्यस्य भविष्यति । मम मरणानन्तरं तर्पणादिकं कः दास्यति । मे पूर्वजाः कथं तृप्ताः भविष्यन्ति । एवं विचार्यमाणे सर्वं भविष्यत् तमसा परीवृतमिव विभाति ।

कदा वंशे दीपाङ्कुरः भविष्यति । कदा सकलाः दिशः समुज्वलाः भविष्यन्ति । कदा प्रजाः सन्तुष्टान्तरङ्गाः भवेयुः । कदा सुताननं द्रक्ष्येयं । कदा तं बालकं उत्सङ्गे विनिवेश्य, सकौतुकं तृप्तः चुम्बनमाचरेयम् । कदा दरहसन विकसित वदनं पुत्रकस्य पश्येयं । कदामे वान्छा फलिष्यति । बत एवं विचार्यमाणे मे हृदयं चिन्तया जर्जरितं भवति । अनया सर्वदाऽहं अकर्मकः भवामि । विचारेण हृदयं विदलति ।

**चिन्ता-ग्रीष्म परं तप्तं । हृदयन्त्वनिशं भृशम् ।**
**आनन्द रसहीनत्वात् । दलितं बाधते बत ।।**

**सुमन्त्रः** — राजन् ! ललाट लिखितारेखा परिमार्ष्टुं न शक्यते । वय भोक्तारः । दाता सर्वेश्वरः । यत् भव्यं तत् भवति । वयं संतानार्थ यत् कर्तव्यं तत् कुर्मः । सकल धर्म शास्त्रोक्त रीत्या शान्त्यादिकं कारयामः । अवश्यं नातिचिरेण शुभसूचकाःदिवसाः भविष्यन्ति । अस्मिन् विषये संतापहेतुः नस्यात् । भवता शान्तमनसा भवितव्यम् ।

**दशरथः** — सुमन्त्र! भवान् सर्वशास्त्र वेत्ता । त्वं अतीव लौकिकोऽसि । पश्य ।

**रजनी चन्द्रहीना च । शिशु हीनं निकेतनम् ।**
**कासारः पद्महीनश्च । नैवभान्त्येव शोभया ।।**

चिन्तया दंदह्यमान मानसः भवामि । केनोपायेन बाधा उपशामिता भविष्यति ।

**सुमन्त्रः** — अयि राजन् ! एवं चिन्तिते भवति, शरीरं व्याधिग्रस्तं भविष्यति । तस्मात् भवान् मनोरंजनार्थं, यत् किमपि वनं उत नदीतीरं वा गच्छतु, विश्रान्ति सुखं अनुभवतु, इति मदीया विज्ञापना ।

**दशरथः** — सुमन्त्र !

**चिन्तादग्ध मनस्कानां । शान्तिर्नास्ति महीतले ।**
**कुत्रापि यास्यमानानां । भोक्तव्यो दैवनिर्णयः ।।**

**सुमन्तः** — राजन् तथा मा वदतु । चिन्ताग्रस्ताः सर्वथा प्रकृति दर्शनेन प्रशामित चित्ताः भविष्यन्ति इति आयुर्वेद सिद्धान्तः । तस्मात भवता तथा अनुष्ठेयं इति ममाऽभिप्रायः ।

**दशरथः** — सुबुद्धिमतां, सुमन्त्र मन्त्रिवर्याणां, भवन्ति प्रशान्ति वचनाः सत्यं मे पालनीयाः । तस्मात् श्वः प्रभाते तमसा तीरं गन्तुं, सर्वयत्नाः

तमसा नदी परिसर दर्शनेन अमन्दानन्दमनुभवति । अत्र इयं दिशा दर्शन योग्या भवति ।

**महोन्नतास्ते नगराजयश्च । शकुन्तवर्गावृत मस्तकाग्राः ।।**
**मातङ्ग यूथाञ्चित रम्यरूपाः । तन्वन्ति नेत्रोत्सवमागतानाम् ।।**

(किंचित् अग्रेगत्वा) अयं श्रावणः कमपि भावं संदर्शयन् न संदिशतीव न संदर्शयतीव प्रतिभाति । अयं ध्वनिप्रधान काव्यप्रपंचावतारः । नाहं किमपि वक्तुं शक्नोमि ।

**मनोमयूरः प्रचुरं प्रमत्तः । प्रवृत्त लास्याति विलासरूपः ।**
**वर्षागमे श्रावण वीक्षणेन । करोति नाट्यं बहु शिक्षितः किम् ।।**

अत्र सर्वमपि रसप्रपूर्णं विभाति

गीतम् (मेघ रागे)

१ अम्बराङ्गणे चलन्ति नील-वारिदाः ।
भानु-किरण-तप्यमान-प्राणि-शान्तिदाः ।।धृ ।।

२ अन्धकार-बन्धुरास्ते बलाहकाः । मातृ-भूमि-फाल-भाग-वक्रितालकाः ।
शत्रु-शस्त्र-दाहनेन धूम-मालिकाः । प्रकृति-पठन-वरुणदेव-वर्ण-मालिकाः ।।

३ नीरदाप-पातनेन-भूतलं मुदा । दिव्य-वारि-वाहनेन वत्सलं सदा ।
पल्वलेषु-रटयमान-दर्दुरार्भकाः । वर्षदेव-स्तोत्रमान-मन्त्र-पाठकाः ।।

४ पर्वताग्र-प्रथम-वारि-पातने प्रवाहकाः । वर्षभीति-धावमान-नाग बालिकाः ।
बिन्दु-पात-ध्वन्यमान-वारि-जालकम् । अम्बुपान-मेदिनी-विलास-जालकम् ।।

(किंचित् विमृश्य) अहो किमर्थमेवं, अहं, पितरौ विस्मृत्य प्रकृति सौन्दर्य दर्शन लालसः अवभवम् । न कदाप्येवं पितरौ विस्मृतौ मया आस्ताम् । मया कर्तव्यं अनुष्ठेयं भवति । (इति वेगं तमसानदीं गच्छति, जलंदृष्टवा) आः किमेतत् जलं ? नहि अमृतमेतत् । एषा नदी अतीव ओघवती भाति ।

(इति नद्यां अवतरति, जलेन हस्तपादं प्रक्षाळयति, अंजलिना जलं त्रिवारं पीत्वा) अहो केवलमिदं जलं पीयूषमेव (इति उद्गारं करोति) अहं अतीव तृप्तोऽस्मि । यतः ।

**जलमस्याः परं स्वच्छं । पापघ्नं भाति सर्वदा ।**
**मृतश्चाप्यमृता भान्ति । स्नानपानेन निश्चयम् ।।**

(इति नम्रगात्रः कुम्भंक्षाळयति, कुम्भेन जलं तरङ्गी करोति, कुम्भ जले निमज्जयति, तदा बुड बुड बुड शब्दः भवति ।

(यवनिका पतति)



# पंचमं दृश्यम्

(तमसानद्याः तीरे दशरथः चिन्तयन् अस्ति बुड बुड बुड शब्दः भवति)

**दशरथः** — (बुडबुड शब्दमाकर्णयन्) अहो आप्रातः एकोऽपि जन्तुः अरण्ये नावलोकितः । किन्तु जलपान शब्दस्तु श्रूयते । भवतु किंचित् कालं श्रुत्वा शब्द भेदिनं विसृजेयम् (इति उत्तिष्ठति) यदि विलम्ब्यते एषः पलायितः भवेत् । अधुना सहसा शब्दभेदिं विसृजेयम् । (इति आकर्णान्तिं मौर्वीं आकृष्य शब्दभेदिनं विसृजति)

**श्रवणः** — (नेपथ्ये) हा हतोऽस्मि । हा तात । हे अम्बे मृतोऽस्मि (इत्युच्चैः आक्रोशति)

**दशरथः** — (कर्णंदत्वा, किमेतदापतितं ? कम्पयन्) बालकस्याक्रन्दन मिवाऽयाति । अहं तदाक्रन्दनस्थानं गच्छेयम् । (इति गच्छति)

(यवनिका पतति)



# षष्ठं दृश्यम्

(शल्यप्रोत: रुधिरासिक्ताङ्ग: कुमार: विचेष्टमान: अस्ति । तत: प्रविशति दशरथ:)

**दशरथ:** — (विचेष्टामानं बालं दृष्टवा) एष: कुमार: । किं दारुण-मध्यवसितं मया । अहोबत किं मे अपराद्धं अनेन कुमारेण । (इति सानु-क्रोशं तं पश्यति)

**श्रवण:** — (दशरथं दृष्टवा) भो: ! अहं श्रवण कुमार: । ब्राह्मण पुत्रोऽहम् । अत्रैव दक्षिणत: मे पितारावास्ताम् । तौ पिपासार्दितौ । ताभ्यां कृते जलमानेतुं समागतोऽस्मि । तौ जनुषान्धौ । जलकुम्भमिदं ताभ्यां भवान् प्रयच्छतु । (इति मृत:)

**दशरथ:** — (विषण्ण:) अयं ब्राह्मणकुमार: । बहु पाप: कृत: मया । ब्राह्मणो नहन्तव्य: । किन्तु अज्ञानतया मया ब्रह्महत्या कृत: । बत मे जीवने सर्वाणि अनिमित्तानि मां अनुधावन्ति । (इति संतप्तचित्त:, दु:खातिभरेण घटमुन्नमय्य गच्छन्)

**अहो मे जीवनं सर्वं । तथा पापाविलं भृशम् ।**
**श्रावणे वाहिनीवात्र पङ्किलैर्बुद्‌बुदैर्यथा ॥**

(इति निष्क्रान्त:)

(यवनिकापतति)



# सप्तमं दृश्यम्

(हंजे तनय: एतावत्पर्यन्तं नह्यागत:, इति श्रवणकुमार पितरौ पर-स्परं भाषयन्तौ स्त:)

**पिता** — हन्जे, तनय: अद्य चिरयति कुत: ।

**माता** — अयं सर्वदा उद्यमशीलः। क्षिप्र कार्यंकारी। कदापि विलम्बनं न करोति।

**पिता** — हन्जे, मे हृदयं कुशङ्कया दोलायितं भवति।

**माता** — आर्यं, डिम्भकस्य वन्यमृगात् त्रासो मा भूयात्।

**पिता** — अस्मात् प्रदेशात् तमसा नदी कियत् दूरं विद्यतेत्यनभिज्ञौ आस्ताम्।

**माता** — आर्य, मे हृदयं अत्यन्तं स्पन्दते। यत् किमपि संजातं स्यात् तनयस्येति मे स्फुरति।

**पिता** — हन्जे! तथामावद। शान्तं पापं शान्तं पापम्। तथा मा भूयात्। भगवन्। (इति हस्तौ उन्नमण्य नमस्करोति)

(पादतलस्पर्शया जनित गमन शब्दं श्रुत्वा)

**माता** — भोः श्रुणु गति शब्दः श्रूयते।

**पिता** — (आकर्ण्य) हां गति शब्दः समायाति।

**माता** — आर्य अयं तनयः समागच्छति।

**पिता** — अरे तनय, किमर्थंमेवं चिरयसि।

**माता** — एहि तनय! आवां पुनरुज्जीवितौ तवागमनेत।

(दशरथः प्रविश्य मौनेन तिष्ठति)

**माता** — अरे कुमारक! किं कारणं, त्वं प्रत्युत्तरं न ददासि। कृत्थोऽसि? किं आवयोः सेवया परिश्रान्तोऽसि?

**पिता** — अरे तनय! अनन्तरं त्वं रुष्टो भव। प्रथमतः पानीयं देहि।

**माता** — तनय, त्वमेव आवयोः रक्षकोऽसि।

**पिता** — अरे त्वमेव आवयोः दृष्टिः यष्टिश्च।

**माता** — तनय, श्रवण, जलकुम्भं मे प्रयच्छ। अहं पिपासोपशमं करिष्ये। अरे मे जिह्वा शुष्काभूतारे। (इति हस्तौ प्रसारयति)

(दशरथः शनैः शनैः तयोः पुरतः आगत्य कुम्भं प्रयच्छति)

**माता** — तस्य हस्ताभ्यां पात्रं नयति, तस्य हस्त स्पर्श-संजनित सुखमनुभूय, मनसि) अयं स्पर्शः तनयस्य नहि। अयं कोवा अन्य पुरुषः।

**पिता** — अयि भोः कस्त्वम्।

**माता** — किं भोः मौनमवलम्बसे। प्रत्युत्तरं देहि।

**दशरथः** — पितरौ। (अर्थोक्त्या विरम्य)

**माता** — किं भोः वद संपूर्णं। कोऽसि ?

**दशरथः** — पितरौ ! अहं अयोध्यापतिः। दशरथः।

**माता** — राजन् दशरथ ! भवान् किमर्थं आगतवान् असि।

**पिता** — क्वास्ति अस्मत् तनयः।

**दशरथः** — पितरौ ! तमसानद्यां जनित बुडबुड शब्दं श्रुत्वा गजशङ्कया शब्द भेदिनमिषं अज्ञानतया व्यसर्जयम्। तेन शरपातेन श्रवण-कुमारः मृतः। तस्य कथनानुसारं जलकुम्भमहं आनीतोऽस्मि। (इति सगद्गदं कथयति)

**पितरौ** — हातनय श्रवण (इति सोरस्ताडं रुदन्तः)

**पिता** — राजन् ! तेन किं ते अपराद्धम्। हे अयोध्यापते। भवान् प्रमत्तः अस्ति। आवां अक्षणाभ्यां काणौ नहि वभूवतुः। भ अक्षणाकाणः। श्रवणाभ्यां वधिरः। राजानः स्वार्थिनः भवन्ति।

**माता** — राजाऽधम ! अयं श्रावणः आवयोः तनयः, जीवनत्राता, प्राणाः। किं त्वं जानासि पुत्र प्रेम। राजन्, भवता अविचार्य कर्म कृतम्। धिगस्तुते।

**पिता** — राजन् श्रुणु। त्वं ते कर्मणः फलं इह जन्मन्येव अनुभविष्यसि। त्वमपि पुत्रप्रेम्ना परितप्यमानमानसः, अयि कुमार, हा तनय, अयि मे प्राणाः, इति दंदह्यमान चित्तः, जल्पन् क्रन्दन्, पंचत्वं प्राप्यसि, इति अहं त्वं शापामि। (द्वावपि हा तनय, श्रवण, इति पंचत्वं प्राप्नुतः)

**दशरथः** — (चिन्ताक्रान्त मानसः) अहं अज्ञानतया अकृत्यं अकरवम्। एतत् सर्वं दैवाज्ञया घटितम्। अहं अपुत्रकः "अपुत्रस्य गतिर्नास्ति" इति

शास्त्राणि घोषयन्ति । तस्मात् अहं गतिहीनः । अहं भ्रष्टोजातः । "भ्रष्टस्य कावागतिः" । ) इति विचारयन् भूमावुपविशति) (किंचित्कालानन्तरं सानन्दम्) अनेन ब्राह्मणेन शप्तोऽहं यत् पुत्रप्रेम्णा पंचत्वं प्राप्नुयां इति । अहं पुँन्नाम नरकात् त्रातः भविष्यामि । अहो कियदानन्दं भवति मे । अधुना मे हृदयं श्रवण कुमार वध जनित शोकेन, अनयोः दम्पत्योः शापेन करुणा-द्भुत रसाभ्यां मज्जनोन्मज्जनं कुर्वदस्ति । मे हृदयं करुणाद्भुत रसाभ्यां निर्भरं श्रावणमेघ कुम्भवत् परिपूर्णं भासते । मम दुःखादपि आनन्दः भवति । यत् भवति तत् कल्याणार्थं भवति यतः ।

**भविष्ययाणं नहि शक्नुवन्ति । ज्ञातुं धरण्यां बहुधाबुधाऽपि ।**
**शापस्तु जातो मम जीवनेस्मिन् । वरः प्रियं पुत्रक दर्शनोन्मुखः ।।**

अहं पुत्रक वदनकमल दर्शन सुखमनु भविष्यामि । सत्यं अयं तमसातीरः कल्याण समुत्पादनहेतुः भवति अधुना मे आनन्दस्य अवधिर्नास्ति । अहं पुँन्नामनरकात् मुक्तः (इति हर्षभरेण हृदयेन प्रयाति)

(यवनिका पतति)



# ।। पारीक्षितम् ।।

वन्दे-समुद्रजलशीकर चित्रिताङ्गं ।
शेषाहितल्प-सुखनिद्रित-चिन्मयास्यम् ।।
लक्ष्मीकटाक्ष-चय-चन्दन-चर्चिताङ्गं ।
विष्णुं प्रियं सतत मोक्षदमानताङ्गः ।।

नान्द्यन्ते

**सूत्रधारः** — अये कुटुम्बिनि, एह्यत्र किञ्चित् कथनीयं विद्यते ।

**कुटुम्बिनी** — एषाऽस्मि कथ्यतां आर्यः ।

**सूत्रधारः** — कुटुम्बिनि, बहुकालानन्तरं भागवतकथां नाटकरूपेण प्रदर्शयितुं वयं समुत्सुकास्मः ।

**कुटुम्बिनी** — नाटकस्य नाम किम् ।

**सूत्रधारः** — पारीक्षितम् ।

**कुटुम्बिनी** — भागवतोत्तमं राजानं परीक्षितमुद्दिस्य कृतं नाटकं किं इदम् ?

**सूत्रधारः** — आम् सत्यं यः भागवतकथा मूलकारकः भागवतोत्तमः, तं राजानमुद्दिश्य कृतमिदम् ।

**कुटुम्बिनी** — कोऽयं कविः ? तस्य नाम किम् ?

**सूत्रधारः** — अयं कविः गीर्वाणान्ध्र भाषाप्रवीणः ललित गीतालहर्याः, यशोधरा महाकाव्यस्य अपि च अक्षयगीतरामायणस्य प्रणेता, आन्ध्रदेशीयः, ललित कलाभिलाषी । तस्य नाम परीक्षित् शर्मा ।

**कुटुम्बिनी** — सर्वं चारुतरं प्रतिभान्वितं च भाति । गैर्वाण्यां अश्रूतपूर्णमिदं नाटकम् । अयं कविः ब्राह्मीमय मूर्तिः यतः ।

**संगीत-साहित्य कलाभिमानी । पवित्र संस्कार परीत-चित्तः ॥**
**विराजतेऽत्र प्रतिभान्वितोऽयम् । गीर्वाण-साहित्य विशाललोके ॥**

तस्मात् समुत्सुकास्मि भूमिकाग्रहणे ।

**सूत्रधारः** — एतन्नाटकं स्त्रीभूमिका रहितम्, अत्यन्तभयदं दुःखान्तं च ।

**कुटुम्बिनी** — (आकर्णनमभिनीय) कोऽयं कलकलः ।

**सूत्रधारः** — (आकर्ण्य) एषोऽयं राजा परीक्षित् मृगयार्थं समायाति । एहि गच्छावः । (इति निष्क्रान्तौ)

(ततः प्रविशति मृगयावेषेण उन्नमित धनुः राजा परीक्षित् ।)

**राजा** — एषोऽयं मृगः । (द्विवारं वेगेन नेपथ्यन्तर्भागं गत्वा पूर्ववत् प्रविश्य) अहो ! मृगोऽयं विद्धो न भवति । एषः शरपतनभयात् उत्प्लुत्योत्प्लुत्य वेगे वायुं निहत्य चंक्रमणैः धावति । एनमनुसरणं साम्प्रतं न भवति योग्यं मे । यदि गृहीतं ततः किम् ? न गृहीतं ततः किम् ? अहमकारणं चापल्यात् बाल इव एनमनुसरामि । धिक् मृगयां विरमेयम् । (इति प्रशामित धनुः भवति) बत ! भृशमहं परिश्रान्तोस्मि । शरी सर्वमपि घर्मवारिसिक्तं । शरीरमेतत् धावनेन विदारितं, शतधा चूर्णितं च । आनत्यं उच्छ्वास निश्वास परम्परा मां चलितुमशक्तं करोति । अत्रन्यग्रोधवृक्षस्य, अधस्थित-पाषाण वितर्दिकायां उपविश्य, विश्रान्तिसुखमनुभवेयम् । (इति तथा करोति) आः अयं मन्दसमीरः घर्माविलं मे देहं सशीतलं चर्चयति । अत्र सर्वत्र प्रकृतिः कलामयी दरी दृश्यते । पत्तने सर्वत्रापि रेणुपरीतः अस्वच्छानिलः प्रसरति । (इति समन्ततः विलोक्य] सर्वाङ्ग सुन्दरीयं प्रकृतिः । जगति प्रकृत्याभिन्नं न किञ्चिदन्यत् रमणीयं विद्यते । अहो अतिसौख्यमनुभूयते । क्लेशेन सुखस्य परमावधिः ज्ञायते ।

**वायुना चालिता वल्ली । श्रमयाप्रविदारितम् ॥**
**गात्रं मे सत्वरं वाति । भियेव परिचारिका ॥**

भोगभाग्जनः क्व भोगं नाप्नोति ? सर्वे प्राणिनः सुखमिच्छन्ति । किन्तु एते नगराजिनः सुखरहिताः स्वीयवस्तुचयैः, सर्वं धरातलं, सुखायत्तं कुर्वन्ति । तेषां जन्म सार्थकं भवति । यतः

पीत्वा क्वचिज्जलद-दत्त जलं-महीजाः ।
भुक्त्वाऽनिलं निरत-शीतल-वीचिकालिम् ।।
सोढ्वाच तीक्ष्णकर-सूर्य-मयूखजालम् ।
तन्वन्ति सौख्यमनिशं जगति प्रजानाम् ।।

अहमधुना अपगतश्रमोऽभवम् । पिपासा मे जिह्वां पिण्डी करोति । एतत् सर्वमपि निर्जनारण्यम् । कुत्रापि संलक्ष्यते जलमय प्रदेशः नाति दूरे । चञ्चच्चञ्चरीक झंकार संकुलमेतत् विपिनम् । अपिच क्रूर सत्वावृत्तं, बहुभयदमेतत् । शिलोच्चयावकीर्णं परिसरमेतत् । मृगयार्थं, अज्ञानतया इयन्तं दूरं समागतोस्मि । नात्रकुत्रापि मर्त्येन भवितव्यं । इदं दण्डकारण्यवत् अतिगहनं । पिपासार्दितस्य मे पानीयं कोदास्यति इतः नदी सरस्वती दूरं वर्तते । भवतु यतिष्ये पानीयम् । मामन्यत्र तृष्णा नयति तया वशीकृतोऽहं । इन्द्रियाणि मनः समाकर्षन्ति ।

पञ्चेन्द्रियाणां प्रबलेन जन्तवो ।
जीवन्ति लोके खलु सौख्य-दर्पिताः ।।
षड्वर्ग शत्रूदय भावचोदिताः ।
मृत्युं प्रयान्त्येव महीतले ध्रुवम् ।।

(इति निष्क्रान्तः)

[यवनिका पतति]

* * *

# द्वितीयं दृश्यम्

शमीकमुनेः आश्रमः (एकस्मिन् दिग्विभागे शमीकः पद्मासने तपति) ततः प्रविशति राजा परीक्षित् (इतस्ततः विलोक्य)

**सर्वत्र शान्तता भाति । मुनीनां स्वान्तवत् भृशम् ॥**
**कदापीदं नचस्थानं । लौकिकानां भवत्य हो ॥**

अत्र यत्रकुत्रापि जलेन भवितव्यम् । इति शनैः शनैः चलति] [अग्रे दृष्ट्वा] अयं मुनिः । इदं मुनेः आश्रमस्थानं । एनं जलं पृच्छेयम् । अहं भणितुमपि अशक्तः भवामि । मे जिह्वा शुष्का भूत्वा पञ्चप्राणान् आकर्षति । भवतु पृच्छेयम् ।

१ **अयि भोः मुने अहं राजा परीक्षित् ।**
**पिपासार्दितोऽस्मि पातुं जलं दीयतां ॥**
(प्रत्युत्तरमप्राप्तः तारस्वरेण)

२ **अयि भोः मुने पिपासार्दितोऽहं जलं दीयतां ।**
**अहं भाषितुमप्यशक्तः ॥**
(प्रत्युत्तरमप्राप्तः किञ्चिदुच्चैः)

३ **अयि भोः ब्रह्मन् किं मां निर्लक्ष्यसे ।**
(प्रत्युत्तरमप्राप्तः क्रुद्धः)

किं मे राज्ये तपोधनाः गर्वान्धाः भूत्वा धराधिपतिमपि तृणीकुर्वन्ति ? भवतु अस्य मे प्रभावं दर्शयिष्यामि । [इति परितः विलोक्य तत्र विद्यमान मृतसर्पं धनुष्कोटया उद्धृत्य, राजा मुनेः कण्ठस्कन्धतले संसृज्य, मौनेन निर्गतः]

[ततः प्रविशति कमण्डलुधारी शृङ्गी]

**शृङ्गी** — ओं शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्तु ईतयः नित्यं शुभानि वर्धन्ताम् । [तपस्यन्तं शमीकं विलोक्य क्रोधपरीतमानसः] किमेतत् चित्रं, तपस्यतः मे पितुस्कन्धे मृतसर्पः ? [इति तीक्ष्णं विलोक्य] इदमरण्यं निर्मानुष्यम् । कदापि जनसंचारोऽपि नास्त्येवात्र । कथमेतत् आपतितम् ? केनापि दर्पितेन अधमेन कृतमितिमन्ये ।

**तप्तुं नितान्तं खलु शक्तिहीनाः । सतः परं नाशयितुं यतन्ते ।**
**आदर्शहीनाः भुविभारभूताः । केचित् बृवाः पाशव शक्तियुक्ताः ॥**

एतत् कर्म विधीतस्य तस्य, विनाशकालः संप्राप्तः । कोऽयं दुरात्मा मनुज-पशुः, ममपितुः स्कन्धे, तत्रापि तपस्यतः, मृतसर्पं विसृष्टवान । सर्वभौतिक सौख्यं परित्यज्य, जलपानाशनमपि संत्यज्य, केवल वाताशनेन तपस्यता, मत्पित्रा किमपकृतम् । योऽयं एवं पन्नगमस्राक्षीत्, सः तिग्मतेजसा, तक्षकाशी विषपन्नगेश्वरेण, मद्वाक्य बलात् चोदितेन, सप्तरात्रादितः यमस्य सदनं नेष्यति । (इति शापजलं विसर्जति)

**शमीकः** — (नेत्रे उन्मील्य) कुतोऽत्र मन्योराविर्भावः (पुरतः तनयं श्रृङ्गिनं विलोक्य) किं वत्स, किमेवं स्फुलिङ्ग प्रायैर्वचनैः ज्वलसि, किं कारणमत्र क्रोधस्य ।

**श्रृङ्गी** — जनक, कोवा जाल्मः, स्वविनाशकालमाहूयमानः, अकरणीयं कर्मविधाय, धर्मं तिरस्कृतवान् । तस्मिन् एवं क्रुद्धः अभवम् ।

**शमीकः** — अकारणं त्वं क्रुद्धो भवसि विरम । शान्तिमाप्नुहि । कः किमकरणीयं चकार ।

**श्रृङ्गी** — पितः तव स्कन्धे कोवा मरणमियुष्णुः मृतसर्पं अस्राक्षीत् । तं लंबमानं मृतसर्पं विलोक्य, क्रोधानलेन दंदह्यमान हृदयः अशपमहं तं, यतः सप्तमेऽहनि तं पापिनं, तक्षकः, पन्नगोत्तमः, वैवस्वतस्य सदनं नेता इति ।

**शमीकः** — (अक्षिणी निमील्य किंचित्कालं ध्यात्वा अक्षिण्युन्मील्य) तात श्रृङ्गिन् न मे प्रियं कृतं । अयं नरेन्द्रः । वयं नरेन्द्रस्य विषये निवसामहे । यदि राजा न संरक्षेत्, पीडा भवेत् परमस्माकं । वयं धर्ममाचरितुं नशक्नुयाम । क्षुधितेन तेन अद्य क्षान्तेन कृतं मन्ये अजानता । कस्मात् त्वया सहसा दुष्कृतं बाल्यात् कृतं । अयं नृपः अस्मत्तः शापं नार्हति सर्वथा । शम एव यतीनां भूषणं सिद्धिकारकश्च ।

**श्रृङ्गी** — अपकारकः अनुपदमेव शिक्षणीयः । जनक ! तत्र कापि विचारणा मास्तु ।

**शमीकः** — अयं अधार्मिकः नहि । मान्यः प्रजा रक्षकः ।

शृङ्गी — जनक ! नायं प्रजारक्षकः किंतु प्रजाभक्षकः । अयं समापन्न विपत्ति कालः, अप्रियं कृतवानस्माकं ।

शमीकः — तात, अयं नरपतिः सम्राट् साक्षात् महाभागवतः धर्मपालः, राजर्षिः, हयमेधराट् राजा परीक्षित् ।

शृङ्गी — (आश्चर्येण) जनक, किमयं राजा परीक्षित् । (विलपन्) बहु अपराद्धं मया । अनालोच्य शापं दत्तं । धिगेतत् मे जन्म । महापुरुषं धर्मपालं राजानं परीक्षितम् शप्तवानस्मि । न मे प्रायश्चित्तो विद्यते । तपोधनाः सुलभ क्रोधिनः भवन्ति । क्रोधः तापसानां अभूषणं भवति । मे वाक् परशुः आकुण्ठितो भवति । न केषां अपि शक्यं मोघीकर्तुं भवति । मे जिह्वा सप्तजिह्व प्राया । न कोऽपि शामयितुं शक्तः भवति । (इति विलपति)

शमीकः — वत्स, विलापेन किं प्रयोजनं । शतथा धर्ममालोऽयम् । अस्मत्तः शापं नार्हति । नह्यस्य कर्मणः विद्यते ते प्रायश्चित्तम् ।

शृङ्गी — समापन्न विपत्तिकाले देवांश संभूतानां धियः अपि मलिनी भवन्ति जनक ।

शमीकः — तात तथा न वक्तव्यं । कर्म सर्वथा विचिन्त्य कर्तव्यं । किमुत शाप विषये ।

शृङ्गी — पितः, अद्यप्रभृति शममास्थाय यच्छक्यं कर्तुं तत् करिष्यामि । तस्मात् तात बालेन कृश बुद्धिना मम पुत्रेण शप्तोऽसीति नृपायवार्तां प्रेषयिष्ये ।

शमीकः — बाल विप्राः पश्चिमबुद्धयः । क्रियतां यद्रोचते । यत् भव्यं तत् भाविता । ओं शान्ति श्शान्ति श्शान्तिः ।

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

रङ्गमंचमध्ये सिंहासनं विद्यते। सिंहासनस्य उभयतः ब्राह्मणाः मन्त्रिणश्च तिष्ठन्ति। (राजा परीक्षित् प्रविशति)

**स्तुतिपाठकः** — परम भागवतोत्तम, धर्मपाल, राजर्षे परीक्षिन्महाराज, जयतु नितरां जयतेतरां।

**ब्राह्मणाः** — "ध्रुवन्ते राजा वरुणो ध्रुवं देवो बृहस्पतिः। ध्रुवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्"। (राजा परीक्षित् सिंहासने उपविशति सर्वे उपविशन्ति)

**राजा** — अयि भोः सदस्याः सकल धरातलं सौख्यमयं विधातुं चन्द्रवंशजाः समुत्पन्नाः। सर्वत्र महीतले सकल प्राणिनां सुखं भवतीति, सर्वे सुखिनः सन्तीति वयं आशास्महे।

**मन्त्री** — राजान् चन्द्र वंशीयानां पालने, सकल धरातलं, धर्मार्थं काम चतुर्विध पुरुषार्थैः, यथाक्रमं सुखं अनुभवतीति, विशेषतः, युष्मदीय छत्रच्छायायां, सर्वे सुखिनः सन्तीति कथने, पुनरुक्तिः भवति।

**पुरोहितः** — सर्वोऽपि आबाल गोपालं विकसित वक्त्राम्बुजः जीवति।

**ब्राह्मणाः** — **चन्द्रो यथा भाति च शारदाम्बरे।**
**पङ्केरुह श्शारद सारसान्तरे।**
**राजान् त्वमेवासि तथा महीतले।**
**सन्तोष भारेण विभान्ति नागराः॥**

**ब्राह्मणः** — महाराज सर्वत्र जगत् आनन्दे नरीनर्ति।

**क्वचित्कनकमण्डनाडम्बरं। क्वचित्क्वणन वीणयानंदितम्।**
**क्वचिन्मधुर नाट्याभिरंजितं। क्वचिन्नधुर भोज्याभिनंदितम्।**

**सर्वे** — व्हाव्या इतिहाहारवं कुर्वन्ति।

भटः — (प्रविश्य) राजान् गौरमुखोनाम शमीकमुनेः शिष्यः तत्र भवते वार्तामानीय समागतः द्वारितिष्ठति ।

राजा — किं तत्रभवतः महातापमात् मे संदेशः ? प्रवेश्यतामनुपदम् ।

भटः — यथाऽज्ञापयति देवः (इति प्रणम्य गच्छति)

(ततः प्रविशति गौरमुखः)

गौरमुखः — राजन् आचन्द्र तारार्कं ते चरितं लोकव्याप्तं भवतु । (इत्याशीः प्रददाति)

राजा — गौरमुख अभिवादये तत्र भवन्तं (इति उत्थाय प्रणमति) अपिच पृच्छति ।

**अप्यस्ति कुशलं सर्वं । धरण्यां मम पालने ।**
**श्रोतुमिच्छामि संदेशं । निस्सन्देहं निवेद्यताम् ॥**

गौरमुख — भवतां पालने धरणी चक्रं सर्वं सुखमनुभवत्येव महाराज किंतु ।

मन्त्री — किंतु किं ? वद ।

राजा — उच्यतां कोऽयं संदेशः ।

ब्राह्मणाः — निवेद्यतां मुनेः संदेशः ।

राजा — सर्वहितैषिणां मुनीनां संदेशः शिरोधार्यः भवति चन्द्र वंशीयानाम् ।

गौरमुखः — राजन् ! महातापसः शमीकस्य स्कन्धे भवता मृतसर्पः निक्षिप्तः । तस्मात् सुलभ क्रोधेन तस्य पुत्रेण श्रृङ्गिणा सप्तरात्रेण तक्षकेन भवतः मृत्युः भविष्यतीति शप्तोऽसि तस्मात् रक्षां कुरुष्वेति । केनचिदपि तदन्यथाकर्तुं न शक्यं भवति, इतिच कथितं । तत्र हितार्थिना तेन प्रेषितोऽहं वार्तयितुं । (इत्यधोमुखः तिष्ठति)

मन्त्री — (कृत्थः) गौरमुख ! किं बदसि । इय राज्ञः परीक्षितः सभा । त्वं राजसभा दर्शनेन कम्पितोऽसीतिमन्ये । त्वं त्वं राजसभायां भणसि । त्वं

राजमर्यादां न जानासि। कं हितं कथनीयं कमहितं कथनीयं इति विचक्षणा ज्ञानं तपोधनाय ते नास्ति। त्वमलौकिकोऽसि विरमते भाषणं।

**राजा** — गौरमुख, गम्यतां (गौरमुखः गच्छति) शिरसि दक्षिणहस्तं निक्षिप्य विचार चित्तः भवति) अयि सभास्तारा: श्रृण्वन्तु भवन्तः। ह्यः मृगयार्थं गते मयि पिपासापीडिते सति अज्ञानतया किंकृतं इति ज्ञातुमपि नहि शक्यते। बत किंकृतं मया।

**क्षुत्पिपासादि तापेन। परीश्रान्तोऽभवं तदा।**
**न जाने किं कृतं तत्र। बुद्धिः कर्मानुसारिणी॥**

(इति विषण्ण वदनः अधोमुखश्चिन्तयति) जातस्य मरणं ध्रुवं। मरणं, हेतु पुरस्सरं भवति। एतत् अवस्थामात्रं भवति। नहि विचारः कर्तव्यः।

**ब्राह्मणः** — अयि भोः राजन् न भवता चिन्ताकार्या। वयं जानीमहे मन्त्रशास्त्र तन्त्रादिकं। सर्वमपि सुमुखं सुखान्तं भविष्यति।

**मन्त्री** — राजन् श्वः प्रभातेऽहं सर्वशिल्पिनः समाहूय समुद्रे एकस्तम्भ सौधं निर्माय भवतां वासः कल्पयेयं। न कापिहानिः भविष्यति। अहमधुनैव सर्व व्यवस्थां कर्तुं गच्छेयम्।

**ब्राह्मणः** — राजन् सर्वेऽपि भटाः वेत्रहस्ताः गारुड मन्त्रोच्चारणैः तत्र आहिण्ड मानाः भविष्यन्ति। सकल वेद शास्त्र पारंगताः अनवरतं वेदाऽध्ययनं करिष्यन्ति। अपिच अपर धन्वन्तरिः आयुर्वेत्ता मन्त्रशास्त्रद्रष्टा, स्रष्टा, च काश्यपः, विद्यते। सः पन्नगारिमन्त्रेण, दग्धमपि, चेतनं करोति यथा पूर्वं। कियत् धनं तेन अनुमीयते तावत् धनं वयं दास्यामः। श्वः सः आहूतः भविष्यति। वयं सर्वमपि सुकरं करिष्यामः। अस्मिन् विषये चिन्ता न कार्या।

**राजा** — केनचिदपि तदन्यथाकर्तुं न शक्यं भवतीति कथितं। वयं विफल प्रयत्नाः भवेम।

**ब्राह्मणः** — राजन्! मन्त्र शास्त्रावरुद्धं, नकिमपि धरातले भवितुमर्हति। काश्यपः चतुर्दश भुवनेषु विख्यातः भिषक्। स एव तक्षक विषवेग निहन्ता।
( नेपथ्ये घण्टरावः )

**पुरोहितः** — घण्टारावः श्रूयते राजन् माध्यान्हिक कर्त्तव्यानुष्ठानवेला भवति आगम्यताम् । ( राजा उत्थाय चलति )

**वेत्रहस्तः** — राजन् इतस्ततः ( इति मार्गं दर्शयति )

सर्वे गच्छन्ति

( यवनिका पतति )

* * *

# चतुर्थं दृश्यम्

( ततः प्रविशति काश्यपः मन्त्रमुच्चारयन् ) स्वस्तिर्मानुषेभ्यः । शंनो अस्तु द्विपदे । शंचतुष्पदे । ओं शान्तिः शान्तिः शान्तिः । (तक्षकः तस्य अभिमुखो भवति)

**तक्षकः** — नमांसि महाब्राह्मणे काश्यपाय ।

**काश्यपः** — मनोरथ सिद्धिरस्तु ।

**तक्षकः** — किं काश्यप ? भवान् त्वरितः क्वयाति ।

**काश्यपः** — किञ्चिदनुपदं करणीयमस्ति । तस्मात् अहं गच्छामि ।

**तक्षकः** — कुत्र किं चिकीर्षति भवान् ।

**काश्यपः** — कुरुकुलोत्पन्ने, परीक्षिन्मन्दिरे चिकीर्षामि । तस्मात् तत्र गच्छामि ।

**तक्षकः** — राज्ञः परीक्षितः मन्दिरम् ।

**काश्यपः** — हाँ सत्यं परीक्षिन्मन्दिरम् ।

**तक्षकः** — तत्र तावत् किं कार्यं विद्यते

काश्यपः — **यतो बुद्धि स्ततो कर्म । यतः कार्यं ततो जयः ।**
**कुशाग्रमेधसां सन्ति । कर्तव्यानि महीतले ॥**

**तक्षकः** — काश्यप ! अद्य भवता किं क्रियते, क्व गम्यते इति पृष्ठम् ।

**काश्यपः** — अद्य तं परीक्षितं पन्नग श्रेष्ठः तक्षकः तेजसा प्रधक्ष्यति ।

**तक्षकः** — भवान् तत्र गत्वा किं करिष्यति ।

**काश्यपः** — अग्नितेजसा पन्नगेन्द्रेण दष्टं, तं सद्यः, अपज्वरं कर्तुं त्वरितं गच्छामि ।

**तक्षकः** — ब्रह्मन् ! अहं स तक्षकः ।

**काश्यपः** — त्वं कुतोऽत्रागतोऽसि ।

**तक्षकः** — तं महीपतिं धक्ष्यामि, तस्मात् अहं तत्र गच्छामि ।

**काश्यपः** — अहं रक्षयिष्यामि तं नृपं, तस्मात् गच्छामि ।

**तक्षकः** — मयादष्टं चिकित्सुतुं, त्वं न शक्तः ।

**काश्यपः** — अहं शक्तोऽस्मि ।

**तक्षकः** — त्वमसमर्थोऽसि । निवर्तस्व ।

काश्यपः — **विद्याबल समायत्ता । बुद्धिर्मे श्रुणु तक्षक ।**
**असाध्यं साध्यमेवाऽस्ति । नास्ति लेशोऽपि संशयः ॥**

**तक्षकः** — तया विद्यया त्वं न किमपि कर्तुं शक्नोषि ।

**काश्यपः** — त्वया दष्टं तं नृपतिं जीवन्तं करिष्यामि ।

**तक्षकः** — किं तव शक्तिं परीक्ष्येऽहम् ?

**काश्यपः** — परीक्षस्व ।

**तक्षकः** — (पार्श्वभागे स्थित वृक्षं दंशति दीपोपशमनं भवति) काश्यप ! अयं न्यग्रोध वृक्षः मया दष्टः जीवयतम् ।

**काश्यपः** — ओं ह्रीं ह्रां भं इति मंत्रयन् वृक्षं समजीवयत् ( दीपज्वलनं वृक्षस्य भावः )

**तक्षकः** — ब्रह्मन् एतत् महदद्भुतं त्वयि विद्यते ।

**काश्यपः** — तपोमहिम्ना ब्राह्मणः असाध्यं साध्यं करिष्यति । तपोविहीन ब्राह्मणः अधमः भूत्वा न किमपि साधयितुं समर्थः भवति । ब्राह्मणानां तपोमहिमा केवलं महिमा ।

**तक्षकः** — तपोधन, कमर्थं त्वं अभिप्रेतुं यासि ।

**काश्यपः** — धनार्थी भूत्वा तत्र गच्छामि ।

**तक्षकः** — काश्यप ! तस्मात् नृपात् फलं यत् प्राप्तुं अभिलाषितं तेऽस्ति, तत् अहमेव तुभ्यं प्रदास्यामि ।

**काश्यपः** — तत् धनं यत् तेन दीयते, त्वमेव दास्यसि ।

**तक्षकः** — अहं अवश्यं दास्यामि । अपिच विप्र शापाभिभूते, नराधिपे क्षीणाऽयुषि, घटमानस्य ते सिद्धिः, संशयिता भवेत् ।

**काश्यपः** — ( अक्षिणी निमील्य दिव्य ज्ञानेन तं नृपतिं क्षीणायुषं पाण्डवेयं विलोक्य ) ओम् सत्यं त्वदुदीरितं भवति । भुजङ्गम, देहिमे अर्बुद परिमित धनं, निवर्तिष्येऽहम् ।

**तक्षकः** — एतस्मादधिकं धनं अहं प्रदास्यामि । द्विजोत्तम ससुखं भवान् निवर्ततु ( इति धनग्रंथिं ददाति )

**काश्यपः** — ( नीत्वा ) इष्ठकाम्यसिद्धिरस्तु ( इति आशीः कृत्वा ]

**धन्योऽस्मि नूनं खलुतक्षकाख्य । विना प्रयासं प्रभवामि लोके ।**
**धनी, सुखी, भोगपरीत चेताः । सदाच ते कामितमस्तुपूर्णम् ॥**

[ इति गच्छति ]

**तक्षकः** — [ अट्टहासं कृत्वा ] मया वञ्चितोऽसौ काश्यपः । मे यत्नः निस्संशयं सफलं भविष्यति । अयं परीक्षिन्महाराजा प्रयत्नतः, विषहरैः गदैः मन्त्रैः संरक्ष्यमाणः

एकस्तम्भ सौधे समुद्रे निवसति, इति श्रुतं। तस्मात् राजा मायायोगेन वञ्चयितव्यः मया। भवतु प्रयतिष्ये। (इति निष्क्रान्तः)

(यवनिका पतति)

* * *

## पंचमं दृश्यम्

(सिंहासनासीनः तक्षकः। अन्यौ द्वौ भुजङ्गमौ पार्श्वे उपविश्य विचारयन्तौ स्तः)

प्रथमः — राजन् तक्षक आवां किमर्थमाहूतौ।

तक्षकः — अयि सुहृदौ शापवशात् अकरणीयं कार्यं कर्तुं मम विद्यते।

प्रथमः — तत् किं कथ्यतां भोः।

द्वितीयः — आवां भवता किं आज्ञाप्यते तत् कर्तुं समुद्यतौ निवेदयतु।

तक्षकः — अयि मित्रोत्तमौ श्रृणतां। श्रृङ्गिणा राजा परीक्षित् तक्षक बिषेण निधनं समागमिष्यतीति शप्तः।

प्रथमः — किं राजा परीक्षित् शप्तः। अहो किमेतत् वैपरीत्यं।

द्वितीयः — कर्मकः स्वकृतमत्रैव भुंक्ते।

तक्षकः — अनालोच्य कृतं तेन।

प्रथमः — किं कर्म कृतं तेन।

तक्षकः — कुकर्म कृतं तेन।

द्वितीयः — किं तत्।

तक्षकः — अयि मित्रोत्तमौ श्रुणुतां भवन्तौ। पिपासार्दितः राजा

परीक्षित्, जपन्तं श्रृङ्गिगणः पितरं शमीकं, अजानन्, मत्सरेण तस्य स्कन्धे मृतसर्पं निक्षिप्तवान्। तत् दृष्टेन तस्य पुत्रेण श्रृङ्गिगणा राजा परीक्षित्, सप्तरात्रेण तक्षकेन पञ्चत्वं नेष्यतीति शप्तः।

**प्रथमः** — बत! लोके न जानाति विद्वानपि, किं कस्य श्वो भविष्यति।

**द्वितीयः** — सर्वजन्तूनां मरणस्य किमपि कारणं भवति।

**प्रथमः** — धर्मरक्षितुः परीक्षितः इयमवस्था संजाता इति स्वप्नेऽपि नकोऽपि चिन्तयत्येवम्।

**तक्षकः** — प्रस्तुतमनुसरामः श्रुणुतां। परीक्षिन्महाराजः मन्त्रिभिश्चैव संमन्त्र्य एकस्तम्भ प्रासादं कारयित्वा तत्रैव मन्त्रिपुरोहितैः, विविधमन्त्रोच्चारणैः, अनेक सायुध भटवर्गैः, परिरक्षमाणः अस्ति। सः केवलं कंदमूलानि जग्ध्वा, दिवसान् संयापयतीति जनश्रुतिः।

**प्रथमः** — शापमूलकत्वात् श्वोवा, परश्वोवा, अयं राजा मृतो भवष्यति। तथाऽपि आत्मानं परिरक्षितुं यतते।

**द्वितीयः** — पराक्रमशालिनापि प्राणाः रुचिराः भवन्ति।

**तक्षकः** — प्रथमतः युवाभ्यां राज्ञः परीक्षितः मन्दिरं गन्तव्यं।

**प्रथमः** — तत्रगन्तुं अहं अशक्नुरस्मि।

**द्वितीयः** — अधुना राज्ञः मन्दिरे सर्वे खड्गहस्ताः गारुड मन्त्रोच्चारणां कुर्वन्तः आहिण्डमानाः जाग्रति। यदि दृष्टिपथं भवेव आवयोः मरणमेव।

**तक्षकः** — श्वः तत्र मया प्रवेशः कर्तव्यः।

**प्रथमः** — कथं भवता विधीयते प्रविश्यते च।

**तक्षकः**— श्रुणुतां राजा परीक्षित् धर्ममार्गानुसारीमहानुभावः। ब्राह्मण पक्षपाती। ब्राह्मणदत्तं अविचार्य गृहणाति। तस्मात् युवाभ्यां ब्राह्मण रुनवेषाभ्यां तत्र गन्तव्यम्।

**प्रथमः** — तत्र कथं गन्तव्यम्।

तक्षकः — शुचिर्भूत्वा ब्राह्मणवेषाभ्यां फलपुष्पाणि गृहीत्वा राज्ञे दातव्यानीति उक्त्वा प्रवेष्ठव्यं।

द्वितीयः — मायावेषेण प्रवेष्टव्यमिति आज्ञाण्यते भवता। आवां तथा गन्तुं शक्नुवः (इति प्रथमेन द्वितीयस्यकर्णे) इदं योग्य मेव खलु आवयोः।

प्रथमः — आम् इदं योग्यं (इति शिरः कम्पनं करोति)

तक्षकः — श्वः सप्तमः दिवसः भविष्यति युवाभ्यां गन्तव्यं। अहं सूक्ष्म कीटक रुपेण, एकस्मिम् फले गुप्तः भूत्वा, यदा सः राजा फलाघ्राणं करोति, तदा तं दष्टवा निजरुपेण बहिरागच्छेयम्।

प्रथमः — राजन् तक्षक, गच्छावः आवां। (इति नमस्कुरुतः)

तक्षकः — कार्यं निर्विघ्नं समाप्ति भूयात्। जयोस्तु (इति गच्छति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(पीताम्बरधारी वैष्णव साम्प्रदाय तिलकाञ्चितः भूत्वा अधः पीठे उपविशति) उभयपार्श्वो तत्रैव ब्राह्मणमन्त्रिपुरोहिताः तत्र उपविशन्ति।

वेत्रहस्तः — राजन् परमयोगीन्द्राः शुकयोगीन्द्राः समागच्छन्ति।

राजा — (ससंभ्रमं समुत्थाय प्रत्यभिमुखं गत्वा पादौप्रक्षाळच अन्तः आनयति) अयि भोः शुकयोगीन्द्राः आसनेऽस्मिन् सुखेन उपविशन्तु (इति पीठं दर्शयति शुकयोगीन्द्रः उपविशति, राजा तस्याभिमुखं अन्यस्मिंन् पीठे उपविशति)

शुकः — परीक्षिन्नरेन्द्र ! जानाम्यहं सर्वं यत् भूतं। तस्मात् स्वयं, धर्मपालं, हयमेधराजं, त्वां महाभागवतपुराणं, उत्तम श्लोक प्राप्त्यर्थं उत्तमलोक प्राप्त्यर्थं च श्रावयितुं स्वयं समागतोऽस्मि।

राजा — धन्योऽस्मि । अनुगृहीतोऽस्मि । (इति नमस्करोति)

शुकः — (भागवतं पठति)

इदं भागवतं राजन् । पुराणं मुनिनाकृतम् ।
अधीतं तत्पुराणं तु । द्वापरे पितृ सन्निधौ ॥

मयापुरामहाराज । समधीतं प्रियं भृशं ।
तदहंतेभिदास्यामि । स्यान्मुकुन्दे मतिप्रियम् ॥

योगिनां नृप निर्णीतं । हरेर्नामानुकीर्तनम् ।
यस्यचित्तं भवत्यस्मिन् । तस्य सर्वं भविष्यति ॥

(भटः प्रविश्य)

भटः — राजन् ब्राह्मणोत्तमौ तत्र भवन्तं द्रष्टुं फलपुष्पसंभारैः द्वारि तिष्ठतः ।

राजा — अनुपदं प्रवेशय ।

भटः — (गच्छति) ततः प्रविशतः ब्राह्मणौ ।

प्रथमः — अयि भोः राजन् यथा निदिष्टमस्तु । साक्षात् शुकयोगीन्द्रः महाभागवत पुराणं भवतः उत्तम लोक प्राप्त्यर्थं श्रावयतीति श्रुत्वा अधुना दृष्टवाच प्रमुदितोऽस्मि ।

द्वितीयः — महाराजन् भवान् धन्योऽस्ति । नूनं उत्तम श्लोकोऽस्ति । अवश्यं भवान् उत्तम लोकान् प्राप्नोतु । तुभ्यं उपायनमिव स्वादुफलानि अतिरुचिराणि आवाभ्यां समाहृतानि । (इति तत्र स्थापयतः)

राजा — अयि विप्रौ अत्रोपविशताम् । (तौ उपविशतः)

प्रथमः — राजन् निराहारेण आत्मानं शोषयितुं नयुक्तं । दुग्धंवा उताहो फलंवा अनुभोक्तव्यं इति ममाभिप्रायः ।

द्वितीयः — राजन् अत्यन्त स्वादुफलानि आवाभ्यां समाहृतानि ।तेभ्यः एकं फलं गृहीत्वा भुञ्जतु भवान् ।

राजा — अयि भोः मन्त्रिवर्याः। वेदपारगाः ब्राह्मणाः, अमात्याः सहृदश्च भुञ्जन्तु भवन्तः एतानि फलानि (इतितेभ्यः फलदानं करोति अवशिष्टं फलं स्वयं गृहणाति । फलंजिघ्रति, पञ्चत्वं प्राप्नोति) सर्वे हाहाकारं कुर्वन्ति ।

शुकः — ओं शान्तिः शान्तिः शान्तिः ।

(यवनिका पतति)

* * *



## ।। नर्तनशाला ।।

**नमामि तां दैविकशक्तिशालिनीं । सचेतनाऽचेतन वस्तु संचये ।**
**विभिन्नरुपेण विशालभूतले । शिवां जगन्नाटक सूत्रधारिणीम् ।।**

नान्द्यन्ते

**सूत्रधारः** — अयि, जीवन सहभागिनि । सत्वरं इतः एहि ।

**नटी** — इयमस्मि देव ! निवेद्यतां ।

**सूत्रधारः** — हञ्जे ! अद्य वयं नर्तनशालां नाम नाटकं दुर्भिक्षा निवारणार्थं प्रदर्शयितुं समुत्सुकास्मः । तस्मिन् नाटके त्वया पात्र धारणं कर्तव्यमस्ति ।

**नटी** — यदि रोचते मह्यं नाटकमिदं, अवश्यं पात्र ग्रहणे उद्युक्ता भवेयम् । कोयं कविः तस्य परिचयः कः ।

**सूत्रधारः** — अयं महाकविः गीर्वाणान्ध्र भाषाप्रवीणः । अयं ललित गीत-लहरीं, यशोधरा महाकाव्यं अपिच अक्षयगीत रामायण काव्यं च विलिखितवान् । अयं भारतीय संस्कृति प्रेमिकः । अस्यनाम परीक्षित् शर्मा । अयमान्ध्रदेशीयः ।

**नटी** — आर्य अस्मिन् शरन्नवरात्र महोत्सवे इदं नाटकं यदि प्रयोक्ष्यते तर्हि तस्मिन् पात्रधारणं कर्तुं समुत्सुकाऽस्मि ।

**सूत्रधारः** — आर्याणि शारदमुद्दिश्य किञ्चित् गीतं श्रावय ।

**नटी** — श्रूयतां–

**तुहिनकिरण जालैश्शर्वरीं तां निगृहय ।**
**शरदि मधुरमूर्तिश्चन्द्रमाश्चन्द्रिकायाम् ।**
**विकसित कुमुदानां नव्यसौरभ्य मत्तः ।**
**रमयति सरसाङ्गीं चुम्बनैश्चारुहासैः ।।**

**सूत्रधारः** — अहो ते बुद्धिकल्पनाचातुर्यं।

**नटी** — ( श्रवणमभिनीय ) कुतोत्रस्त्रीणां भाषणं भवति।

**सूत्रधारः** — अयं अन्तःपुर कोलाहलः इव संदृश्यते। ( इति आकर्णयति )

**नटी** — आम् अयं तथ्यं अन्तपुर कोलाहलः।

**सूत्रधारः** —हञ्जे जानासित्वं। इतः सैरन्ध्रीसुदेष्णामञ्जरीचन्द्रिकाः पर्व दिवस मण्डनार्थं पुष्पापचयाय प्रविशन्ति। एहि गच्छावः ( इति निष्क्रान्तौ )

( विराटनगरे विराटराज्ञः निकेतनम्। सुदेष्णायाः उभय पार्श्वयोः याज्ञसेनी सैरन्ध्री अन्याः अन्तपुर परिचारिकाश्च उपविशन्ति )

**सुदेष्णा** — सैरन्ध्रि, मदनोद्याने शेफालिका पुष्पाणि, पारिजात कुसुमानि, चम्पा मल्लिकाः विरचय।

**सैरन्ध्री** — तथैव राज्ञि ( इति पुष्पपात्रंनीत्वा गच्छति )

**सुदेष्णा** — हञ्जे पल्लवि, मया अभ्यञ्जन स्नानं कर्तव्यमद्य। स्नानगृहे उष्णोदकं, अङ्गोद्वर्तनार्थम् मुद्गचूर्णमिश्रित चणकचूर्णं अपिच गन्धिलतैलद्रव्याणिच संस्थापय। मयूरपिच्छ चित्रितं नीलाम्बर चीरं नील निचोलं च स्थापय। शरीर संमार्जनार्थं वस्त्रशकलं तु माविस्मर।

**पल्लवी** — राज्ञि सर्व वस्तु संचयैः स्नानगृहं सज्जीकरिष्यामि। (इति गच्छति)

**सुदेष्णा** — ( गच्छन्त्यः आहूय ) हञ्जे श्रृणु मम केलीगृहे शयनमन्दिरं धौत वस्त्रैस्समलंकृत्य सकल गंधिल कुसुम निचयैः सर्वधूपैः आघ्रायितं कृत्वा सुसज्जितं कुरु।

**पल्लवी** — यथोक्तं करिष्ये राज्ञि ( इति गच्छति )

**मञ्जरी** — चन्द्रिके! सैरन्ध्री अधुना पुष्पाणि समाहर्तुं उद्यानं गतवती। पुष्पाहरणानन्तरं आवाभ्यां राज्ञी सुदेष्णा अलङ्करणीया। भवत्या कुत्रापि नगन्तव्यम्।

**चन्द्रिका** — हञ्जे मञ्जरि, अहं क गच्छेयं अन्तःपुरं संत्यज्य। आवाभ्यां सकलान्तपुरमद्य अलङ्करणीयं विद्यते।

**मन्जरी** — चन्द्रिके ! अन्तःपुरालङ्करणं आवाभ्यां न कर्तव्यं। विद्यते सैरन्ध्री सर्वकर्मसु कुशलिनी । तया सर्वं विधास्यते ।

**चन्द्रिका** — सा अतीव कुशला । सैरन्ध्री इति तस्याः नाम केवलं द्योतयति तस्याः कौशल्यम् ।

**सुदेष्णा** — सख्यौ सैरन्ध्री अस्माकं सर्वेषामपि अत्यन्तं विश्वसनीया भवति । साच गन्धर्वाणां पत्नी । अस्माभिः सा साधु दर्शनीया । सा काल वैपरीत्येन अस्मदीय सुकृत परिपाकेन अस्मद्गृहे परिचारिका संजाता । सा महाराज्ञीलक्षण संपन्ना भाति ।

**मन्जरी** — सखि सुदेष्णे तदीयावासेन विराट नगरी श्रृङ्गार रस परिप्लाविनी भाति ।

**चन्द्रिका** — तस्याः आगमनेन अन्तः पुरः सकल कलाप्रपूर्णः विलसति ।

**सुदेष्णा** — न केवलं अन्तः पुरः सर्वं विराटनगरं सुभिक्षं सानन्दं प्रतिभावति ।

**मन्जरी** — सुष्टु भणितं भवत्या ।

**सुदेष्णा** — सा पाण्डवानां गृहेपि परिचारिका रूपेण कुशलं कर्म अकरोत् इति कथितवती ।

**चन्द्रिका** — सर्वं चारुतरं शोभते । सा अतीव तज्ञा भाति। (ततः प्रविशति वेत्रवती )

**वेत्रवती** — ( नमस्कृत्य ) अयिराज्ञि भवत्याः सोदरः राजा कीचकः समायाति ( इति विज्ञापयति )

**सुदेष्णा** — आयातु प्रवेशय ।

**वेत्रवती** — तथैव ( इत्युक्त्वा प्रणम्य गच्छति )

**मन्जरी** — चन्द्रिके एहि आवां गच्छावः शयन मन्दिराऽलङ्करणार्थम् । ( इति गच्छतः ततः प्रविशति कीचकः )

( कीचकः सुदेष्णायाः समीपं प्रहसन् गच्छति )

**कीचकः** — अग्रजे सुदेष्णे !

**सुदेष्णा** — किं रे उल्कापातवत् अन्तःपुरं हठात् प्रविष्टोऽसि ।

**कीचकः** — अयं राजा अकर्मको भूत्वा अकारणं कदापि नागच्छति।

**सुदेष्णा** — किं विद्यते तवाऽत्र अन्तःपुरे करणीयम्।

**कीचकः** — यदि त्वं मम साहाय्यं करिष्यसि तर्हि अन्तपुरे रमणीयं करणीयं विद्यते।

**सुदेष्णा** — विराटराज्ञः गृहे अपूर्णं रमणीयं करणीयं किंते विद्यते।

**कीचकः** — [ उस् ] उच्चैर्मांविद भित्तिः कर्णिका भविष्यति। एतत् कर्म रहसि भवत्या साधयितव्यं विद्यते।

**सुदेष्णा** — सोदर, किं कर्म विद्यते प्रथमतः कथय। अनन्तरं साधयितुं प्रयतिष्ये।

**कीचकः** — भवती मे अग्रजा। एतत् कर्म भवत्या अध्यवसितव्यम्।

**सुदेष्णा** — निवेदय रे प्रथमम्।

**कीचकः** — [ इतस्ततः विलोक्य अग्रजायाः कर्णे रहसि ] विराटस्यराज्ञः निवेशने अपिच अन्तःपुरे, नेयं मया जातु दृष्टा कासा ?

**सुदेष्णा** — [ साभिप्रायं ] अरे विपुलं सविस्तरं वद केयं इति।

**कीचकः** — अत्रनकोऽपि विद्यते खलु।

**सुदेष्णा** — नकोऽपि विद्यते आवां विना।

**कीचकः** — अग्रजे श्रृणु।

**सुन्दराङ्गी विशालाक्षी। विलासपरिसर्पिणी।**
**उन्मादं कारयित्री च। कुतः कैषा समागता।।**

**सुदेष्णा** — [ दक्षिणहस्तेन साश्चर्यं मुखं पिधाय ], बत! त्वं कथमेवं प्रवर्तसे।

**कीचकः** — सत्यं तथ्यंच भवत्या प्रोक्तम् अहं कदापि नैवं प्रवर्तितः अभवम्। नाहमपि जाने मदीय वर्तनम्।

सुदेष्णा — त्वं तादृशीं दुर्भावनां संत्यज।

कीचकः — अग्रजे शृणु–

**मथ्नाति चित्तं रसनिस्तुलं मे। नक्तं दिवं कामविवर्धिनीसा।**
**सर्वत्र पश्यामि तदीय रुपं। स्मरामि लावण्य विलास चेष्टाम्॥**

अहं तस्याः वशमभवम्। अस्यां अवस्थायां न मे औषधं विद्यते। इयं ते परिचारिका किम्?

सुदेष्णा — सत्यं एषा मे परिचारिका। किमर्थं ते मनः परिचारिकायां संलग्नं?

कीचकः — सौन्दर्यस्य कुलवर्ग वर्णाः नसन्ति।

सुदेष्णा — न युक्ता अयोग्या च ते भावना।

कीचकः — इयं परिचारिका। किन्तु प्रत्यग्र रुपा प्रतिभाति।

सुदेष्णा — अरे! एषा परिचारिका नीरसाऽकारा। एषा ते अयोग्या। अन्तः पुरे बह्व्यः सुरसुन्दरीसमानाः इन्दुवदनाः विद्यन्ते। ते दृष्टिदोषः संजातः शृणु रे भ्रातः।

**तावकीन दरहास वीक्षणैः। पञ्चबाणनिभ राजयौवतम्।**
**पादनूपुर रवाभिरञ्जितम्। यास्यतीह तवपादसन्निधिम्॥**

तवदृष्टि दोषः संजातः। कामः अन्धः भवति। सः न जानाति युक्तायुक्त विचारणां। त्वं अहार्यनिश्चयाद्विरम।

कीचकः — अग्रजे भवती न जानाति। कला रहस्यं शृणु।

**स्त्रीणां विलासादिकमात्मदृष्टया। पुमान् विजानाति तथा न नारी।**
**महोन्नतं दार्ढ्यं गभीर रुपम्। पुंसां विमुग्धा तरुणी न मर्त्यः॥**

हे भगिनि! एषा स्वरुपायुक्तं कर्म करोति। तस्याः एतत् कर्म नोचितम्।

प्रभूत नागाश्वरथ समलङ्कृतं मनोहरं मम गृहं काञ्चन चित्रभूषितं इयं शोभयतु ।

सुदेष्णा — नाहं जाने ते मनोभिप्रायं कीचक । त्वमेव तस्याः समीपं गत्वा विचारय नाहमस्मिन् कर्मणि नियोक्तव्या ।

कीचकः — त्वं तथा मां आज्ञापय । अहं तस्याः सकाशं गत्वा साधनीयं साधयिष्यामि ।

**शुकीमेनां ग्रहिष्यामि । सुदृढं बाहु पञ्जरे ।**
**कीरवाणी दिवारात्रं । दद्यान्मे मूर्च्छनादिकम् ॥**

(इति हसन् गच्छति)

(यवनिका पतति)

* * *

## द्वितीयं दृश्यम्

(सैरन्ध्री भूमाउपविश्य पुष्पमालां कुर्वन्ति आस्ते । ततः प्रविशति कीचकः हेषां कृत्वा)

**कीचकः** — (तस्याः समीपं गत्वा) कल्याणि कात्वं । कस्मात् त्वं विराटनरं प्राप्तासि मां आचक्ष्व ।

**सैरन्ध्री** — (भयचकिता तमदृष्टवैवस्वीय कर्म कुर्वन्ती आस्ते)

**कीचकः** — भामिनि ! ते रूपं अग्रयं । सौकुमार्यं उत्तमं । ते वक्त्रं शशांङ्क इव निर्मलम् । ते नेत्रे पद्मपत्र निभे । जघनं विशालं । ते वाक्यं परपुष्टरुतोपमम् । एवं रुपा नारी महीतले मया न दृष्टपूर्वा । तरुणि ।

**सर्वदा मां दहत्येव । दावाग्निरिव मन्मथः ।**
**संगमाम्भोधरेण त्वं । मन्मथाऽग्निं प्रशामय ।।**

मत्तेभ गामिनी ! त्वं मत्तः उत्तमं सौख्यं प्राप्नुहि (इति तस्याः समक्षं गच्छति)

**सैरन्ध्री** — (तिरोमुखी भूत्वा) हे सूतपुत्र ! इदं ते नयुक्तं ।

**कीचकः** — कुटिलालके ! त्वं स्वादूनि अमृत कल्पानि विविधानि, पेयानि मनोज्ञानि पिबमाना यथासुखं रममाणा विविधान् भोगान् सौभाग्यं उत्तमैः भोगैः अनुभवस्व ।

**सैरन्ध्री** — (उत्थाय किंचित् दूरे उपविशति) सूतपुत्र, त्वं अकथनीयं भाषसे । विरम त्वदीय भाषणम् ।

**कीचकः** — अहो ते वाक्षु अनिर्वचनीय माधुर्यता स्पन्दते । त्वदर्थं मे पुरातनदारान् ते दास्यः करिष्यामि । अहं स्वयं ते दासः भविष्यामि । अहं ते वशगः भविष्यायि । श्रुणु रति सुन्दरि !

**अधार्यमाणा मालेव । राजसे नैव सुन्दरी ।**
**संमर्दं नैव राजन्ते । वनिता मणयः प्रियम् ।।**

**सैरन्ध्री** — हे सूतपुत्र ! अप्रार्थनीयां मां विहीनवर्णां सैरन्ध्रीं कथं अभिमन्यसे । मेधावी स्वेषु दारेषु उत्तमं यत्नं कुरुते । सर्वदा स्वदार निरतः नरः भद्राणि पश्यति । स्वदारेषु रतिः धर्मः । तत् अक्षय्यं धर्म्यं स्वर्ग्यं मनीषिणः प्राहुः ।

**कीचकः** — कामिनि ! किं त्वं धर्मशास्त्राणि बोधयसि । न मह्यं रोचते भाषणमेतादृशम् । भण भण सातत्यं भण । तवोपदेशात् ते कलकण्ठ कण्ठनादः रसना माधुर्यंच अपूर्वानन्दं मे वितरतः ।

**सैरन्ध्री** — सूतपुत्र, उत्तम भावनाभिः ते वंशोन्नतिं कारय । इदं ते न योग्यम् । स्वजाति दारजाः पुत्राः कुल पूजिताः भवन्ति । तस्मात् त्वं धर्मभाक् भव । पापात्मा नरः मोहमास्थितः घोरं अयशः प्राप्नुयात् । तस्मात् त्वं विरम तव पथः ।

**कीचकः** — (विहस्य) वरारोहे त्वं एवं प्रत्याख्यातुं नार्हसि। एतत् भाषणं ते न योग्यं। याः रूपवत्यः ते मदन साम्राज्यस्य राज्यः भवितारः। किंतु नीतिवचन पठयितारः न भूयासुः।

**सैरन्ध्री** — अहं यद् ब्रवीमि तत् सर्व सज्जन सम्मतं समाजानुकूलंच।

**कीचकः** — हे सुभ्रु ! अहं अस्य राजस्य प्रभुः। अहं क्षितौ वीर्यस्या प्रतिमः। मत्समोनास्ति कुत्रापि सप्तसमुद्रपरीतधरावलये वीरः बलिष्ठश्च।

**न कोप्यस्ति विशालेऽस्मिन्। भूतले मत्समो बली।**
**स्त्रीणां सुरत सौख्यंतु। जायते बलिनः परम्॥**

रूपयौवनसौभाग्यैः उत्तमभोगैः भोक्तव्येषु अनुपमेषु भोगेषु नान्यः मत्समः अस्ति।

**सैरन्ध्री** — सूत, नाहं कामये किमपि। अहं दासी।

**कीचकः** — **कल्याणि त्वं रता दास्ये। किमर्थं विपुलं वद।**
**मां भजस्व वरारोहे। भुङ्क्षव भोगान् रसार्णवे॥**

**सैरन्ध्री** — सूतपुत्र ! मामुह्यस्व। जीवितं मा त्यक्ष्यस्व। पंचगन्धर्वाः मामनिशं रक्षन्ति। तत् त्वं जानीहि। मे पतयः गन्धर्वाः। त्वया नाहं लभ्या। ते कुपिताः त्वां हनिष्यन्ति। मा व्यनीनशः। त्वं सह बान्धवः वृत्तात् फलमिव अवशः पतिष्यसि। गच्छ त्वं। अपसर मम सम्मुखात्। (इति सक्रोधं कथयति)

**कीचकः** — सैरन्ध्रि, क्रोधेऽपि ते वदनमण्डलं सौन्दर्यं वितनोति। अहं सप्तसागरपरिवेष्ठितमहीवलये बलवत्तमः। अह तान् गन्धर्वान् एक मुष्टिपातेन हनिष्यामि न ते शंका। त्वं मम मार्गे विचर सुखमनुभव। अहं सिंहबलः। पदेपदे विचारय। पुनराग्च्छेयम्। (इति गच्छति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

( सुदेष्णा गृहम् । कीचकः प्रविश्य )

**कीचकः** — सुदेष्णे, अहं तया प्रत्याख्यातः ।

**सुदेष्णा** — जानाम्यहम् ।

**कीचकः** — भवति कथं जानासि ।

**सुदेष्णा** — अहं सैरन्ध्री गुणगणान् स्वभावंच सुष्टु जानामि ।

**कीचकः** — अग्रजे, किं कुर्यां अधुना । अहं अमर्यादेन घोरेण कामेन अभिपरिप्लुतः ।

**सुदेष्णा** — कीचक त्वं तव पथः विरम ।

**कीचकः** — विरम इत्यस्य पदस्य अर्थं न जानामि मे जीवने । किंतु जानामि रम इत्यस्य पदस्य अर्थः ।

**सुदेष्णा** — एतस्मिन् विषये नाहं करिष्यामि किञ्चिदपि साहाय्यम् ।

**कीचकः** — सुदेष्णे येनोपायेन गजगामिनी सैरन्ध्री मां भजेत् तथा त्वं कुरु । ( इति भर्त्सयति )

**सुदेष्णा** — अरे कीचक ! इयं सुश्रोणी शरणागता । मया सा दत्ता अभया । साच शुभाचारा । नैनां वक्तुं उत्सहे । एषा पापेन चेतसा अन्येन स्पष्टुं न शक्या । एनां गन्धर्वाः रक्षन्ति रमयन्तिच । एवं सा प्रथम संगमे मां अवादीत् । ते कृत्याः ते जीवितं नाशयेयुः ।

**कीचकः** — अग्रजे त्वं जानासि मदीय भुज पराक्रमम् । त्वं मा बिभेहि मम मृत्योः ।

**सुदेष्णा** — राजाऽपि तां विलोक्य संमोहं गतवान् ।

**कीचकः** — यदि रसिकः धरातले अस्ति सः अवश्यं ⁿ दृष्ट्वा संमोहं प्राप्स्यति । स्त्रीणां सौन्दर्यं पुरुषाः जानन्ति नतु स्त्रियः ।

**सुदेष्णा** — मया महीपतिः सत्यवचनैः अनुनीतः। अयं जीवितस्य उपघातीनां गन्धर्व मुख्यानां भयात् मनसाऽपि एनां न चिन्तयति। ते यदि जानन्ति कृत्थाः भवेयुः। युगान्तेषु भास्कराइव त्रीन् लोकान् दहेयुः।

**कीचकः** — सुदेष्णे किमर्थं मां तव वचनैः विमोहयसि। त्वं जानासि मम सामर्थ्यम्।

**सुदेष्णा** — भ्रातः! सैरन्ध्री तेषां महद्बलं मां न्यगादीत्। इदं गुह्यं। अहं बन्धुवत् तव स्नेहात् आख्यामि। त्वं कुच्छ्राम गतिं मागमः। बलिनः ते कुलस्य धनस्यच नाशनं कुर्युः। यदि प्राणाः प्रियास्तव अस्यां मनः कर्तुं नोत्सहस्व।

**कीचकः** — सुदेष्णे

**गन्धर्वाणां शतं नोचेत्। सयत्नं चायुतानि वा।**
**हनिष्याम्येक घातेन। किं पुनः पञ्च संख्यकैः॥**

(इति अट्टहासं करोति)

**सुदेष्णा** — यदि त्वमेवं अभिप्लुतः कामेन किं शक्यं मयावक्तुं। ध्रुवं गतायुस्त्वं। अरे नराधम अकर्तव्ये पापे मां नियुनङ्क्षि।

**कीचकः** — त्वं मे भगिनी असि। अनुपदमेव अवश्यं मे सहायतां करिष्यसि।

**सुदेष्णा** — कीचक! त्वं अलौकिकोऽसि। पुराप्रोक्तं निपुणैः पापं कुरुते एकः। तेन स्व जातिः हन्यते। त्वं सर्वं स्वजनं घातयिष्यसि। त्वं तुष्टोभव कुलक्षयात्।

**कीचकः** — भगिनी मत्तः ते भीतिर्मास्तु। त्वं यथाकथंचित् मत्समीपं तां प्रेषय। तदनन्तरं यत् करणीयं तदहं विधास्ये।

**सुदेष्णा** — अलौकिक! भातृ सौहृदात् अहं एवं कथयामि। कथं सा नीरसाकारा स्पृहणीया भवति भवता। अत्र बह्व्यः विद्यन्ते कलहंस गामिन्यः। विशाल जघनाः। किमर्थं त्वं विनाशं प्राप्तुं मृत्युं आह्वयासि।

**कीचकः** — भगिनि!

**भवत्यै नीरसाकारा। सैरन्ध्री सेविका ध्रुवम्।**
**चेतसा रसपूर्णाना। रसाकारा वरानना॥**

कामः मां प्रेरयति। अयं अप्रतिहतः। भगिनि ! कर्त्तव्यं क्षिप्रं कुरु। ( इति गर्जति )

**सुदेष्णा — सदा जनः शान्त पवित्र बुध्या।**
**करोति कर्म्माणि सुयोग्य काले।**
**हठात्स्वयं पापपरीत कर्म।**
**विनाशकाले विपरीत बुद्धिः॥**

अरे मूर्ख श्रुणु आगामिनि पर्वणि विविध भक्ष्य भोज्य चोष्य पेयादिकं अनेक प्रकार सुरांच विधाय सिद्धं कुरु। तत्र तव शयन मंदिरात् सुरामानेतुं एनां तवान्तिकं प्रेषयिष्यामि। संप्रेषितामेनां तत्र विजने यथा कामं निगृह्य विचर।

**कीचकः** — अग्रजे त्वं मे प्रियकारिणी। भवत्याः आदेशानुसारं अहं सर्व सन्नाहं कारयेयं। अहो स्त्रीणां बुद्धिः समयानुसारिणी यतः

**आगते सङ्कटे काले। कर्तव्यंक्षिप्रयुक्तिभिः।**
**स्त्रियः शान्तं विधास्यन्ति। स्त्रीबुद्धिस्सर्वतोमुखी॥**

( इति हसन् गच्छति )

( यवनिका पतति )

* * *

# चतुर्थ दृश्यम्

**सुदेष्णा** — चन्द्रिके ! मञ्जरी क्व गता।

**चन्द्रिका** — मञ्जरि ! तवान्तपुरं अलङ्कर्तुं सखीभिस्साकं तत्र गतवती।

**सुदेष्णा** — त्वं किं करोष्यत्र। अहं मञ्जरीं द्रष्टुं उपागतास्मि। श्रुणु, अद्य

कीचकस्य जन्म दिवसः। तत्र अस्माभिः सर्वैरपि गन्तव्यं। विविध भोज्य चोष्य खाद्य पदार्थाः करणीयाः विद्यन्ते।

**चन्द्रिका** — विद्यते खलु सैरन्ध्री ! तया साकं वयं सर्वे मिळित्वा यद् यद् आचरणीयं तत् कुर्मः।

**सुदेष्णा** — सैरन्ध्री कार्यान्तरे निमग्ना तस्मादहं मञ्जर्याः मार्गं निरीक्षे।

**चन्द्रिका** — सखी सुदेष्णे त्वं अनंतरं सावकाशं कीचक गृहं समागच्छ। अहं मञ्जर्या सार्धं तत्र गच्छेयम्।

**सुदेष्णा** — वयं सर्वे मिळित्वा, अनंतरं गच्छेम। किञ्चित् कालं तिष्ठ।

**चन्द्रिका** — अहं मञ्जरी सकाशं गत्वा, अतःपुरालङ्करणं कियत्पर्यन्तं अध्यवसितं इति विलोक्य, तया साकं त्वां प्रत्यागमिष्यामि।

**सुदेष्णा** — आम् तथैव कुरु।

**चन्द्रिका** — भवती आवयोः मार्गं प्रतीक्षस्व ( इति गच्छति )

**सुदेष्णा** — ( एकान्ते निश्वसन्ती उपविशति। ततः प्रविशति सैरन्ध्री )

**सैरन्ध्री** — राज्ञि किं एकाकिनीं विचारयसि किं करणीयं ते विद्यते।

**सुदेष्णा** — अहं अशक्ताऽस्मि चलितुमपि। किञ्चित् पानीयं देहि।

**सैरन्ध्री** — आनयेयं ( इति गन्तुमिच्छति )

**सुदेष्णा** — सैरन्ध्रि ! मां पिपासा प्रबाधते सुरामानय कल्याणि।

**सैरन्ध्री** — कुत्र विद्यते सुरा कथय देवी।

**सुदेष्णा** — कीचकस्य वेश्मनि।

**सैरन्ध्री** — मया तत्र गन्तव्यं किं ?

**सुदेष्णा** — हां गन्तव्यम्।

**सैरन्ध्री** — महाराज्ञि ! नाहं गच्छेयं कीचकस्य वेश्म।

**सुदेष्णा** — त्वं मे दासी असि। यत् मया कथ्यते तत् त्वया करणीयम्।

**सैरन्ध्री** — राज्ञि त्वमेव जानासि सः निरपत्रपः। तव वेश्मनि कामवृत्ता पतीनां व्यभिचारिणी न भविष्यामि।

सुदेष्णा — सैरन्ध्रि ! अकरणीयं कुरु इति नाहं कथयेयम् ।

सैरन्ध्री — देवि ! भवती जानाति प्रविशन्त्या मया पूर्वं समयः कृतः तव वेश्मनि ।

सुदेष्णा — जानाम्यहं । सर्वमपि विचार्य आदिशामि ।

सैरन्ध्री — देवि कीचकः मूढः मदन दर्पितः सः मां दृष्टवा अवमंस्यति न यास्ये तत्र ।

सुदेष्णा — सैरन्ध्रि ! सः त्वां नैव हिंस्यात् (इति उत्थाय सुरापात्रमानीय सैरन्ध्रयाः सकाशं गत्वा) सैरन्ध्रि गृहाण पात्रमेतत् (इति सपिधानं पात्रं ददाति)

सैरन्ध्री — (रुदन्ती कीचकस्य निवेशनं गच्छन्ती) यद्यहं भर्तृभ्यः अन्यं कंचन नाभिजानामि तेन सत्येन कीचकः एकान्ते दृष्टवा मां न किमपि कुर्यात् । (इति अश्रुमार्जन्ती गच्छति)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

(कीचकः एकान्ते उपविष्टः चिन्तयति)

कीचकः — काल विलम्बनं भवति । भगिनी मे वचः विस्मृताकिं । उताहो दासी तिरस्कृतवती । यदि दासी मे निवासं आगन्तुं उद्यता तर्हि मे मनोरथः फलिष्यति । यदि मे अग्रजा तिरस्कृता सैरन्ध्रया तथापि मे यत्नः सुलभः भविष्यति । (आकर्णनमभिनीय) हां पादशब्दः श्रूयते । हां सैरन्ध्री कलहंसगत्या मां एति । (इत्युत्थाय तस्याः प्रवेशं वीक्षते) हां अहो–

**मराळयाना स्वयमेति गेहम् । विलाससमाधुर्य गुणाभिरूपा ।**
**कारुण्यशृङ्गार परीत भावा । मामेव यातीह मदालसा सा ॥**

(ततः प्रविशति वामकरतलोपरि पात्रं वहन्ती पात्रोपरि दक्षिण कर-तलं पिधाय वामभागे किंचिन्नताङ्गी सैरन्ध्री)

कीचकः — सैरन्ध्रि ! स्वागतं ते रजनी चिक्वणा जाता । मम प्रियं कुरु । अत्र पश्य मे शयनं दिव्यं विराजते । एतत् त्वदर्थं उपकल्पितम् । एहि तत्र मया सार्धं । मधु माधवीं पिबस्व (इति तस्याः समीपं गच्छति)

सैरन्ध्री — कीचक अपेहि । नाहं त्वया स्प्रष्टुं शक्या । दुर्बुद्धे भ्रष्टां गतिं मा भजस्व ।

कीचकः — सैरन्ध्रि ! यदा त्वं मदीय निवेशं प्रविष्टाऽसि नक्तं एकाकिनी एकान्ते सत्यं त्वं मदीयासि न ते अधिकारः मामवरोध्दुं । पश्य ।

**यामिन्यां सरसां तन्वीम् । एकान्ते कोऽपि न त्यजेत् ।**
**अधुना मे वशी भूता । नास्ति मोक्षस्तवाङ्गने ।**

सैरन्ध्री — महाराज्ञी मां तवान्तिकं सुरामाहर्तुं प्रेषयामास । मे महती पिपासा समजनि सुरां आनय क्षिप्रं इत्यवोचत् ।

कीचकः — भामिनी ! श्रुणु ।

**समागमोऽयं सैरन्ध्रि । निर्णीतः पूर्वमेवहिं ।**
**प्रिये विलास रूपे त्वं । एहि मे बाहु बन्धनम् ।**

त्वं न जानासि अत्र विद्यमान रहस्यं । भद्रे अन्याः राजपुत्र्यः सुरां नेष्यन्ति । त्वमेहि मे बाहुपञ्जरम् । (इति तां दक्षिण हस्तेन कर्षति)

सैरन्ध्री — मूढ जहीहि मां । (इति पात्रं बिसृज्य) विधुन्वाना कीचकं भूमावाक्षिण्य । (पलायिता)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(वल्वलः इतस्ततः भ्रमन् आस्ते, ततः प्रविशति त्रस्ता सैरन्ध्री)

सैरन्ध्री — वल्वल ! घोरमापतितं। समूढः मां हस्तेन चकर्ष। अहं बलात् तं भूमौ पातयित्वा अत्रागतास्मि।

वल्वलः — भीरु किमर्थं कम्पसे ? धैर्यमवलम्बस्व ते भद्रं करिष्यामि।

सैरन्ध्री — कथं भवान् करिष्यति। अयं अज्ञातवासः। यदि पाण्डवाः अत्र विद्यन्ते इति प्रतिपक्षिणः जानीयुः तर्हि यथा पूर्वं अस्माभिः अध्यवसितव्यम्। विचार्यमाणे मे भीतिः जायते।

वल्वलः — मा बिभेहि याज्ञसेनि। अद्य सहबान्धवं तं कीचकं बिना रक्त स्पन्दनं, क्रन्दनं अति मृदुलं तं कीचकं सूदयिष्यामि सहबान्धवं। पश्यसि मे कौशल्यम्। अस्याः शर्वर्याः प्रदोषे अनेन संगतं कुरुष्व।

सैरन्ध्री — तेन भाषणमपि अति भयदं भवति। कथं संगतं कर्तव्यं ? कुत्र कर्तव्यम्।

वल्वलः — श्रुणु, अत्र नर्तन शालायां कन्याः दिवा नृत्यन्ति। रात्रौ यान्ति गृहम्। तत्रास्ति दृढं सुखदं शयनं। तत्र अनेन दुरात्मना सार्थं समयं कुरुष्व।

सैरन्ध्री — यथा निर्दिष्टं अहं सर्वमपि कर्तुं प्रयतिष्ये त्वया अवश्यं अत्रैव अन्तर्हितेन भवितव्यम् नोचेत् सर्वं अस्तव्यस्तं भविष्यति।

वल्वलः — अस्मिन् विषये न किमपि विचारं कुरु। अहं सर्वं सकुशलं निर्वर्तिष्ये।

सैरन्ध्री — बाढं। अधिकः समयः जातः। सत्वरं आवाभ्यां गन्तव्यं विद्यते। (इति द्वावपि निर्गतौ)

(यवनिका पतति)

* * *

# सप्तमं दृश्यम्

(सैरन्ध्री कीचकसदनं प्रविशति)

कीचकः — अहो भामिनी भवती स्वयं आगतासि।

सैरन्ध्री — कीचक मत्कृतापराधं सहस्व। अहं त्वां अनुसरिष्यामि। अहं ते एकं रहस्यं कथयिष्यामि।

कीचकः — भामिनी ! मन्त्ररुद्धनागिनीव मदीयं वशमागतासि। पश्य मम वशीकरण शक्तिम्।

सैरन्ध्री — अधुना भवन्तमुद्दिस्य ज्ञातमासीत् मया। भवान् अत्यन्त रसिकोऽस्ति।

कीचकः — भामिनि ! भवती परहृदय वेदिनी। मधुरं भाषितं त्वया। मे हृदयं निस्तुल रसपूर्णं भवति।

सैरन्ध्री — मे कामनां किं पूरयिष्यसि ?

कीचकः — काते कामना सविस्तरं कथय। अद्य प्रभृति तव दासोऽस्यहम्। अहं अनुपदं पूरयिष्यामि ते कामनाम्।

सैरन्ध्री — कीचक ! कथयितुं लज्जिताऽस्मि।

कीचकः — मानिनि ! प्रणये लज्जा कुतः। लज्जा त्यागे प्रणयः पराकाष्ठां भजते। यतः।

**प्रेम्णाच हृदये यत्र। प्रपूर्णे रसनिस्तुले।**
**सततं मधुरं भातः। परस्पर फलायिते।।**

सैरन्ध्री — अहो साधु प्रोक्तं भवता। अद्य समयं मे प्रतिपद्यस्व। मया संगतं त्वां न सखा भ्राता वा जानीयात्। अहं गन्धर्वाणां अनुप्रवासात् भीताऽस्मि। अहं ते वशगा अस्मि तथा जानीहि।

कीचकः — सुश्रोणि यथा भाषसे तथैव करिष्यामि। अहं धन्योऽस्मि सुश्रोणि। यतः।

**विलासिनी या स्मरबाधया च । स्वयं समायाति सुखाय रात्रौ । कामं समीपं पुरुषस्य लोके । सेयं सुरात्रिः पुरुषश्च धन्यः ।**

**सैरन्ध्री** — अत्र तव वेश्मनि मे भीतिः भवति। भवान् सन्ध्या समये नर्तनशालां समागच्छतु। सर्वमपि तत्र सुकरं अति सुखदं भविष्यति। त्वं एकाकी भूत्वा समागच्छ। अन्येषां दर्शनेन कामः भीतः भवति।

**कीचकः** — भवती माभण ! जानाम्यहं सर्वं। अहं एकाकी तत्रागमिष्यामि, यथा गन्धर्वाः मां न पश्येयुः। भवती गच्छतु। (सैरन्ध्री लज्जया निवृत्ता भवति) बडिश लग्ना शफरी (इति अट्टहासं करोति)

[ यवनिका पतति ]

* * *

## अष्टमं दृश्यम्

(कीचकः नर्तनशालायां सुसज्जित शयने उपविश्य चिन्तयति)

**कीचकः** — हा विपुल जघने सैरन्ध्रि ! किमर्थं विलम्बसे। इयं शर्वरी बहुक्रूरा। निर्दया। मां एकाकिनं अतीव बाधयति। इयं कामवेदना दुर्भरा भवति मे। रजनी सर्व पापानां सर्व बाधानां सर्व सौख्यानां च निदानं भवति। भामिनी सत्वरं मां समेहि। मे बाहुपञ्जरे सुखं निवस शुकप्रलापैः। आवां मन्मथ साम्राज्यं पालयावः। अहं मदनः त्वं रतिः। मे कामवासना यथा दग्धा भविष्यति तथा विहरावः एकान्ते रजन्यां। अहो किमर्थं विलम्ब्यते भवत्या। कामिनि त्वया विना नाहं जीविष्यामि। अङगरागाः समानीताः। विविध पुष्पफलपानीयानि समाहृतानि। धृतानि मृदुदुकूलानि। सर्वत्रापि घुमघुम वासना प्राक्तन कामवासनादीन् प्रेरयन्ती आस्ते। अतीव सुखदा इयं रजनी। मे विषायते। विलासिनि किमर्थं चिरयसि त्वं। अहो अतीव वेला यापिता निरर्थका। प्रिये !

**अलिङ्गय देहं कुचभारनम्रं । विलास लावण्य सरोवरे ते ।**
**तरन् यथेच्छं रसमग्नचित्तः । प्रशामयेयं मम म रबाधाम् ।।**

एहि कृशोऽदरि मे शयन मन्दिरं । मया साकं सानन्दं रमस्व । (इति किं कर्तव्यता मूढः हस्तपादं प्रसार्य शयने अशेत )

( वल्वलः सैरन्ध्रीवेशेण प्रविश्य कीचकशयने उपविशति । कीचकं वामहस्तेन कण्ठं निगृह्य दक्षिणहस्तेन मुष्टिभिः मारयितुं उद्युक्तः भवति )

[ यवनिका पतति ]



## ॥ वज्रं वज्रेण भिद्यते ॥

**निरन्तरं द्वेषपरीत मनसान् । जनान्परं प्रेमदयाप्रपूर्णान् ।**
**विधास्यमानः सततं प्रशान्तम् । संवर्धतां शान्तिमय स्वभावः ॥**

( नान्द्यन्ते )

**सूत्रधारः** — अयि कलाशालिनि प्रिये ! श्रूयताम् ।

**नटी** — ( प्रविश्य ) अहो श्रुणोमि कथयन्तु ।

**सूत्रधारः** — सावधानेन श्रोतव्यम् ।

**नटी** — को विशेषः ।

**सूत्रधारः** — न कोऽपि विशेषः विद्यते । किन्तु प्रपञ्चे मानवाः केचित् गर्वाहङ्कार दर्पिताः प्रयतन्ते, स्व लाभाय त्यक्त्वा मानवतां ।

**नटी** — तस्मात् भवता किं क्रियते ।

**सूत्रधारः** — विशाल भाव संपन्नं, मानव हृदयान्तर्गत भावप्रबोधकं, अपिच शत्रूमपि मित्रवत् समादरणीयमिति प्रदर्शयन्तं "वज्रं वज्रेण भिद्यते" इति नाटकं प्रयोक्तुमुद्यताः ।

**नटी** — प्रिय, नाटकमेतत् केनकविना विलिखितम् ।

**सूत्रधारः** — नाटकमेतत् गीर्वाणान्ध्रभाषा प्रवीणेन महाकविना परीक्षित् शर्माणा प्रणीतं ।

**नटी** — सर्व सुन्दरं प्रतिभाति मे । नाटकमेतत् सार्वकालीनकं भवितु मर्हति । यतः ।

**प्रत्यहं द्वेषपूर्णंच । शत्रुषड्वर्ग रञ्जितम् ।**
**समाजं पावनं कर्तुं । नाटकं रचितं प्रियम् ॥**

**सूत्रधारः** — प्रिये, इतः पश्य द्रोणद्रुपदौ सहाध्यायिनौ परस्परं सल्लापं कुर्वन्तौ प्रविशतः । एहि गच्छावः । ( इति गच्छतः )

( ततः प्रविशतः द्रोणद्रुपदौ )

**द्रोणः** — सखे द्रुपद, आवां परिसमाप्त विद्यौ । अतः परं गृहस्थाश्रमं प्रविशावः ।

**द्रुपदः** — अरे सुहृद् द्रोण ! अहंतु क्षत्रियः । त्वं ब्राह्मणः । अपिच आवां सुहृदौ । एकशयने एकपात्रे सुप्तवन्तौ भुङ्क्तवन्तौ, सहाध्यायिनौ, विद्यापारंगतौ । आवां स्नेहः एवमेव सर्वथा वर्धिष्णुतां भूयात् इति मामकीन विचारः ।

**द्रोणः** — अरे द्रुपद ! आवां जन्मतः ब्राह्मण क्षत्रियौ । किन्तु विद्यया कर्मणा क्षात्रवन्तौ ववृधिवहे ।

**द्रुपदः** — मित्र द्रोण ! मम पितुः आशा एवमस्ति. प्रथमतः मम विवाहः विधेयः सपदं राज्य पट्टाभिषेकः कर्तव्यः इति ।

**द्रोणः** — अरे सुहृद् यदि त्वं राजा भविष्यसि मां नूनं विस्मरिष्यसि ।

**द्रुपदः** — तथा नाहं विस्मरिष्यामि ।

**द्रोणः** — तवाभिप्रायः कालान्तरेण रूपान्तरं धारयिष्यति । कालक्रमेण समयानुकूलं बुद्धिः परिणमति ।

**द्रुपदः** — तथा न भवितु मर्हति । पश्य ।

**अहं राजा भविष्यामि । मया सार्थं भवान प्रियम् ।**
**भुनक्तु कामं सर्वस्वं । वित्तं भोगान् सुखानिच ॥**

**द्रोणः** — ( विहस्य ) अरे द्रुपद ! अहं कथं राज्य सौख्यं नृपतिरिव अनुभोक्ष्यामि ।

**द्रुपदः** — कथं नहि । अवरोधः कः ।

**द्रोणः** — अरे त्वं जानासि, यत् ब्राह्मणानां ज्ञानोपार्जनमेव कर्तव्यं नतु धनोपार्जनं, सुखानुभूतिश्च इति ।

**द्रुपदः** — कालप्रभावेन सकलं अस्त व्यस्तं भवति जगति जन्तूनाम् ।

**द्रोणः** — अहो ते विचारधारा प्रशंसनीया।

**न भवन्ति महात्मानः। सर्वे जगति मानवाः।**
**त्वादृशाः विरलाः सन्ति। तस्मात्त्वं मे सुहृद्वरः॥**

**द्रुपदः** — अरे कुम्भसंभव, त्वं निश्शङ्कं तव कामना पूर्त्यै मम सकाशं समागच्छ। तव कामना सफली भविष्यति।

**द्रोणः** — मित्रोत्तम! त्वं मे बाल्य मित्रं। ते पिता मम पिता च बाल्यमित्रौ। तस्मात् आवयोः मैत्री पारंपर्येण संप्राप्ता। अयं संबन्धः अच्छेद्यः अविभाज्यः।

**द्रुपदः** — सत्यमेव इयं मैत्री अविभाज्या, सातत्येन प्रवर्धिनीया (इति द्रोणस्य दक्षिण हस्तं स्वीय दक्षिण हस्तेन गृहीत्वा चालनं करोति)

**द्रोणः** — अयि मित्र। अहमभिनन्दामि ते विशाल भावनां सौहार्दं च।

**द्रुपदः** — अरे कलश सम्भव! ब्राह्मण क्षत्रियाणां मध्ये अंतरं न किमपि विद्यते।

**द्रोणः** — अन्तरं न किमपि विद्यते किन्तु भावनायां अन्तरं विद्यते।

**द्रुपदः** — जगति मानवाः सर्वे शरीर दृष्ट्या समानाः किंतु मानसिकदृष्ट्या विभिन्नाः।

**द्रोणः** — सत्यमेव सर्वेषां अवयव निर्माणं एकमेव भवति।

**द्रुपदः** — किन्तु भावनाकृतिः विभिन्ना भवति।

**द्रोणः** — आहार विहारेऽपि वैविध्यं भवति।

**द्रुपदः** — किन्तु आवयोर्मध्ये न किमप्यन्तरं विद्यते यस्मिन् कस्मिन् विषयेऽपि।

**द्रोणः** — मित्र! तस्मात् आवां समवयस्कौ समान शीलिनौ। समान भावुकौ। सर्वत्रापि समानता प्रतिभाति।

**द्रुपदः** — आवयोर्मध्ये सर्वेषु विषयेषु अविनाभाव सम्बन्धः विद्यते।

**द्रोणः** — सुष्टु भावितं त्वया।

द्रुपदः — श्रुणु, अहं राजा।

द्रोणः — अहं मन्त्री।

द्रुपदः — अहं शरीरम्।

द्रोणः — अहं प्राणाः।

द्रुपदः — आवां सूर्य चन्द्रौ।

द्रोणः — आवां दिवारात्रम्।

द्रुपदः — आवां सम्बन्धः अविभाज्यः।

द्रोणः — सहाध्यायिरुपेण सम्बन्धः पटु चिक्कणात्मकः बभूव।

द्रुपदः — विद्यार्थिदशा सर्वासु दशासु शक्ति समन्विता।

द्रोणः — आवां समान शीलिनौ समानीव आकूतिः। समानी हृदयानिवः। (इति द्रुपदं अलिङ्ग्य) मित्र श्रुणु

**सौहार्दपूर्णं वरमित्र भावं। पुराणरूपं जगति प्रसिद्धम्।**
**विलोक्य मे कौतुकमेव जातं। रे मित्र नित्यं शुभमस्तु लोके॥**

(इति निष्क्रान्तौ)

(यवनिका पतति)

* * *

## द्वितीयं दृश्यम्

(द्रोणः ज्यावल्लीं बध्नाति, कृपी संमार्जिन्या गृहं मार्जयन्ति आस्ते)

कृपी — किं कुर्याः जीवनं सर्वं कष्टमयं भवति। न कस्याऽपि कुटुम्बे रतिः विद्यते। वेलायां समागत्य भुक्त्वा गच्छति कुटुम्बीकः। गृहे किं विद्यते, किं न विद्यते

इति नकोऽपि विचारयति। स्त्रियोहि नाम गृहे दास्यं अनुभवन्त्यः पुरुषाणां सुख दात्र्यः। अहो किमेतत् जन्म। अस्मिन् संसारे स्त्रीणां न कापि स्वतन्त्रता विद्यते। कुटुम्बिनीषु कुटुम्बीकानां नकोऽपि आदरभावः न काप्यनुकम्पाच विद्येते। स्त्रीजन्मनः अरण्ये तरु जन्म श्रेष्ठतरं भाति (इति सक्रोधं सवेगं संमार्जनं कुर्वन्ती आस्ते)

**द्रोणः** — किं भवती कृत्या कृशानुः भवति।

**कृपी** — नाहं कृत्या किन्तु चिन्ताक्रान्तास्मि।

**द्रोणः** — चिन्तायाः निदानं किम्?

**कृपी** — अयि भोः बालः अश्वत्थामा दिने दिने व्यपचीयमान शरीरः निर्बलः भवति।

**द्रोणः** — किं कुर्यां अहं तस्य बलविषये?

**कृपी** — खाद्य पदार्थेषु पौष्टिक पदार्थः न्यूनः भवति।

**द्रोणः** — तस्यकृते किं कुर्यां अहं।

**कृपी** — किं कर्तव्यमिति नाहं भणामि।

**द्रोणः** — हञ्जे, खाद्य पदार्थेषु पौष्टिकाहारस्य आवश्यकतां अङ्गीकरोमि। किंतु जन्मतः संक्रामितस्य निर्बलस्य पौष्टिकाहारोऽपि अजीर्णं जनयिष्यति।

**कृपी** — अत्र सर्वे बालाः प्रातः उत्थाय गोक्षीरमासेवन्ते।

**द्रोणः** — वयं निर्धनाः ब्राह्मणाः। अस्माकं गो क्षीरं कथं लभ्यं भविष्यति।

**कृपी** — तस्मादहं वच्मि यथा कथं चित् वरिष्ठ कपिलां एकां सम्पादयस्वेति।

**द्रोणः** — अत्र नकोऽपि दाता अस्ति। भवतु नाम। अश्वत्थामानं तेषां बालानां सकाशं प्रेषय तैस्साकं सोऽपि किञ्चित् क्षीरं पास्यति।

**कृपी** — तेषां मध्ये कलहः भवति। तस्मादहं न प्रेषयेयं बालं।

**द्रोणः** — बालानां कलहः भवत्येव किंतु सः कलहः तत्कालीनः।

**कृपी** — बालानां कलहकारणात् पितरौ कलहायमानौ भवतः।

**द्रोणः** — तथा करणं मौर्ख्यमेव। बालाः कलहायन्ते अनन्तरं क्रीडन्ते। किंतु ज्येष्ठाः कलहायमानाः यावज्जीवं मौर्ख्येन दर्शयिष्यन्ति तेषां मानसिक संकुचितत्वम्।

**कृपी** — बाला: ज्येष्ठमण्डलात् अधिकतरं बुद्धिमन्तः भवन्ति।

**द्रोणः** — बाल: अधुना कुत्र गतः।

**कृपी** — सः बालमित्राणां सन्निधिं गतः।

**द्रोणः** — किमर्थं गतः।

**कृपी** — दुग्धपानं कर्तुं गतः।

**द्रोणः** — साधुकृतं तेन। पश्य,

**भिक्षादानेन लोकेऽस्मिन्। ब्राह्मणो जीवते धिया।**
**तस्मात् साधु कृतं तेन। गोक्षीरास्वादने प्रिये॥**

**कृपी** — बाल्यात् प्रभृति सः परालम्बन परः जातः। हा धिक् कष्टम्।

**द्रोणः** — प्रिये बाल: रूदन् इवास्ते पश्य।

**कृपी** — (उत्थाय गत्वा विलोक्य रूदताबालेन साकं प्रविश्य) अरे चिरंजीव किमर्थं रोदिसि।

**बाल:** — मातः ते सर्वे क्षीरं मह्यं अदत्त्वैव अपिबन्।

**कृपी** — मारोदि अहं ते गोक्षीरं दास्यामि (इति अन्तः गत्वा पिष्टमिश्रित जलं आनीय एकस्मिन् पात्रे पूरयित्वा तस्मै गो क्षीरमिति ददाति)

**बाल:** — (सन्तोषभरेण) मातः त्वं मे अत्यन्तं स्पृहणीयासि। (इति पिबन् परमानन्देन मुखशब्दं कुर्वन्) मातः अहं उदरपूरं गोक्षीरं पिबामि ते बाला: अर्धकुक्षि क्षीरं पीत्वा प्रमोदन्ते। (इति हसति)

**कृपी** — (विचारयन्ती) वत्स पिब सानन्दं पिब एतदेव ते गोक्षीरम्। वयं दरिद्राः कथं प्रत्यहं गोक्षीरं पास्यामः।

**बाल:** — (सर्वं पीत्वा) कलशं भूमौ निक्षिप्य नृत्यन् गायति)

## गीतम्

१ क्षीरं पीतं मया भृशम् । मात्रा दत्तं मुदा प्रियम् ॥

२ बालाः क्षीरं पिबन्ति च । संध्या समये रमन्ति च ॥

३ प्रचुरं स्वैरं गायन्ति ते । नित्यं देवं नमन्ति ते ॥

**द्रोणः** — ( सर्वं बालवर्तनं विलोक्य स्वगतम् ) गोक्षीर लालसोऽयं सुतः पिष्टोदकं पीत्वा स्वात्मानं विस्मृत्य नृत्यति किमिदमाश्चर्यं ? दृष्ट्वा तस्य स्थितिं मे हृदयं विदलति ।

**कृपी** — ( द्रोणं विलोक्य ) किमर्थं यूयं विचाराधीनाः ।

**द्रोणः** — बालस्य अज्ञान वर्तनात् मे हृदयं विदलति ।

**कृपी** — किमर्थं विदलति ? वयं असमर्थाः । कार्य साधने अकुशलाः । वयं कार्यकरणे अक्षमाः ।

**द्रोणः** — कृपि ! तथामावद । पिष्टमिश्रित पानीयं पीत्वा तेन सत्यमेव गोक्षीरं पीतमिति आनन्देन नर्तितं । तत् दृश्यं मे अत्यन्त हृदयविदारकं भवति, मम असहनं भवति ।

**धिगस्तु मे निर्धनमौर्ख्यजीवितं । नचास्ति वित्तं नच धेनुमण्डलम् ।**
**बालाय दातुं ममनास्ति दुग्धम् । दग्धो भवत्यत्र ममान्तरङ्गः ॥**

( इति विचार तप्तः भवति )

**कृपी** — चिन्तां विसृज्य कर्मयोगी भव ।

**द्रोणः** — किं कुर्यामहं ? कं आश्रयेयम् । को नाम दास्यति ?

**कृपी** — प्रिय, उक्तं भवता गर्भादानस्य प्रथमरजन्यां यत् तत्रभवतां मित्रं एकं द्रुपदो नाम, सः संपन्नवानिति अधुना तस्य सकाशं गत्वा गोदानं स्वीकुर्वन्तु ।

**द्रोणः** — हाँ सत्यं उक्तमेव मया । किन्तु तत् बहुकालात् प्राक् संवृत्तं । अधुना सः मयि स्निह्यति उत नहि अयं प्रश्नः भवति ।

**कृपी — मित्रंच मित्रवद् लोकं। करदानैः पुनाति च।**
**तस्मात्त्वं तत्रगत्वैव। प्रार्थयस्व महीपतिम् ॥**

**द्रोणः** — प्रिये ! अहो ते समय स्फूर्ति विशेषः। तस्मादेव भार्या नाम करणेषु मन्त्री इति भणितं पूर्वसूरिभिः। सकुटुम्बं आवां मे मित्रं द्रुपदं द्रष्टुं गच्छावः।

**कृपी** — यदि सः अधुना स्मरिष्यति सर्वमपि सुगमं सुकरं भविष्यति।

**द्रोणः** — अयं अवश्यमेव स्मरिष्यति मां। तेनोक्तं च। यतः।

**अहं राजा भविष्यामि। मया सार्थं भवान्प्रियम्।**
**अनुभोक्ष्यति सर्वस्वं। वित्तं भोगान् सुखं सखे ॥**

**कृपी** — अहो साधु प्रतिपादितं तव मित्रेण। अद्यैव तस्य सन्निधिं गच्छावः।

**द्रोण** — शुभस्य शीघ्रम्। एहि गच्छावः।

( यवनिका पतति )

* * *

## तृतीयं दृश्यम्

[ द्रुपदराज सभास्थानम् सिंहासने द्रुपदः उपविष्टः अस्ति। पार्श्वे छत्रचामर वाहिन्यौ वीजयतः ]

**मन्त्री** — अयि राजन् गङ्गायाः दक्षिणतः विराजमान धरणीमण्डल शाशयतः भवतः राज्ये न कुत्रापि भीतिः चौर्यं अमानुष चेष्टादिकं दृश्यते। ते प्रापणीयान् दानांश भागान् वयं सामन्त राजानः सभक्तिकं प्रेषयामहे। तव एकछत्राधिपत्ये वयं सर्वे अपूर्वानन्दं सुखंचानुभवामः। ते सर्वसन्मङ्गळानि भवन्तु। समस्त सौख्यानि भवन्तु इति परमेश्वरं प्रार्थयामहे। [ इति पठित्वा मन्त्री उपविशति ]

**वेत्रहस्त** — [ ततः प्रविशति ] जयतु जयतु महाराज। भरद्वाजपुत्रः कलशसम्भवः द्रोणाचार्यः सदारपुत्रः तत्र भवतः द्रष्टुं द्वारि तिष्ठति।

**राजा** — ( आत्मगतम् ) द्रोणाचार्यः सभार्या पुत्रः द्वारि तिष्ठति। सः मां दिदृक्षुरस्ति। अनुपदं प्रवेशय ( इति आज्ञापयति )

**वेत्रहस्तः** — बाढम् ( इति नमस्कृत्य गच्छति )

**राजा** — मत्रि ! भवान् गच्छतु।

( मन्त्री गच्छति, ततः प्रविशति सदारपुत्रः द्रोणः )

**द्रोणः** — स्वस्ति भवते।

**राजा** — नमोवः ( उत्थाय नमस्करोति तेषां आसनं दर्शयति ) सर्वे उपविष्टाः।

**द्रोणः** — यूयं द्रुपद महाराजानः। कोवाऽहं इति भवतां विदितमेवस्यात् इति मे वितर्कः।

**द्रुपदः** — नाहं जाने।

**द्रोणः** — बहुकाल वियोगात् विस्मृतवन्तः अभवन् इति मे कल्पना।

**द्रुपदः** — काल विपर्ययेन स्मृति विभ्रमः भवति।

**द्रोणः** — यदि स्मृति विभ्रमः भवति तर्हि अनुमानेन सुयोज्यः भविष्यति किंतु न चित्त विभ्रमः।

**द्रुपदः** — चित्त विभ्रमोऽपि जातः।

**द्रोणः** — महाराज !

**शरीरे शौर्यं माणेतु। बुद्धिर्गच्छति हीनताम्।**
**सम्पदां निचये राजा। तेजो बुद्धिः विराजते॥**

महाराज अहं ब्रवीमि श्रुणोतु। मम नाम द्रोणः भरद्वाज तनयः।

**द्रुपदः** — ओम् एकदा श्रुणोतु मया पूर्णम्।

**द्रोणः** — किं उच्यते भवता ?

**द्रुपदः** — सत्यं ब्रवीमि।

**द्रोणः** — किमाश्चर्यं ? आवयो व्यवहारः वर्तनादिकं सर्वं विस्मृतं किम् ?

**द्रुपदः** — तत् सर्वमपि गत जन्मानि जातं इति मन्ये।

**द्रोणः** — कथं गत जन्मानि। गुरुकुलावासे इह जन्मानि। पञ्चवर्षेभ्यः प्राक् संवृत्तम्।

**द्रुपदः** — गुरु कुलवासे बाल्ये संवृत्तः।

**द्रोणः** — हां सत्यम्।

**द्रुपदः** — तत् मे गतजन्म वृत्तान्तः इव प्रतिभाति।

**द्रोणः** — विद्यार्थिदशायां भावना विचित्र बुद्धिविशेषः, अन्योन्याश्रय जीवनं इत्यादिकं अव्याज प्रेम संबद्धं भवति। यौवने सर्वमपि दुर्भावपरीतजीवनं भवति तदानीं भावना अन्या।

**द्रुपदः** — सत्यमेव तत् अधुना भावना अन्या।

**द्रोणः** — अधुना कथं अन्या भवति।

**द्रुपदः** — अहं अधुना राजा। राज्य धुरंधरोऽस्मि।

**द्रोणः** — राजवंशजानां अयं सहजः एव।

**द्रुपदः** — अयमपि सहजः यत् राज्यभारे बाल्यस्नेह विस्मरणम्।

**द्रोणः** — वयसि संवृत्तं सर्वमपि विस्मरणीयं भवति तत् सत्यमेव।

**द्रुपदः** — भवता सत्यमुक्तम्।

**द्रोणः** — राजन् कौमारदशायां गुरुकुलावासे यत् संवृत्तं तत् विस्मरणीयं कथं भवति? श्रृणोतु।

**क्रीडारसः परं राजन्। सर्वेषुच रसेष्वपि।**
**नित्यं संस्मरणीयोऽस्ति। भवान् तं विस्मृतः कथम्॥**

**द्रुपदः** — द्रोण, मे जीवने अहं सर्वमपि शैशवोत्पन्नं सर्वघटनादिकं विस्मृतोऽस्मि।

**द्रोणः** — राजन् अहं स्मृतिपथं प्रापयितुं प्रयतिष्ये। श्रृणोतु भवान्। त्वं एकदा मां अरे कलश! अरे द्रोण इति परिहासेन संबोधयन् आसीः। तदा अहं अरे द्रुतपद द्रुत इति त्वां संबोधितोऽस्मि। तदा त्वं कृत्थोऽसि।

द्रुपदः — एतत् सर्वं मे नवीनं प्रत्युत्पन्नं प्रतिभाति।

द्रोणः — एकदा अहं त्वां भर्त्सयन् एवं परिहासः न कर्तव्यः इत्यवोचम्, किं सा घटनादृष्टिपथं समागता?

द्रुपदः — नाहं किमपि जाने। अधुना तव प्रवासः कुतः।

द्रोणः — राजन्, अहं सपत्नीकः। इयन्तं भवन्तं प्रार्थयितुं समागतोऽस्मि। अयं मे पुत्रः पिष्टोदकं पीत्वा गोक्षीरं सेवितमिति बुध्या आनन्देन नृत्यन् आसीत्। तत् दृश्यं विलोक्य विदीर्णमान मानसः एकां गां कपिलां भवतः प्राप्तुं समागतोऽस्मि।

द्रुपदः — अयं राजा केषामपि न किमपि ददाति। ददाति केवलं रक्तसंबन्ध बान्धवेभ्यः वस्तुचयम्। आवयोः कोऽयं सम्बन्धः?

द्रोणः — भवतु अहं कथयेयं आवयोः संबन्धः कीदृशः।

द्रुपदः — कोऽयं संबन्धः आवयोर्मध्ये विद्यते। अहं लक्ष्मीकटाक्षालिङ्गितः। सम्पन्नवान् राजा। त्वं तु निर्धनः एकः दरिद्रब्राह्मणः। आवयोः कथं संबन्धः भवति। आवयोर्मध्ये हस्तिमशकान्तरं विद्यते। स्नेहस्याऽपि समान शीलता अस्ति। पश्य।

**सपन्नैर्जायते सख्यं। संपन्नैरेव भूतले।**
**धनिनां निर्धनानां च। न सख्यं जायते कदा॥**

समान शालिनां, समान गुणवतां, समान भावुकानां, समान जन्मनां. समान विद्या विलसितानां, सख्यं भवति, तत् भिन्नानां कथं?

द्रोणः — राजन् आवां अग्निवेशस्य सन्निधौ सकल विद्या पारङ्गतौ आस्ताम्। विद्या परिसमाप्त्यनंतरं आवाभ्यां गार्हस्त्यधर्मः स्वीकर्तव्यः इति निश्चितः। तदा त्वया भणितं त्वया राज्ञा भवितव्यं इति अनन्तरं विवाहः कर्तव्यः इति।

द्रुपदः — द्रोण! यदा त्वं मां आत्थ सखा तेऽर्हामिति, श्रुत्वा मे आश्चर्यं भवति। कालेन संगतानि जीर्यन्ति। पूर्वं त्वया मे सौहृदं चासीत् तत् केवलं सामर्थ्य बन्धनम्। अश्रोत्रियः श्रोत्रियेण स्नेहं न कुरुते। रथी अरथिनः सखा न भवति। नहि राज्ञां एवंभूतैः नरैः क्वचिदपि स्नेहः भवति।

द्रोणः — राजन्, धनदर्पेण तत्सर्वं त्वया विस्मृतम्। त्वं अधुना धनान्धोऽसि।

**द्रुपदः** — मन्दात्मन् ! श्रियाहीनैः धनच्युतैः सख्यं भवति। त्वां अहं न जानामि। किन्तु ते एक रात्रं भोजनं दास्यामि।

**द्रोणः** — (सक्रोधं उत्थाय) नमस्तेऽस्तु महाराज। कालं निरीक्षस्व। सर्वदा कालः नैकरीत्या चर्लात। नावः शकटानि भवन्ति शकटानि नावः भवन्ति। समयं निरीक्षस्व आवयोः समागमः वैपरीत्येन भविष्यति। (सपुत्रदारः उत्थाय) राजन् विप्रकृतः पन्नगः फणां कुरुते, अन्ततः दशतिच पश्य। (इति प्रस्थितः)

**द्रुपदः** — एते ब्राह्मणाः याचने अग्रेसराः। पौर्वापर्य सम्बन्धं खनन्ति। स्वेच्छया निरातङ्कं अंतः प्रविशन्ति। निर्धनः पुरुषः शष्पसमानः न किमपि साधयिष्यति। पश्यामि किं करिष्यत्ययम्। (इति उत्थाय गच्छति)

(यवनिका पततिं)

* * *

## चतुर्थं दृश्यम्

(ततः प्रविशतः द्रोणार्जुनौ)

**द्रोणः** — वत्स ! सव्यसाचिन् ! त्वमधुना धनुर्विद्यायां कुशलोऽसि। मया यदधीतं तत् सर्वं त्वयि पश्याम्यहम्। त्वं सर्वेषु शिष्येषु मे प्रियतमः। सर्वाः मे आशाः त्वयि पुञ्जीभूताः भवन्ति। किं त्वं जानासि ? किमर्थमहं त्वां एवं एश्यामि।

**अर्जुनः** — गुरो ! नाहं किमपि जानामि। भवद्भिः यत् बोधितं तत् सर्वं अवकलितम् अस्ति।

**द्रोणः** — त्वमेव मे प्रिय शिष्यः। त्वमेव भक्तिमान्। विद्यावान्। भवता साधनीयं कार्यं विद्यते।

**अर्जुन** — गुरो ! किं तत् कार्यं कथयन्तु।

**द्रोणः** — तस्मादेव त्वां एकान्तप्रदेशं आनीतवानस्मि। सावधानेन शृणु मया उदीरितम्।

**अर्जुनः** — अवहितोऽस्मि।

**द्रोणः** — राजा द्रुपदः अहंच सहाध्यायिनौ। सकल विद्यासु सः मत्समानः। विशिष्य धनुर्विद्यायां अप्रतिहतकुशलः सः। विद्या परिसमाप्त्यनन्तरं यदा आवां गृहोन्मुखौ अभवाव तदा तेनोक्तं।

**अहं राजा भविष्यामि। मया सार्थं भवान्प्रियम्।**
**भवतु गाढं सर्वस्वं। वित्तं भोगान् सुखं सखे॥**

**अर्जुनः** — साधु ततस्ततः।

**द्रोणः** — एकदा मे सुतः अश्वत्थामा गोक्षीरार्थं रोरूयमाणः आसीत्। तदाहं मम पत्न्या प्रेरितः एकां कपिलां प्रष्टुं द्रुपदस्य समीपं अगच्छम्।

**अर्जुनः** — साधु कृतं भवद्भिः।

**द्रोणः** — तदा तेन मन्दात्मन्। श्रिया हीनैः धनच्युतैः सख्यं भविष्यति, किन्तु धनिनां राज्ञां, निर्धनानां ब्राह्मणानां सख्यं न भवति। अरथी रथिनः सखा न भवति इत्यवोचत्।

**अर्जुनः** — धनश्रिया गर्वान्धः जातः द्रुपदः। ततस्ततः।

**द्रोणः** — तदाहं, अयि राजन्! ते सुहृत् त्वया निर्दयं तिरस्कृतः, विप्रकृतः पन्नगः फणां कुरुते, समयं निरीक्षस्व, कालः विपर्ययः भवति, निरीक्षस्व आवयोः पुनः समागमाय इत्युक्त्वा प्रस्थितोऽहम्।

**अर्जुनः** — यथोचितं सुष्टु प्रोक्तं भवद्भिः।

**द्रोणः** — तस्मात् अहं मनसि व्यथाविलः आगच्छन्, वीटया खेलयतां कौरव पाण्डवानां [कौशलमपश्यम्। ततः प्रभृति धनुर्विद्यायां त्वं मे परम प्रीतिकरः शिष्यः संजातः। तस्मात् त्वं मे गुरुदक्षिणां प्रयच्छ।

**अर्जुनः** — गुरो तदर्थं सन्नद्धोऽस्मि। किं रोचते भवद्भ्यः। आज्ञापयन्तु।

**द्रोणः** — जीवन्तं द्रुपदं बध्वा मे चरणं सन्निधिं प्रापय। इयमेव गुरुदक्षिणा दातव्या।

**अर्जुन** — अनुगृहीतोऽस्मि। तथैव करिष्यामि।

**द्रोणः — पन्थानः सुखिनः सन्तु । मङ्गलानि भवन्तु ते ।**
**आशिषः सन्ति मे नित्यं । इप्सितं चास्तु फल्गुन ॥**

**अर्जुनः** — ( नमस्कृत्य प्रस्थितः )

**द्रोणः** — आशीविष विष प्रपूर्ण मानसाः राजानः मधुरगीर्भिः जल्पन्तः तेषां प्रभुत्वं व्यापयन्ति । योग्यमयोग्यं न चिन्तयन्ति । तेषां चण्डशासनं निवारयितुं गरुड मन्त्रवत् ब्राह्मण बुद्धिविशेष एव योग्यः भवति । अधुना मे बुद्धि विशेषेण वज्ररूपिणं द्रुपदराजानं, वज्ररूपिणा अर्जुनेन भेत्तुं प्रयतामि ( विहस्य ) श्रीमतां राज्ञां निर्धनानां ब्राह्मणानां मैत्री कथं भविष्यति वा दर्शयेयम् । अरे द्रुपद ! ब्राह्मण मेधा अप्रतिहता । चण्डरवि प्रताप इव प्रचण्डः ब्राह्मणः सर्वं साधयिष्यति । न विस्मर्तव्यं भवता । पश्य मे शक्तिं द्रुपद ! पश्य । ( इति हसन् गच्छति )

( यवनिका पतति )

* * *

# पंचमं दृश्यम्

( द्रोणः वृक्षच्छायायां प्रस्थरे उपविशति । ततः प्रविशति सशस्त्रपाणिः अर्जुनः द्रुपदं हस्तग्राहं कृत्वा )

**अर्जुनः** — राजन् प्रचल द्रोणाचार्य सन्निधिम् । ( इति द्रुपदं समाकर्षति )

**द्रुपदः** — ( द्रोणाचार्यपादयोः पतति )

**द्रोणः** — ( विहस्य ) अयि भोः यूयं द्रुपद महाराजानः । केयं स्थितिः । अहो कालप्रभावः, निर्धन ब्राह्मणस्य पादसन्निधौ श्रीमतां द्रुपद महाराजानां शिरः । किमत्र चित्रम् । किमाश्चर्यं । श्रिया हीनैः, धनच्युतैः साकं सख्यं भवति तत् सत्यमेव । अहं जितोऽस्मि । त्वं पराभूतोऽसि । आवयोः स्नेहः कथं भवति, इति नाहं वदेयम् । मे शिष्येण धीमता त्वं पराजितोऽसि । नमया । त्वमधुना भग्न दर्पोऽसि । हतधनोऽसि ।

त्वं मे वशमागतोऽसि। वीर माभैः प्राण भयात्। वयं ब्राह्मणाः क्षमिणः। शृणु।

**आश्रमे तु त्वया बाल्ये। क्रीडितं च मयासह।**
**तस्मात् संवर्धित स्नेहः। प्रीतिश्च नृपसत्तम॥**

अपिच। जनाधिप! त्वया सख्यं पुनः प्रार्थयेयं। ते राज्यस्यार्धं ददामि, अवाप्नुहि।

**द्रुपदः** — ब्रह्मन्। इदं नाश्चर्यं विक्रान्तेषु महात्मसु। त्वया सह शाश्वतीं प्रीतिमिच्छामि।

**द्रोणः** — सर्वदा, सर्वथा आवां मित्रे। अहं भवता कृतं तिरस्कारं विस्मरामि। शृणु।

**पुष्पेण भिद्यते नैव। वज्रं जगति पार्थिव।**
**ततो वज्रात्मना भाव्यं। वज्रं वज्रेण भिद्यते॥**

* * *

卐

## ॥ प्रबोधनम् ॥

卐

रचयिता

पंडित ओगेटि परीक्षित् शर्मा, एम्. ए.

प्रकाशकः --

ओगेटि अच्युतराम शास्त्री, एम्.ए.



पुस्तक प्राप्तिस्थलम् :--

पं. ओगेटि परीक्षित शर्मा, एम्.ए.
जि ७, शिवकीर्ति, घोरपडी,
पुणे ४११ ००१.
महाराष्ट्र (भारत)







मुद्रकः :--

मे. शंकरराव राजहंस आणि कंपनी
२०३८, जान महंमद स्ट्रीट, पुणे ४११ ००१.
महाराष्ट्र (भारत)

# ।। प्रबोधनम् ।।

अनश्वरं तं यदुवंश भूषणम् । सदा जगन्नाटक सूत्रधारिणम् ।
विलोभयन्तं जन सन्ततिं धिया । भजामि कृष्णं महि धर्मं रक्षकम् ।।

( नान्द्यन्ते )

**सूत्रधारः** — ( नेपथ्याभिमुखं विलोक्य ) हञ्जे ! कुटुम्बिनि ।

**नटी** — आगच्छामि भोः ।

**सूत्रधारः** — विलम्बः संजातः ।

**नटी** — एषाऽस्मि ।

**सूत्रधारः** — हञ्जे ! अवसित मण्डनाऽसि किम् ?

**नटी** — आम्, अवसित मण्डनाऽस्मि ।

**सूत्रधारः** — हञ्जे अद्य अस्माभिः प्रबोधनं नाम नाटकं प्रदर्शयितव्यं विद्यते ।

**नटी** — तदर्थं अहं किं कुर्याम् ।

**सूत्रधारः** — तस्मिन् नाटके भवत्या गातव्यं अस्ति ।

**नटी** — अहं जिगासामि । किन्तु प्रथमतः किं तन्नाटकं, केनलिखितं सविस्तरं कथयतु भवान् ।

**सूत्रधारः** — अयि कुटुम्बिनि श्रृणु । गीर्वाणान्ध्र भाषाप्रवीणेन परीक्षित् शर्मणा विरचितमिदं प्रबोधनं नाम नाटकम् । अयं संस्कृतान्ध्र साहित्य प्रपञ्चे प्रख्यातः कविः ।

**नटी** — अयमेव यशोधरा महाकाव्यस्य, अक्षयगीत रामायणस्य च प्रणेता ।

**सूत्रधारः** — आम्। अयमेव। अधुना सप्तविंशति एकाङ्किकात्मकं परीक्षिन्नाटकचक्रं लिलेख। तस्मिन् नाटके विराजमानं इदं प्रबोधनं नाम नाटकं प्रदर्शयितुं वयं उद्युक्ताः।

**नटी** — गीर्वाण प्रसङ्गे इयती संख्या परिमितं नाटकसंचयं न केनापि कृतं इति मे मनीषा।

**सूत्रधारः** — सत्यमेव। यतः। अयं पूर्व सूरिणां पादचिन्हेषु निवसन्, यत् किंचित् साहित्य रूपेण, राष्ट्र वासिभ्यः सविनयं, अंश दानेन प्रदातुं प्रयतते।

**नटी** — आधुनिकेषु दिवसेषु एतादृशाः विरलाः भान्ति। अयं सत्यं राष्ट्राराधकः। अहं अधुना अधिगत विषयाऽस्मि। किं वस्त्वधिकृत्य, केन रागेण कस्मिन् वृत्ते गातव्यं आदिशतु भवान्।

**सूत्रधारः** — हञ्जे! वसंत ऋतुमुद्दिस्य, वसंत रागेण वसंत तिलकावृत्ते गाय।

**नटी** — **शान्तं वसन्त तिलका कलिका प्रभाभिः।**
**भृङ्गाङ्गना लसित गीत पिकालि रावैः।**
**सानन्द माधव समागम पुष्पिताशा।**
**धात्री प्रियं लसति मंजुल राग रम्या॥**

**सूत्रधारः** — अहो! अतीव जन रञ्जनं भाति ते कण्ठगत स्वर माधुर्यम्।

**नटी** — ( आकर्णयन्ती ) इतः कुत्रापि रथ चक्रनेमिघोषः संश्रूयते।

**सूत्रधारः** — ( आकर्णयन् ) सत्यमभिहितं भवत्या। ( इतस्ततः पश्यन् ) इतः भगवान् श्रीकृष्णः राधेयेन सार्धं स्यन्दनारूढः आगच्छति। नात्रस्थातव्यं आवाभ्याम्। एहि गच्छावः। ( इति गच्छतः )

( ततः प्रविशति राधेयेन सार्धं भगवान् श्रीकृष्णः )

**कृष्णः** — कर्ण! किमर्थमहं त्वां अत्र आनयं किं त्वं जानासि?

**कर्णः** — कृष्ण नकोऽपि जानाति, तव कृत्यस्य कारणम्। कोऽहं ज्ञातुम्।

**कृष्णः** — कर्ण त्वं सनातनान् वेदवादान् जानासि। अपिच सूक्ष्मेषु धर्मशास्त्रेषु परिनिष्ठितोऽसि।

**कर्णः** — कृष्ण ! अधुना तैः किं प्रयोजनम् ।

**कृष्णः** — कर्ण ! यदहं कथयामि तत् सर्वं सत्यम् ।

**कर्णः** — कथ्यतां भावः ।

**कृष्णः** — कर्ण त्वं कानीनोऽसि ।

**कर्णः** — सत्यम् ।

**कृष्णः** — हाँ सत्यं धर्मतः त्वं पाण्डोः पुत्रोऽसि ।

**कर्णः** — कथम् ।

**कृष्णः** — त्वं न जानासि ?

**कर्णः** — तदहं न जानामि ।

**कृष्णः** — अहं त्वां ज्ञापयितुमेव अत्रानीतोऽस्मि ।

**कर्णः** — अहं कानीनः कथम् ?

**कृष्णः** — श्रृणु । एकदा दुर्वासाः कुन्ति भोजस्य गृहं समागतः ।

**कर्णः** — सुलभ क्रोधः, विख्यात ऋषिः दुर्वासाः ।

**कृष्णः** — आम् स एव ऋषिः ।

**कर्णः** — अनन्तरं ।

**कृष्णः** — कुन्ती तं ऋषिं बाल्ये श्रद्धया अर्चयामास ।

**कर्णः** — ऋषिपूजनं युक्तमेव भवति भारतीय नारीणाम् ।

**कृष्णः** — सः ऋषिः प्रीतः तस्यै वरं प्रायच्छत् ।

**कर्णः** — कोऽयं वरः कीदृशः ।

**कृष्णः** — सः मन्त्रमेकं उपदिश्य, तेन मन्त्रेण सूर्यः ते वश्यः भविष्यति इति वरं दत्तवान् ।

**कर्णः** — ततस्ततः ।

**कृष्णः** — एकदा कुन्ती गङ्गायां स्नातुं गत्वा उद्यन्तं सूर्यं विलोक्य मन्त्रं पपाठ ।

**कर्णः** — तदा किं जातम्।

**कृष्णः** — सूर्यः कुन्त्याः समीपमागत्य, तया सः किंचित् कालं यापयामास।

**कर्णः** — तेजस्विनां सर्वं साध्यं भवति।

**कृष्णः** — आम् लोके असाध्यमपि तेषां साध्यं भवति।

**कर्णः** — ततस्ततः।

**कृष्णः** — तदा त्वं तस्यां सद्योजातः।

**कर्णः** — आश्चर्यमेवैतत्।

**कृष्णः** — सावधानतया शृणु।

**कर्णः** — भाव! चित्तैकाग्रेण अवधारयामि।

**कृष्णः** — तदा लोक भयात् सा त्वां गङ्गानद्यां एकस्यां पेटिकायां तत्याज।

**कर्णः** — अहो किमाश्चर्यमेतत्।

**कृष्णः** — सा सूर्यमहिम्ना कन्यात्वं प्राप पुनः।

**कर्णः** — भाव! अयं वृत्तान्तः बहुरोचको भवति।

**कृष्णः** — त्वं अधुना विदित वृत्तान्तोऽसि।

**कर्णः** — आम् विदित वृत्तान्तोऽस्मि।

**कृष्णः** — तस्मात् त्वं कानीनः।

**कर्णः** — कृष्ण। अनेन प्रकारेण जन्मतः कानीनः सत्यमेव।

**कृष्णः** — ततः त्वं धर्मशास्त्राणां निग्रहात् पाण्डवपक्षे राजा भविष्यसि।

**कर्णः** — कृष्ण! एतावत्पर्यन्तं यदुक्तं भवता तत् सर्वं श्रद्धया श्रुतं। इतः परं नाहं श्रोतुमिच्छामि केशव!

**कृष्णः** — कर्ण! मद्वाक्यं शृणु।

**कर्णः** — नहि मे प्रयोजनं भवति केशव।

**कृष्णः** — कर्ण, श्रद्धया शृणु। पितृपक्षे ते पार्थाः सन्ति। मातृपक्षे वृष्णयः सन्ति। तस्मात् मत्पक्षं एहि। ते सर्वदा शुभमेव भविष्यति। यतः।

**अवश्यं शृणुमे वाक्यं। आसान्तं सूर्यनन्दन।**
**पार्थाश्च वृष्णयस्सर्वे। सहायास्ते भवन्ति च ॥**

**कर्णः** — कृष्ण ! त्वं मां विमोहयितुमिच्छसि। अधुना तत्कथं भविष्यति। ते कथं मां जानन्ति.।

**कृष्णः** — शृणु !

**आयान्तं त्वां मयासार्थं। अभिजानन्तु पाण्डवाः।**
**युधिष्ठिरात्पूर्वजातं। कौन्तेयं हर्षवर्धनाः ॥**

**कर्णः** — अधुना अभिज्ञानेन किं प्रयोजनं भवति।

**कृष्णः** — तथामावद। तत् अत्यन्त प्रयोजनं भविष्यति।

**कर्णः** — कथम् ?

**कृष्णः** — पाण्डव कौरव विरोधः समाप्तः भविष्यति। रक्तपातः न भवति।

**कर्णः** — तत् कथम्।

**कृष्णः** — त्वमेव कारणं महाभारतयुद्धस्य।

**कर्णः** — कथमहं कारणं भवामि।

**कृष्णः** — तवा धारेण, तव साहयेन कौरवाः पाण्डवान् जेतुमिच्छन्ति।

**कर्णः** — सा भावना निराधारा।

**कृष्णः** — निराधारा इति मा वक्तव्यम्।

**कर्णः** — भवतु नाम। यत् भावि, तत् भूतं। अधुना तत् न परिवर्तनीयं भवति।

**कृष्णः** — भवतु नाम। शृणु।

**संपूजयिष्यन्ति नितान्त भक्त्या। पादौ गृहीत्वा भवतः प्रकामम्।**
**ते भ्रातरः पञ्च परं विनीताः। मत्वा धरेन्द्रं मनसा भवन्तम् ॥**

**कर्णः** — कृष्ण ! तव उक्ति वैचित्रिः मे आश्चर्य कारिणी भवति।

**कृष्णः** — अपिच श्रृणु। युधिष्ठिरः ते व्यजनं नीत्वा वीजयिष्यति।

**कर्णः** — ततस्ततः।

**कृष्णः** — महाश्वेतं छत्रं भीमसेनः तव ग्रहिष्यति।

**कर्णः** — ततस्ततः।

**कृष्णः** — श्वेत हयैर्युक्तं ते रथं अर्जुनः वाहयिष्यति।

**कर्णः** — कृष्ण ! ते भाषणं श्रोत्र पेयं भवति।

**कृष्णः** — अरविन्दसमान सुन्दरास्यः डिम्भकः अभिमन्युः नित्यं ते प्रत्यासन्नो भविष्यति।

**कर्णः** — अहो महत् भाग्यम्।

**कृष्णः** — सत्यमेतत् महत् भाग्यमेव।

**अभिमन्युस्तवोत्सङ्गे। सदा प्रेम्णा चरिष्यति।**
**पद्माननो हसन् बालः। सकलानन्ददायकः॥**

महाबाहो ! भ्रातृभिः सह पाण्डवैः राज्यं भुङक्ष्व। ते भ्रातृभिः पाण्डवैः सह सौभ्रात्रं अद्यास्तु। अपिच।

**अहं स्वयं त्वामभिषिच्य राज्ये। सर्वंसहापालनदक्ष भूपम्।**
**समस्त सौख्यानि विधाय कर्ण। क्षेमं त्वदीयं शतथा करिष्ये॥**

**कर्णः** — हे वेदवेद्य कृष्ण ! भवता प्रतिपादितं सर्वं जानाम्यहं। अहं धर्मतः पाण्डोः पुत्रोऽस्मि। किन्तु।

**आदित्यस्य प्रभावेन। कन्या साऽसूत मां प्रियम्।**
**विसृष्टोहं तया सद्यः। स्तन्यपानं विना हरे॥**

**कृष्णः** — तत् दैविकं संजातम्। त्वं तत् विस्मर।

**कर्णः** — कृष्ण ! अहं तथा जातः किन्तु तया यथा कुशलं न भवति तथा विसर्जितः । किमत्र विद्यते यत्किमपि मातृवात्सल्यम् ?

**अम्बेति कथितं नैव । आवाभ्यां पुत्रकेतिच ।**
**नानुभुक्तं च वात्सल्यं । लौकिकं जीवने हरे ॥**

**कृष्णः** — अयं दैवनिर्णयः ।

**कर्णः** — वेदपुरुष ! सूतः मां दृष्ट्वा गृहमभ्यनयत् । राधा मां अपोषयत्, तस्मादहं राधेयः ।

**कृष्णः** — कर्ण ! त्वं जन्मना कौन्तेयः पोषणेन राधेयः

**कर्णः** — वेदवेद्य ! सूतः मां सुतं अभिजानाति । सः मे जातकर्मादीन् कारयामास । अपिच वसुषेणेति नाम कारयामास ।

**कृष्णः** — एतत् सर्वं अप्रस्तुतं भवति मे ।

**कर्णः** — गोविन्द ! भवतापि अप्रस्तुत प्रशंसा कृता ।

**कृष्ण** — ( विहस्य ) ओम् । ततस्ततः ।

**कर्णः** — माधव ! अहं विवाहितः । मम पुत्राः पौत्राश्च जाताः ।

**कृष्णः** — इयं लोक परिपाटिः भवति ।

**कर्णः** — श्रीधर ! तासु मे हृदयं कामबन्धितं संजातम् ।

**कृष्णः** — किं ते उक्तिः समाप्तिमागता ?

**कर्णः** — हृषीकेश ! पृथिव्या सकलया । उत सुवर्ण राशिभिश्च, नोचेत् भयात् हर्षात् वा नोत्सहे मिथ्यां कर्तुं ।

**कृष्णः** — कात्र मिथ्या । सर्वास्थितिः प्रत्यक्ष गोचरा ।

**कर्णः** — पद्मनाभ ! शृणु ।

**धार्तराष्ट्र कुले सत्यं । दुर्योधन समाश्रयात् ।**
**त्रयोदश समाराज्यम् । मया भुक्तमकण्टकम् ॥**

**कृष्णः** — कौन्तेय ! जानाम्यहं सर्वमेतत् ।

**कर्णः** — नारायण ! संबन्धाः विवाहाश्च मया सूतैः कृताः ।

**कृष्णः** — कर्ण मया कथितं सर्वं रक्तसंबन्ध बान्धव्यमेव । परमार्थतः तत्वं कथयामि न कथाम् ।

**कर्णः** — केशव ! नाहं कुर्यां किमपि विषयेऽस्मिन् ।

**भयलोभात् वधात् कर्तुं । अनृतं नोत्सहे हरे ।**
**धार्तराष्ट्रस्य भूपस्य । मित्रद्रोहंतु पातकम् ।**

वधात्, भयात्, लोभात्, बन्धात्, अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य । तव वशित्वात् पाण्डवाः सर्वं कुर्युः नात्र संशयलेशोऽपि विद्यते ।

**कृष्णः** — कर्ण त्वामहं अन्यत महत्तमं विषयं कथयामि श्रद्धालुर्भव ।

**सती प्रिया पाण्डव धर्मपत्नी । यस्यै पुरा भण्डनमेव जातम् ।**
**यज्ञात् प्रभूता सुरसुन्दरी या । षष्ठं पतिं त्वां मनसा वृणीता ॥**

**कर्णः** — कृष्ण ! मां शतथा अङ्गीकारोन्मुखं कर्तुं त्वं प्रयतसे । मां बहुधा विलोभयसि । किन्तु मामकीनं मनः अन्यायं कर्तुं न समीहते ।

**कृष्णः** — कर्ण ! सन्निहितेषु संदर्भेषु तदा तदा असत्यं अन्यायं च कर्तव्यं भवति । तत् धर्मशास्त्र प्रामाणिकं च भवति ।

**कर्णः** — अच्युत ! यदि धर्मात्मा मां कुन्त्याः प्रथमजं पुत्रं जानाति, सः राज्यं न ग्रहिष्यति ।

**कृष्णः** — तत् सर्वं अहं पश्येयं । ते विचारः मास्तु ।

**कर्णः** — यदि अहं तत् राज्यं प्राप्नुयां तर्हि तत् दुर्योधनाय दद्याम् । किमर्थं एतत् सर्वं करणीयं । धर्मात्मा स एव शाश्वतः युधिष्ठिरः अस्तु ।

**कृष्णः** — किं समाप्तं तव भाषणम् ।

**कर्णः** — जनार्दन यत् चिन्तितं यत् अनुभूतं, मया तत् सविस्तरं निर्भयं तव निकटे उच्चारितम् ।

**कृष्णः** — अयि कर्ण ! राज्य लम्भोऽपपादनं त्वां न लभेत्, मया दत्तां पृथिवीं न प्रशाशयितुमिच्छसि श्रृणु।

**जयो भवत्येवहि पाण्डवानां। अन्योन्य संभूत रणाङ्गणे तु।**
**तदा भवन्तं विलपन्तमाजि। त्रातुं न भूतो भवतीह वीरः॥**

**कर्णः** — जानाम्यहं महात्मन्।

**कृष्णः** — त्वं न किमपि जानसि। श्रृणु।

**युधि ते रोदनं कोऽपि। न श्रोष्यति महाभुज।**
**गाण्डीविनं महायुद्धे। कोऽपि नैव विजेष्यति॥**

**कर्णः** — कृष्ण ! अहं प्रयतिष्यामि अर्जुनं प्रतिरोध्दुं।

**कृष्णः** — कर्ण ! प्रतिरोध्दुं तं तत्र समयः अपि लभ्यः न भवति। श्रृणु।

**श्वेताश्वरथिनं युद्धे। गर्जन्तं कृष्णसारथिम्।**
**कपिकेतन वीभत्सुं। दृष्टवा मृत्युं भवेः परम्॥**

अपिच।

**धर्मात्मा यदि क्रुद्धोऽस्ति। समैक्यं यान्ति सागराः।**
**दृष्टवा तत् भीषणं दृश्यं। सर्वेनष्टाः भवन्ति च॥**

**गाण्डीविनं महाबाहो। शङ्करोऽपि न जेष्यति।**
**लक्षाधिकैश्च राधेयैः। धार्त राष्ट्रैश्च किं भवेत्॥**

कर्ण, त्वं अभिमान धनोऽसि। वर्तमान स्थितिं त्वं न जानासि। कथं ज्ञास्यति वर्तिष्यमाणं। अहं त्रिकालज्ञः। सर्वं ते कथयिष्यामि श्रृणु। अर्जुनस्य गाण्डीव निर्घोषं अशनि घातमिव मत्वा सर्वे इतस्ततः पलयिताः भवेयुः।

**राजनः राजपुत्राश्च । दुर्योधन समायुताः ।**
**निधनं प्राप्य बाणैश्च । भजेयुर्नरकं ध्रुवम् ।।**

**कर्णः** — वासुदेव ! त्वं भविष्यमाणं जानासि तथापि मां संमोहयितुमिच्छसि। जानाम्यहं पृथिव्याः विनाशः संप्राप्तः इति। अहं शकुनिः दुश्शासनः दुर्योधनश्च निमित्ताः। कृष्ण असंशयं महत् युद्धं उपस्थितं पाण्डवानां, कौरवाणां च।

**पराजिताः भवेयुश्च । धार्तराष्ट्राः न संशयः ।**
**विजेताश्च भविष्यन्ति । पाण्डवेयाः स्वयं ध्रुवम् ।।**

सर्वे वयं गाण्डीवाग्नि प्रवेक्ष्यामः। सर्वेऽपि शस्त्राग्नि दग्धाः यमसदनं प्राप्स्यन्ति।

**कृष्णः** — कर्ण ! वसुन्धरा अवश्यं विनाशं प्राप्स्यति। सर्वनाशः त्वन्मूलं भविष्यति। मदीयं वचनं ते हृदयं नोपैति।

**वसुन्धराविनाशोऽयं । सूचितोऽ शुभसूचकैः ।**
**त्वन्मूलं भविता नूनं । विद्धि सर्वं महारथ ।।**

**कर्णः** — कृष्ण ! यदि वयं अस्मात् रणात् जीवन्तः भवेम, त्वां पश्यामः। नोचेत्, कृष्ण, स्वर्गे मिलिष्यामः।

**कृष्णः** — कर्ण !

**सतां वचः सदाश्रेयः । मन्तव्यं बुद्धिशालिभिः ।**
**विनाशकाले संप्राप्ते । बुद्धि नाशो विजायते ।।**

**कर्णः** — कृष्ण ! भवता प्रतिपादितं सत्यं भवति। अहं विश्वसिमि त्वां वेदवेद्यः इति।

**विश्वासः सुहृदां लोके । सर्वलाभ प्रदायकः ।**
**विश्वासबद्ध राजानं । संत्यज्य निवसेः कथम् ।।**

अपिच।

**विश्वस्त मित्रं स्वार्थाय। वंचयेयं कथं हरे।**
**मरणं मे वरं लोके। जीवने मित्र वंचनात् ॥**

अहं स्वार्थाय धार्तराष्ट्राणां अपकारकः न भवेयम्। पुनर्मिलनाय मां आदिश। नमस्तेस्तु भगवन्। ( नमस्कृत्य गच्छति )

**कृष्णः** — रक्तपातं निवारयितुं शतथा. कृत प्रयत्नोऽभवम्। किन्तु भविष्यमाणं न कोपि निरोत्स्यति।

**पृथिव्याः नाशनं प्राप्तं। उल्कापाताः भवन्ति च।**
**सर्वे वीराश्च शत्रूणां। प्राप्स्यन्ति मरणं ध्रुवम् ॥**

( इति गच्छति )

( यवनिका पतति )

* * *

## द्वितीयं दृश्यम्

( भागीरथी तीरे कुन्ती एकाकिनी उपविश्य चिन्तयन्ती आस्ते )

**कुन्ती** — ( आत्मगतम् ) श्रुतं मया विदुरात् यत् कृष्णः कुरुभ्यः असिद्ध अनुनयः पाण्डवान् प्रत्यागतः इति। अपिच अविग्रह भाववचनं श्रीकृष्णस्य सुयोधनः नाङ्गीचकार। असौ चेदि पांचाल केकयैः भीमार्जुनाभ्यां कृष्णेन यमैश्च युयुधानः अस्ति। किन्तु युधिष्ठिरः सर्वदा धर्ममेव काङ्क्षते। धृतराष्ट्रः पुत्रशत मदेन मत्तः निधर्मे पथि चलति। अवश्यं कुरूणां अनयः भविता। अहो बत अहं कथं मे बाधां सहेयं, केनमार्गेण मे शान्तिः भविष्यति। अहं दुःखार्ता। हाधिक् महान् ज्ञाति वधः भवति। अधनस्य मरणं श्रेयः। नहि ज्ञातिक्षयः जयः। शान्तनवः चमूपतिः आचार्यः,

कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति। कर्णः सदा पाण्डवान् द्वेष्टि। दुर्वासाः मे वरं ददौ। स्त्रीभावात् बालभावाच्च तदा तथा अचिन्तयम्। मार्तण्डः समागतः। कन्यादशायां स्थितायां मयि कर्णः संजाताः। मार्तण्ड मायया अहं पुनः कन्यकात्वं अवाप। अधुना समयः संप्राप्तः। इयंतं कालं सर्वमपि मे हृदि गूढं निक्षिप्तं मया। मातृ हृदयं कथं परितपति, शुष्यति, नृत्यति, रसपूर्णं भवति नकोपि जानाति। केवलं माता जानाति।

**धर्मः स्थिरो भवत्यत्र। धर्मो धारयते भुवम्।**
**तस्माद्धर्मं गमिष्यामि। शरणं जीवने भृशम्॥**

यः कानीनगर्भे मे पुत्रवत् परिरक्षितः सः कथं भ्रातृ हितं वचनं न कुर्यात्। सः एतावत् पर्यन्तं न जानाति। ज्ञानाविर्भावानन्तरं सः पाण्डवपक्षं समेष्यति। अयं मे प्रथमगर्भशुक्ति मुक्ताफलं। स्त्रीणां स्वीयापत्यं मधुरं भवति। काकशावकः काकस्य प्रीतिकरः भवति। गत्वाहं अधुनैव कर्णस्य भागीरथी तीरगृहं तेन सर्वमपि विदितं यथा भवेत् तथा कथयेयम्। ( इति अश्रुकररुहैः परिमार्जयन्ती गच्छति )

( यवनिका पततति )

* * *

# तृतीयं दृश्यम्

( भागीरथी तीर गृहं। कुन्ती उपविष्टा अस्ति। ततः प्रविशति कर्णः )

**कर्णः** — मातः कासित्वम्।

**कुन्ती** — अहं पाण्डवानां जननी। अहं भवन्तं द्रष्टुं समागताऽस्मि।

**कर्णः** — राधेयोऽहम्। त्वामभिवादये। ( इति नमस्करोति ) ते किं करवाणि ब्रूहि मातः।

**कुन्ती** — अनामयं ते भवतु कुमार। (इति हस्तमुद्यम्य कथयति)

**कर्णः** — काऽसित्वं। किं ते सहायं करिष्यामि ब्रूहिमातः।

**कुन्ती** — किञ्चिन्मे कथनीयं विद्यते।

**कर्णः** — कथ्यतां अवहितोऽस्मि।

**कुन्ती** — सुत! त्वं राधेयः नहि। कौन्तेयः। त्वं सूतकुले न जातः। मे वचः विद्धि। एतदुदन्तं कथयितुमेव त्वत्सकाशं समागताऽस्मि।

**कर्णः** — हे मातः। सर्वं जानाम्यहं। श्रुतं मया श्रीकृष्ण मुखारविन्दात्। तथापि।

**किमिच्छसि त्वं वद मातृमूर्ते। मत्तः प्रियं सौख्यकरं त्रिना भीः।**
**कथं त्वमस्यां भयद क्षपायां। समागता शोक परीत चित्ता॥**

**कुन्ती** — अहं एतदिच्छामि त्वां कथयितुं। त्वं कानीनः। कुन्तीराजस्य भवने मम संजातः। हे पुत्रक! त्वं पार्थः असि। यथा राम जनार्दनौ, तथा कर्णार्जुनौ भवेताम्। संहितात्मनोः युवयोः असाध्यं लोके नस्यात्। कर्ण! त्वं शोभिष्यसे पञ्चाभिः भ्रातृभिः सहितः। त्वं सूतपुत्रो नहि। त्वं वीर्यवान् पाण्डववंशे संजातोऽसि। श्रृणु।

**त्रयीतनुप्राभव दत्तरूपः। कन्यादशायां मम चारुमूर्ते।**
**जातः पुरा हाटक कुण्डलाभ्यां। जानीहि सत्यं त्वमसीति पार्थ॥**

**कर्णः** — मातः! अहं क्षत्रियो जातः। किन्तु न प्राप्तः क्षत्रसत्क्रियाम्। मम हितं पूर्वं त्वया मातृवत् न चेष्ठितम्। सा मां संबोधयसि अद्य केवलं आत्महितैषिणी। पुर्वं अभ्राता विदितः। अधुना युद्धकाले प्रकाशितः। यदि पाण्डवानहं गच्छामि लोकः किं मां क्षत्रं वदिष्यति? अहं धार्तराष्ट्राणां अफलं कथं कुर्याम्। ततः।

**कर्णः परं नश्यतु किन्तु मातः। धर्मस्वरूपस्सततं धरण्यां।**
**चकास्तु दद्याद्बहु वारसानां। सुनीतिमार्गं मम धर्म मार्गात्॥**

**कुन्ती** — कानीन! त्वं पाण्डवपक्षं समागच्छ। त्वां दृष्ट्वैव दुर्योधनः युद्धाय

कृतनिश्चयः। त्वया हीनः धार्तराष्ट्रः जलनिर्गत मत्स्यः इव विचेष्टमानः भवति। तदा युद्धविरामः भविष्यति। त्वयि केन्द्रीकृताः धार्तराष्ट्राणां भावना विशेषाः। युद्धाऽभावे सर्वोऽपि देशः सर्व समृध्या नर्तिष्यति। त्वन्मूलकः देशसौख्यः भवति। त्वं पाण्डवानां अग्रजोऽसि। त्वं मे वचनं शृणु।

**कर्णः** — माता ! त्वं अधुना स्वार्थे विचेष्टमाना पाण्डवान् त्रातुं मम समीपं भिक्षार्थी समागतासि, यतः कर्णः भिक्षितः स्वजीवितमपि दास्यतीति। विद्यते किं ते मातृहृदयम्। तदानीं त्वं निर्दया मातृहृदय विहीना मां सद्योजातं शिशुं गङ्गयां विसृष्टवती। किमिदं ते मातृ हृदयं भवति। प्रेमपरीत हृदया माता कदापि शिशुं न त्यजति जलधारायाम्। व्यतीतानि संवत्सराण्यनेकानि। एतावत्पर्यन्तं कर्णः कः कुत्र विद्यते? कथं विद्यते इति ते उत्सुकताऽपि नासीत्। अधुना पञ्चपाण्डवेषु संजात ममकारेण मत्सकाशात् तेषां हानिः यथा न भूयात् तथा शब्दं नेतुं त्वं समागतवती। एतत निश्चयं ज्ञायते यत् ते मातृ हृदयं नास्तीति। त्वं पाण्डव रक्षाभिक्षार्थी समायाताऽसि। नहि कर्णोऽपरिस्यन्दमान प्रेम्णा। अहं प्रथमतः त्वां पश्यामि मम जीवने। एतावत्पर्यन्तं भवती मे दृष्टिपथं नायता किमिदमाश्चर्यम्।

**कुन्ती** — सुत ! त्वं मातृ हृदयं अज्ञात्वा मातृ वात्सल्यं टीकां करोषि। मातरं विनिन्दसि। त्वं मम तदा वर्तमान स्थितिं, समाज रचनां च विचार्य मां विनिन्द। अहं कस्यां स्थित्यां तथाऽकरत्वं त्वं न जानासि। अहं त्वत्कृत निन्दां सेहे। मम कन्या दशायां त्वं जातोऽसि। तादृशी स्थितिः लोके टीकास्पदा भवति। तस्मात् तत् वृत्तमासीत्। अहं सर्व मातृ हृदयेन ब्रवीमि। नाहं जानामि यत् युद्धं उभयोः वंशयोः भविष्यतीति। अहं अचिन्तयं यत्र कुत्रापि त्वं कुशली जीवन् असि इति। अधुना भविष्यमाणं युद्धं विचार्य पुत्रप्रेम्णा त्वां द्रष्टुं प्रष्टुंच समागताऽस्मि। युद्धस्तु अनिवार्यः कृतः दुर्योधनेन। अस्मिन् संयुगे कः जीविष्यति कः मरिष्यति नकोऽपि वक्तुं समर्थः भवति। जयाजयौः दैवनिर्णीतौ। तस्मात् त्वां सत्यं ज्ञापयितुं समयेऽस्मिन् समागतास्मि। त्वं सद्यस्थितिं सत्यं ज्ञात्वा व्यवहर। यत् भविष्यति तत् भविता।

**कर्णः** — दैवं। दैवं कुत्र विद्यते। सर्वस्यापि वयमेव कारणम्। श्रीकृष्णात् सर्वं ज्ञात्वाहं कथयामि यत् पाण्डवानां जयः निश्चयः भवति इति। तथापि धर्मं नाहं त्यक्ष्यामि। इद वपुः दुर्योधन समाश्रयात् पुष्टं विवर्धितं च। बहवः समाः तस्य सकाशे यापिताः। अधुनाऽहं तं त्यक्त्वा त्वत्सकाशं आगच्छेयं यदि धर्मनाशकः भविष्यामि

तदपेक्ष्या मम मरणमेव वरं मातः। मे अपकीर्तिभारजीवनं योग्यं न भवति। किन्तु कीर्तिकृते अहं मरिष्याभि। मातः यत् उद्भूतं जगति तत् सर्वं यदा कदावा नशिष्यति। तस्मात् मरणात् मे भीतिः न विद्यते। अपयश सः भीतिः जायते। अयं मे निर्णयः नाहं पाण्डवपक्ष गन्ता। यतः।

**स्वार्थाय लोके सततं यतन्ते। जनाः परं धर्मपथं विहाय।**
**माताऽसि सत्यं ननु पाण्डवानां। तवाऽपि नास्त्येवहि धर्म भावः॥**

**कुन्ती** — त्वं मे बाधां न जानासि। मातृदेवो भव इति वेदाः घोषयन्ति। वयं वेदमतानुयामिनः। त्वं मातृदेवो भव।

**कन्यादशायां शतथा प्रसूतिः। लोकापवादस्य निदान भूता।**
**इत्येवमालोक्य ससर्ज बालं। हेतुर्नचास्तीह सुत द्वितीयः॥**

**कर्णः** — अहं न तृणी करोमि ते कथनम्। लोके विद्यमान स्थितिं कथयामि। माता यदि शिशोः मलमूत्रादिकं उद्धृत्य स्वच्छतां करोति, तेन शिशुना सार्धं खेलति, तस्य सुखदुःखादिकं आत्मीयं पश्यति सा माता भवितुमर्हति, तदा सा माता मातृ हृदय पूर्णा भवति। मयि तत् कर्म त्वया न कृतम्। ततः मयि न विद्यते पुत्रप्रेम। अहं कदापि त्वां मातः जननि, अम्बे इति नाहूतवानस्मि। अनेन कारणेन त्वयि मम मातृ भावना नास्ति। त्वं जानासि मां प्रसूतवती इति। तस्मात् तत् प्रसूति कारणं निमित्तीकृत्य मां बोधयितुं समागतासि। मम शैशवं त्वमदृष्टवती। तव मातृ हृदयं अहं अदृष्टवानास्मि। तस्मात् आवयोर्मध्ये माता सुत भावः शून्यरूपेणास्ति।

**कुन्ती** — त्वं अतीव कठोरं वदसि। त्वं मातृ हृदयानभिज्ञः। हृदय विहीनः। त्वं अन्येषां बाधां न जानाषि। अहं मे बाधां विशदयितुं अशक्ता भवामि। अधुना मे स्थितिः क्रमुक कर्तरामध्ये क्रमुकस्य स्थितिरिवास्ति। अहं प्रेम्णा तुलाभारमिव माध्यस्तमवलम्बे।

**कर्णः** — भवती मम समक्षं तव भावं विदशयितु। अहं सन्नद्धोऽस्मि ते भावनानुसारं विधातुम्।

**कुन्ती** — सुत! शृणु यदि त्वं युद्धे मरिष्यसि पञ्च पाण्डवाः मे जीविष्यन्ति।

यदि त्वया युद्धे अर्जुनः व्यापादितः भवति तर्हि त्वयासहिताः पाण्डवाः पञ्चपाण्डवाः भविष्यन्ति। एतदेव मे कामितं भवति।

**कर्णः** — श्रुतं मया ते कामना काऽस्ति। तस्मात् कथयामि ते सुतान् न हनिष्यामि। शतशः युद्धे मे मरणमेव भवति सर्वथा।

**कुन्ती** — ( कर्णौ पिधाय ) शान्तं पापं तथामावद पुत्र।

**कर्णः** — श्रृणु मातः।

**न ते जातु नशिष्यन्ति। पाण्डवाः पञ्च भ्रातरः।**
**निरर्जुनास्सकर्णाश्च। सार्जुनाः पञ्च पूर्वकम्॥**

**कुन्ती** — ( कर्णस्य वचः श्रुत्वा दुःखात् प्रवेपमाना कर्णं धैर्येण समालिङ्ग्य ) कर्ण दैवं तु बलवत्तरम्।

**कर्णः** — जननि ! अनामयं स्वस्ति च ते भवतु।

**कुन्ती** — ( अश्रु संमार्ज्य ) कर्ण पार्थ ! तेप्यनामयं स्वस्तिच भवतु। ( इति कुन्ती चिन्तया निर्गच्छति )

**कर्णः** — अहो ! सर्वथा मम जीवने अनेके अन्तरायाः भवन्ति। इयं सृष्टिः अतीव विचित्रा। सर्वथा सर्वेण स्वगम्यस्थानं प्राप्तुं प्रयत्नशीलेन भवितव्यम्। ( आत्मगतम् ) जयस्त्वस्मान् वरिष्यति।

**मेधावी शकुनिश्चाहं। राजा दुर्योधनस्तथा।**
**दुश्शासनश्च चण्डात्मा। जेष्यामो पाण्डवान् ध्रुवम्॥**

मार्गे अनेके अन्तरायाः भवन्ति तथापि जनाः गम्यस्थानं प्रविशन्ति। तद्वत् कौरवाः विघ्नाभिहताः अन्ततः युद्धे विजेतारः भविष्यन्ति। अधुनाऽहं राजराजसभां गच्छेयम्। ( इति निष्क्रान्तः )

( यवनिका पतति )

* * *

## ॥ गुरुदक्षिणा ॥

**गुरु बलायुत धीमय छेकान्। निरत दानरतान् प्रिय भूपान्।**
**महितराष्ट्र हितैक महर्षीन्। भरतवर्ष सुखाय नमामि ॥**

नान्द्यन्ते

**सूतधारः** — ( नेपथ्याभियुखं विलोक्य ) अये विद्यावति प्रिये। ( इति आह्वयति।

**नटी** — ( नेपथ्ये ) शान्तं भोः आगच्छामि।

**सूतधारः** — कालातीतो भवति त्वरस्व।

**नटी** — ( ससंभ्रमं प्रविश्य ) एषाऽस्मि देवः। निवेदयतु भवान्।

**सूतधारः** — प्रिये विद्यावति अद्य का तिथिः।

**नटी** — न जाने।

**सूत्रधारः** — तत्र भवती अद्य तिथिमपि न जानाति।

**नटी** — सर्वं सर्वेषां ज्ञायते किं भोः?

**सूत्रधारः** — भवती विद्यावती इति पृच्छामि।

**नटी** — जानाम्यहं विद्यमान वस्तु स्थितिम्।

**सूत्रधारः** — भवती किं जानाति कथय।

**नटी** — अहं वासरान् मासान्श्च जानामि।

**सूत्रधारः** — तथा यदि स्यात् अवश्यं भवत्या तिथिज्ञानेनापि भवितव्यं इति मे वितर्कः।

**नटी** — आर्य! शालासु, विद्यालयेषु, विश्वविद्यालयेषु, कार्यालयेषु सर्वे सर्वत्र वासराः आङ्ग्ल मासाश्च उपयुन्जते। प्रतिवर्षं विराम दिवसाश्च वासर मास दिनाङ्क

रूपेण दीयन्ते। न कदापि तिथि रूपेण गणायित्वा यच्छन्ति। एतादृशी परिपाटिः वर्तते जगति तस्मात् तिथिं न जानाम्यहम्।

**सूत्रधारः** — अत्र विद्यते न ते दोषः। साधूक्तं भवत्या। भारतीय संस्कृतिः पामव्याधिना परिव्याप्ता प्रतिभाति। सरोगः समूलं नाशयितव्यः।

**नटी** — प्रस्तुतांशः कः कथयतु भवान्।

**सूत्रधारः** — अद्य पौर्णिमा।

**नटी** — हाँ जानामि अद्य पौर्णिमा इति। किन्तु तिथिं न जानामि।

**सूत्रधारः** — अद्य पौर्णिमा तिथिः।

**नटी** — पौर्णिमा तिथिः प्रतिमासं भवति।

**सूत्रधारः** — अद्य आषाढ पौर्णिमा तिथिः।

**नटी** — कोऽत्र विशेषः।

**सूत्रधारः** — विद्यतेऽत्र महान् विशेषः। अयं भारतीयानां पर्व दिवसः।

**नटी** — किमयं पर्व दिवसः? अहं श्रोतुमिच्छामि सविस्तरं कथयतु भवान्।

**सूत्रधारः** — इयं गुरु पौर्णिमा। श्रुणोतु भवती।

**भारते सर्व लोकस्य। प्रिया च गुरु पौर्णिमा।**
**सर्वे जुहवति सर्वत्र। भक्त्या तां व्यासपूर्णिमाम्॥**

**नटी** — (साश्चर्य) तत्कथं भोः।

**सूत्रधारः** — भारतवर्षे भगवान् व्यासः अष्टादश पुराण स्त्रष्टा। महाभारत भागवत ब्रह्मसूत्र मीमांसादि ग्रन्थानां कर्ता। अयं विज्ञान निधिः। अपिच सूरिभिः कथ्यते यत् व्यासोऽच्छिष्टं जगत्सर्व इति। किंबहुना भारतीय वाङमयस्य, भारतीय परम्परायाः अयमेव गुरुः। अयमेव मूलधारकः। भारतवर्षे अयं दिवसः गुरु दक्षिणा दिवसः इति गुरुपौर्णिमा दिवसः इति व्यास पौर्णिमा दिवसः इति सर्वैरपि परिगण्यते विषयमेनमुद्दिश्य वह्व्यः कथाः सन्ति।

**नटी** — आर्य अहं शुश्रूषे।

**सूत्रधारः** — श्रवणानन्दात् दर्शनानन्दः अधिकायते।

**नटी** — मां जिज्ञासा प्रेरयति प्रष्टुम्।

**सूत्रधारः** — पृच्छतु भवती।

**नटी** — अस्य नाटकस्य नाम किम्?

**सूत्रधारः** — अस्य नाटकस्य नाम गुरुदक्षिणा।

**नटी** — केन ग्रथितमिदं नाटकम्।

**सूत्रधारः** — नाटकमेतत् उभय भाषा प्रवीणेन महाकविना पण्डित परीक्षित् शर्मणा ग्रथितम्।

**नटी** — कीदृशोऽयं कविः।

सूत्रधारः — **नितान्त साहित्य रसग्रहीता।**
**नाट्ये तथा गायन लोलुपश्च।**
**अनन्य साधारण देशभक्तः।**
**संस्कारवाण्या समलङ्कृतोऽयम्॥**

**नटी** — अस्य कवेः माहात्म्यं मां कुतूहलयति नाटकं प्रदर्शयितुम्।

**सूत्रधारः** — एहि मयासार्धं गुरुदक्षिणा नाटकं प्रदर्शयितुम्। मा विलम्बं कुरु। अहं गच्छामि।

**नटी** — आर्य अहं त्वामेवानुसरामि। ( इति गच्छतः )

( ततः प्रविशति वरतन्तुः शिष्यैस्सह। वरतन्तुः मध्ये उपविशति तं परितः छात्राः उपविष्टाः सन्ति।

**वरतन्तुः** — अयि भोः छात्राः! अयं दिवसः भवतां विद्याभ्यासस्य अन्तिमः दिवसः। यूयं अधुना परिसमाप्तविद्याः संजाताः गृहं गच्छन्तु।

**प्रथमः** — ( चिन्ताक्रान्तः ) गुरो विंशति वर्षाणि तत्र भवतः संनिधौ विद्यामभ्यस्य अधुना गृहं गन्तुं वयं नोत्सेहामहे। विचार्यमाणे हृदयं व्यथाविलं भवति।

**द्वितीयः** — गुरो! भवानेव अस्माकं पिता माता च। पितरौ केवलं जन्मदायिनः तस्मात् भवता विसृज्य गृहगमनोन्मुखाः न भवामः वयम्।

**तृतीयः** — अयि भोः वयं परिसमाप्त विद्याः। पुनः जीवने युष्माभिस्साकं मेलनं अस्माकं कदा भविष्यति वयं न जानीमः। तस्मात् गुरु दक्षिणां समर्प्य वयं जिगमिषामः। यत् अस्माभिः दीयते तत् अनुगृहणन्तु।

**वरतन्तुः** — अयि भोः पुत्रकाः कुर्वन्तु भवतां कामनानुसारम्।

**प्रथमः** — ( दक्षिणां गृहीत्वा तस्य पुरतः स्थित्वा ] अयि भोः गुरो ! अयं सुवर्ण खण्डः गृहणातु भवान्। [ इति समर्प्य साष्टाङ्गदण्ड प्रणामं करोति ]

**द्वितीयः** — अयि तपस्विन्। नाहं धनी, किंतु पत्रं पुष्पं फलं तोयं इति न्यायेण अहं पुष्पचयः वस्त्रादिकं, चन्दनं, पूगीफल कर्पूरयुक्त नागवल्लीदळ ताम्बूलं श्रीफलं च ददामि। [ इति साष्टान्ङ्गप्रणामं करोति ]

**तृतीयः** — अयि ज्ञानदायिन् ! इयं रजत खण्डं स्वीकारोतु भवान्। [ इति समर्प्न प्रणमति ]

**वरतन्तुः** — अयि भोः अन्ते वासिनः श्रृण्वन्तु भवन्तः। सत्यं वद। धर्मंचर। स्वाध्यायान्माप्रमदः। धर्मान्नप्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृ देवो भव। पितृ देवो भव। आचार्य देवो भव। अतिथि देवो भव। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। ओं शान्तिः शान्तिः शान्तिः।

[ सर्वे छात्राः उत्थाय प्रणम्य गच्छन्ति। ततः प्रविशति प्रियशिष्यः कौत्सः ]

**कौत्सः**—[ प्रणम्य ] अयि ज्ञानदायिन् गुरो ! सर्वे सहाध्यायिनः तत्र भवद्भ्यः सुवर्ण रजत महावस्त्रादिकं समर्प्य गुरुभक्ति प्राकटयन्। किन्तु [ अर्धोक्त्या ]

**वरतन्तुः** — त्वं न किमपि कर्तुं समर्थः असि। अरे डिम्भक कौत्स ! जानामि ते हृदयबाधां।

**कौत्सः** — गुरो ! भवाद्भिः अध्यापितं यत् गुं=अज्ञानान्धकारं राति=नाशयति इति गुरुः। तेन ज्ञानेन अहं प्रतिभा व्युत्पत्तिभ्यां समञ्चितः अभवम्। अहं भवतां शुश्रूषया सुशिक्षितः, क्रम शिक्षणालङ्कृतः अभवम्। भारतीय परम्परा गाङ्गा वाहिनीव पवित्रा अविच्छिन्ना। तदनुसारं विद्यापरिसमाप्त्यनन्तरं गुरुदक्षिणा देया इति साम्प्रदायः। भोः गुरवे यत् रोचते तत् दातव्यं इति मे मनीषा। तस्मात नाहं गुरदक्षिणां कामपि एतावत्पर्यन्तं अयच्छम्। भोः भवदीयाभिलाषां प्रकटी कुर्वन्तु विनासंकोचं भवन्तः इति प्रणिपत्य याचे।

**वरतन्तुः** — अरे छात्र। न कामये किमपि। सर्वाः कामनाः असङ्गलवित्रेण विछिन्नाः मया।

**कौत्सः** — तथा मा कथयन्तु गुरुवर्याः। यदि गुरवः एवं भणन्ति तर्हि गुरुदक्षिणायाः कोवाऽर्थः। सा निरर्थका भवति। लोकसाम्प्रदायः विनश्यति। अहं साम्प्रदाय विनाशं न कामये।

**वरतन्तुः** — अरे पुत्रक! तव विचारधारया अहं प्रभावितः अभवम्। अहं अतीव तुष्टोऽस्मि। मे महान् आनन्दः भवति, यतः त्वं भारतीय परम्पराभिलाषी संजातः।

**कौत्सः** — धन्योऽस्मि गुरो! अहं भवतां मनोरथं पूरयितुं अभिलषामि। यतः।

**गुरूणां सेवया पूर्णाः। भवन्ति च मनोरथाः।**
**विद्या सदा ददात्येव। सर्वं कल्पलतेव सा॥**

**वरतन्तुः** — भवतु। त्वं गुरुदक्षिणारूपेण मह्यं चतुर्दश कोटि सुवर्ण मुद्राः समर्पय।

**कौत्सः** — अनुगृहीतोऽस्मि भोः। युष्मदीय कामनां पूरयिष्यामि। (इति नमस्कृत्य गच्छति)

**वरतन्तुः** — ओं भद्रं कर्णेभिः श्रृणुयाम देवाः भद्रं पश्ये माक्षभिर्यजत्राः स्थिरैरङ्गै स्तुष्टवागुं स्वस्तनूभिः व्यशेम देवहितं यदायुः। ओं शान्तिः शान्तिः शान्तिः।

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(रथ्यायां वटवृक्षस्य छायायां क्रमपदघन जटापाठकाः उपविश्य परस्परं भाषन्ते)

**क्रमपाठकः** — अरे पदपाठक ! राजा रघुः अस्मिन् विश्वजिति अध्वरि सकलं संपच्चयं ब्राह्मणेभ्यः दक्षिणारूपेण, संभावना रूपेणच प्रददौ ।

**पदपाठकः** — भवता कियती दक्षिणा प्राप्ता ?

**क्रमपाठकः** — मया प्राप्ता सहस्र रूप्यक परिमिता संभावनारूपा दक्षिणा।

**घनपाठकः** — अरे इयन्ती संभावना प्राप्ता ।

**जटापाठकः** — भवान् कियत् प्राप्तवानस्ति ?

**घनपाठकः** — अहं सहस्राधिक सुवर्ण मुद्राः प्राप्तवानस्मि ।

**पदपाठकः** — भवता इयन्ती संभावना कथं प्राप्ता ?

**घनपाठकः** — अहं तु घनपाठकः। तस्मात् अधिकतमा संभावना मया लब्धा।

**जटापाठकः** — मम तावत् सहस्र सुवर्णमुद्राः प्राप्ताः आसन्।

**क्रमपाठकः** — विचार्यमाणे महानानन्दः भवति, यतः रघुवंशीयाः वेदपूजकाः इति। अस्मिन् अवसरे राजा रघुः सर्व सदस्यानां ब्राह्मणानां तेषां योग्यतानुसारं संभावनादिकं दत्वा, वेदवाङ्मये तेषां विद्यमान गौरवं प्रादर्शयन् ।

**पदपाठकः** — रघुवंशीयानां वेदपाठकेषु अति भक्तिश्रद्धादयः भवन्ति ।

**जटापाठकः** — अयि सुहृदः। विश्वर्जिति अध्वरे आकाशे नक्षत्राणीव ब्राह्मणाः वेदपारगाः समुपस्थिताः ।

**घनपाठकः** — सर्व जगत् जानाति यत् रघुवंशीयाः वितरण शीलिनः इति। तस्मात् समस्त राजन्यकं, ब्राह्मण्यं समागतं तत्र। एते सर्व विषयेषु अनन्वयालङ्कारिकाः भवन्ति।

**क्रमपाठकः** — आहाहा ! किं भोजनं। का समाराधना। अहो भक्ष्य भोज्य चोष्य पेय लेह्यादिकं स्वादिष्टं रसप्रपूर्ण आसीत्। सर्वे मानवाः आकण्ठं भुक्त्वा उद्गारं कुर्वन्तः रघुं कीर्तयन्तः समापित भोजनाः उदतिष्ठन्।

**पदपाठकः** — तत्र न केवलं वेदपण्डिताः सन्मानिताः किन्तु सकल शास्त्र पुराणेतिहास निष्णाताः अपि भूखण्ड दानेन सन्मानिताः आसन् ।

**जटापाठकः** — सालङ्कार रसप्रपूर्ण मधुराकाराः कवयः अपि कविता गोष्ठ्यां सन्मानिता अभवन्।

**क्रमपाठकः** — अस्मिन् विश्वजिति अध्वरे वेदपाठकाः, षट्शास्त्र पण्डिताः, षडङ्ग निष्णाताः, भरतनाट्य पारीणाः, नर्तकाः इत्यादयः सर्वेऽपि सन्मानिताः। किमुत विस्तरेण। सर्वशुक्ला गीर्वाणसुन्दरी शारदा समाराधिता।

**पदपाठकः** — अधुना सराजा निर्धनो संजातः इति जन श्रुतिः।

**घनपाठकः** — जनश्रुतिः निराधारा। यतः

**कदापि निर्धनो भूयात्। राजा दानैर्न भूतले।**
**कला निर्गत चन्द्रश्च। कलाहीनोऽस्ति किं सदा॥**

**जटापाठकः** — रघुवंशीयाः त्यागाय संभृतार्थाः भवन्ति। ते कदापि निर्धनाः न भवन्ति।

**पदपाठकः** — अरे जटापाठक! निर्गते सर्व कासारजले किं कासारः निर्जलः न भवति?

**क्रमपाठकः** — कासारः निर्जलः भवति। किंतु रघुवंशीयाः निर्धनाः न भवन्ति।

**जटापाठकः** — शृणु।

**दानेन वर्धते लक्ष्मीः। जलेन तरवो यथा।**
**तस्मात् दातव्यमस्माभिः। दाने धर्मः प्रतिष्ठितः॥**

**पदपाठकः** — यदि वयं दानं एवं कुर्मः एकस्मिन् क्षणे निर्धनाः भवेम।

**क्रमपाठकः** — तत् दानं, तादृशी वितरणशीलता राज्ञां केवलं भूषणं योग्याच भवतः। ते कर रूपेण प्रजाभ्यः गृह्णन्ति दानरूपेण समयेषु वितरन्ति।

**घनपाठकः** — सत्यमुदीरितं भवता। यथा रविः रसं गृहीत्वा समयेषु रूपान्तरेण वर्षारूपेण सहस्रगुणं आदत्ते तद्वत् राजापि करग्रहणं करोति ददाति च।

**जटापाठकः** — अनेन दृष्टान्तेन समयः अलङ्कृतः। वयं पल्वल सदृशाः। राजानः अकूपार समानाः।

**पदपाठकः** — इदं दृश्यं न कदापि विस्मरणीयं भवति मे। यतः ब्राह्मण्यं सर्वं विश्वजिति अध्वरे संतुष्टमभूत्। अनुपदमेव सर्वं ब्राह्मण्यं एक चित्तीभूय वेदमन्त्रैः

राजानं रघुं आशीर्वचन पुरस्सरं कीर्तयामासुः। सर्वमपि अन्ततः शान्तरसे परिणद्धम्।

**जटापाठकः** — एतादृश समागमः, कार्यारम्भश्च मम जीवने एतावत्पर्यन्तं न श्रुतं न दृष्टं च।

**क्रमपाठकः** — अस्माभिरपि न कुत्रापि पठितं श्रुतंच।

**घनपाठकः** — अयि सुहृदः भोजनवेळा अतिक्रान्ता त्वर्यतां त्वर्यतां भोजनार्थं। सर्वं विहाय भोक्तव्यं इति सिद्धान्तः गच्छामः यूयं सर्वे मामनुसरन्तु। (इति सर्वे एकरेखायां गच्छन्ति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(राजा रघुः मृण्मयपात्र सहितः एकत्र उपविशति। ततः प्रविशति मन्त्री)

**मन्त्री** — (प्रविश्य) अयि महाराज! नमांसि।

**रघुः** — एहि मन्त्रिवर्य। उपविशतु भवान्।

**मन्त्री** — [उपविश्य] महाराज ह्यः सकलकला परिपूर्णः भवतः वदनचन्द्रः अद्य किञ्चित् कलाविहीनः भाति किमत्र कारणम्।

**रघुः** — सर्वमेतत् भवतां काल्पनिकं भवति। अहं सर्वदा आनन्देन परिपूर्ण कलानिधिः भवामि।

**मन्त्री** — महाराज! भावगोपमं माकरोतु। मेघच्छन्नेन्दुरिव भवतां वदनं प्रतिभाति। विश्वजिति अध्वरे भवतां कोशागारः निश्शेषः अभूदिति किं चिन्ता।

**रघुः** — तादृशी चिन्ता न कदापि मां वृणीते।

**मन्त्री** — तत्र भवन्तः धीरोदात्त नायकाः।

**रघुः** — मन्त्रिवर्य श्रृणुतावन्मम वचनम् ।

**चिन्ता मे न कदाप्यस्ति । स्वार्थाय जगती तले ।**
**सर्वदा दूयते स्वान्तं । नास्ति दानाय साम्प्रतम् ।।**

**मन्त्री** — सर्वेभ्यः ब्राह्मणेभ्यः, गुरुभ्यः सर्व सञ्चयं दत्वा तेभ्यः दारिद्र्यं क्रीतवानस्ति महाराज ।

**रघुः** — मन्त्रिवर्य तथा मा वदतु भवान् ।

**दत्तं हुतं विराजेते । गुरवे च धनंजये ।**
**यथाक्रमं धरण्यांतु । साधनीयं हि शाश्वतम् ।।**

**मन्त्री** — एतादृश भावना मूलका कीर्तिः आचन्द्र तारार्कं जगति विराजते ।

**रघुः** — महामन्त्रि जीवितेन किं प्रयोजनम् ? श्रृणोतु भवान् ।

**जीवितेन च किं भोगैः । शाश्वतं भुवि जन्तवः ।**
**नैव जीवन्ति तस्माद्धि । कीर्तिस्साध्या धरातले ।।**

**मन्त्री** — प्रभो एतादृशं कर्म रघुवंशीयानां जन्मतः संक्रामितं भवति किन्तु नान्येषां । सत्यं धर्मंच पालयितुं राजा दिलीपः सिंहाय स्वजीवितं समर्पयितुं प्रायतत ।

**रघुः** — **सत्यं दान दया धर्माः । रक्षणीयाहि सर्वशः ।**
**विनष्टास्ते भवेयुश्चेत् । धरा तूर्णं विनश्यति ।।**

**मन्त्री** — भवतां यदुदीरितं तत् सत्यम् । मे समक्षं सर्व विश्वजित् अध्वरः चलन चित्रमिव भासते । सकल भारतात् नैकराजानः रथतुरग गजारूढाः अध्वर विशेषं दिदृक्षवः समागताः ।

**रघुः** — सूर्यवंशीयाः आध्यात्मिक शक्तिसंपन्नाः ।

**मन्त्री** — तस्मात् संभावनार्थं समागतं वेदपारगाणां भासुर भूसुराणां मण्डलं भूतलावतीर्ण खगोळमिव व्यराजत ।

**रघुः** — वयं भारतीय साम्प्रदायं प्रचारयितुं कटिबद्धाः स्मः।

**मन्त्री** — आसेतु हिमाचलं भरतवर्षः वेदमन्त्रैः प्रतिध्वानितः पूतश्चासीत्।

**रघुः** — वयं भारतदेश परम्परां न विस्मरिष्यामः।

**मन्त्री** — नैकजनः षड्रसोपेत भोजनं भुञ्जन्तः तवकीर्तिं प्रशंसयामासुः।

**रघुः** — अध्वर समये विशेषतः विश्वजिति अन्नदानं विशेषेण कर्तव्यं इति सिद्धान्तः।

**मन्त्री** — प्रभो मे हस्तात् याचकेभ्यः ब्राह्मणेभ्यः अर्बुद्धकोटि रूप्यकाणां दानमभूत्।

**रघुः** — सर्वमपि अध्वरे निश्शेषमासीत्।

**मन्त्री** — **धन्योऽयं वंश एवासीत्। दानेन महताध्वरे।**
**तृप्ताश्च बाडवास्सर्वे। भूतले सर्व याचकाः॥**

**रघुः** — ( उदासीनः विचारयति )

**मन्त्री** — ( हठात् रघुं विलोक्य ) महाराज किमर्थं यूयं अतीव उदासीनाः दृश्यन्ते।

**रघुः** — इदं कर्म रघूणां सहजातं इति विचारयामि।

**मन्त्री** — सहजातमिति जानामि किन्तु भवतां वदने निर्लिप्तता वर्तते कारणं किम्?

**रघुः** — सर्व कोशागारः याचकेभ्यः, पण्डितेभ्यः, गायकेभ्यः दानरूपेण प्रदत्तः आसीत्। अधुनाऽहं समाप्त कोशागारः अभवम्। यदि कोऽपि याचकः अधुना समागत्य याचिष्यते तर्हि किं कर्तव्यं इति चिन्तयाम्यहं।

**मन्त्री** — महाराज! अधुना न कोऽपि याचकः अस्ति भारते। मा विचारयतु भवान्।

**रघुः** — अयि मन्त्रिमहाशय! भवान् अधुना गत्वा सर्वातिथीन् सक्षेमं स्वीय गृहाणि प्रेषयितुं व्यवस्थां करोतु।

**मन्त्री** — भवतां आज्ञानुसारं गत्वाहं सर्वं यथास्थिति निर्णायिष्ये। नमांसि महाराज। ( इति नमस्कृत्य निर्गतः )

**रघुः** — ( दीर्घं निश्वस्य ) यत् योग्यं तत् भविष्यति। ( इति निर्गतः )

( यवनिका पतति ).

* * *

# चतुर्थं दृश्यम्

( ततः प्रविशति कौत्सः )

**कौत्सः** — [ आत्मगतम् ] गुरुदक्षिणार्थी कुत्र गच्छेयमहं। चतुर्दशकोटि मुद्रा परिमितं धनं कः दास्यति। [ इतस्ततः पश्यन् रथ्यायां गच्छन्तं स्वीय सहाध्यायिनं दृष्ट्वा तं उच्चैः एवं आह्वयति ] अरे बदरिक एहि इतः अरे एहि इतः [ इति हस्त-मुन्नमय्य आह्वयति। ततः प्रविशति बदरिकः ]

**बदरिकः** — [ प्रविश्य ] अरे कौत्स। त्वं अत्र एकाकी रथ्यायां किं करोषि ?

**कौत्सः** — मे रथ्यायां न किमपि विद्यते कर्तुं। किं करणीयं इति चिन्ता निमग्नः अभवम्।

**बदरिकः** — केयं चिन्ता।

**कौत्सः** — कथ्यतेचेत् चिन्ता निवृत्तिः भवति किम् ?

**बदरिकः** — मनसि निक्षिप्यते चेत् तस्याः निवृत्तिः भविष्यति किम् ?

**कौत्सः** — न भविष्यति। किन्तु सुखदुःखौ, जयाजयौ लाभालाभौ समान-तुलायां निक्षिप्य शान्ततया कार्यं कर्तव्यं इति मे चिन्ता।

**बदरिकः** — भवतु नाम। अहं किमर्थं आहूतः।

**कौत्सः** — अहं मे चिन्तां कथयामि श्रृणु। अहं गुरुदक्षिणार्थी किं कर्तव्यता मूढतया एकान्ते अत्रोऽपविश्य रथ्यायां चिन्तयामि। अत्रान्तरे ते दर्शनं बभूव।

**बदरिकः** — गुरुर्दक्षिणा येनकेनापि रूपेण दातुं शक्यते।

**कौत्सः** — जानाम्यहं। इयं गुरुदक्षिणा न सुलभ साधनीया भवति।

**बदरिकः** — कितात्मकेयं गुरुःक्षिणा कथय प्रथमं।

**कौत्सः** — चतुर्दशकोटि मुद्रा परिमितं विद्यते।

**बदरिकः** — अरे बत! इयन्ती गुरुदक्षिणा भवता देया किम्?

**कौत्सः** — इयन्ती दातव्या इति चिन्तयामि।

**बदरिकः** — अस्मिन् धरातले न कोऽपि दाता विद्यते इयन्तं धनं दातुम्।

**कौत्सः** — अरे बदरिक! एक शिरसः द्वे शिरसी योग्यरीत्या विचारयिष्यतः।

**बदरिकः** — भवान् यत् कथयसि तत् सत्यं। किन्तु न कोऽपि मे दृष्टिपथं न याति। [ इति द्वावपि निमेष मात्रं मौनेन विचारयन्तौ स्तः। हठात् आश्चर्येण बदरिकः कथयति ]

**बदरिकः** — अरे कौत्स! श्रृणु। राजा रघुः विश्वजिति अध्वरे पर्याप्तं धनं विद्वद्भ्यः याचकेभ्यः प्रादात् इति मया श्रुतम्।

**कौत्सः** — यद्यहं अधुना गच्छेयं तर्हि स राजा पृष्टः मह्यं इयन्तं धनं दास्यति किम्?

**बदरिकः** — प्रयत्ने दोषो नास्ति। अधुना बहु विलम्बनं जातं। स राजा याचकेभ्यः वेदशास्त्र पुराणेति हास संगीत नाटय विद्वद्भ्यः सर्वस्वं प्रदाय मृण्मयपात्र द्वितीयः बभूवेति किं वदन्ती प्रचलति।

**कौत्सः** — तव मतानुसारेण न किमपि प्रयोजनं विद्यतेऽति भवान् वदति।

**बदरिकः** — गच्छ त्वं। भवान् अवश्यं अस्मिन् विषये सफलो भविष्यति इति मे अन्तरात्मा कथयति।

**कौत्सः** — गत्वा तं राजानं पृच्छेयम्। यतः श्रणु!

**कासारपूर्णं जलमातनोतुं। ऋते च वर्षात् नहि कोऽपि शक्तः।**
**दाता रघुस्सर्व महीतलेऽस्मिन्। नीहाररुपाः खलु सर्व भूपाः॥**

**बदरिकः** — साधु श्लोकितं तदीय महिमान मुद्दिश्य । अरे कौत्स ! त्वामन्तरेण न कोऽपि समर्थः भवति गुरुकामनां पूरयितुं । अधुनैव त्वं गच्छ ।

**कौत्सः** — अरे बदरिक ! दैवेच्छया तव समागमः जातः । सम्यक् मार्गदर्शन-मपि जातम् । इतःपर मे कर्म अविघ्नपरिसमाप्ति प्राप्स्यति इति कथने न कापि शङ्का ।

**बदरिकः** — रघुवंशीयाः असाध्यमपि स्वीय पराक्रमेण साधयिष्यन्ति । तत् तेषां व्रतम् ।

**कौत्सः** — यदि एतावन्मात्रं धनं रघोः समीपे नस्यात् तर्हि अन्यत्र गत्वा तावन्मात्रं समानीय मह्यं दास्यति इति भवान् वदति ।

**बदरिकः** — ते राजानः दातारः । प्रतिगृहीतारः वयं । जगत् आधाराधेयेन प्रचलति । चतुर्दश भुवनाः अपि अन्योन्याश्रयेण सहकार भावेन चलन्ति । स राज रक्षकः । वयं रक्षणीयाः । वयं अस्मदीम तपोशक्त्या सकल वसुन्धरां निरोगां करि-ष्यामः । अत्र अन्योन्याश्रय गुणः वर्तते । तस्मात् ते कार्यं अवश्यं भविता । गम्छाम्यहं ।

**कौत्सः** — तिष्ठरे तिष्ठ । अहं अत्यन्त ऋणी भवामि ते ।

**मित्रेणाहं समादिष्टः । भ्राजे ज्ञानेन रंहसा ।**
**मित्रोदये ध्रुवं ध्वान्तं । भजते खलु शुद्धताम् ।।**

( इति बदरिकेनसार्धं हस्तचालनं कृत्वा तेन सार्धं गच्छति )

( यवनिका पतति )

* * *

## पंचमं दृश्यम्

( रघुः एकाकी उपविश्य चिन्तयति । ततः प्रविशति परिचारकः )

**परिचारकः** — ( प्रविश्य ) अयि महाराज ! कौत्सोनाम वरतन्तु शिष्यः तत्र भवतः द्रष्टुं द्वारि तिष्ठति ।

**रघुः** — क्षिप्रं प्रवेशय ।

**परिचारकः** — यथाज्ञापयति देवः । ( इति नमस्कृत्य गच्छति )

**रघुः** — ( आत्मगतम् ) अवश्यं अयं वरतन्तु शिष्यः यत् किमपि अर्थं याचितुं समागतः इति मन्ये । (ततः प्रविशति विनम्र कौत्सः )

**कौत्सः** — महाराज स्वस्ति भवते । चिरकालं राष्ट्रं धारयतु भवान् ।

**रघुः** — [ उत्थाय ] नमोवाकं प्रशंसामहे ऋषिवराय । [ इति नमस्करोति ]

**कौत्सः** — प्रभो रघो ! तत्र भवतः कीर्तिचन्द्रिका दिगन्तरालं स्पृशति ।

**रघुः** — धन्योऽस्मि महाभाग । [ इति कौत्सस्य पादयुगुलं स्वमृण्मय पात्रजलेन प्रक्षाळ्य तमर्चयित्वा पीठोऽपरि उपविष्टुं विज्ञापयति ]

**कौत्सः** — [ उपविशति ]

**रघुः** — [ हस्तौ बद्ध्वा विनम्रः ]

**कुशाग्रबुद्धे कुशली गुरुस्ते । यस्मादवाप्तोसि भवानशेषम् ।**
**विज्ञानराशि वदनारविन्दात् । लोकस्तु चैतन्यमिवार्क बिम्बात् ॥**

**कौत्सः** — प्रभो रघो ! विलसति सूर्यवंशे जगती तले प्रजानां क्लेशः कुतः।

**रघुवंशे प्रशास्तीह । क्लेशस्य प्रभवः कुतः ।**
**आदित्ये पुष्करे भाति । तमसस्थानमस्ति किम् ॥**

**रघुः** — महात्मन् संतुष्टोऽस्मि भवतां कृपया । किमत्र कारणं भवतामागमनेन निवेदयन्तु भवन्तः ।

**कौत्सः** — अयि प्रभो ! अद्य आषाढ पौर्णिमा अयं गुरुपौर्णिमा दिवसः। नामान्तरमस्य विद्यते ध्वजदिवसः इति च ।

**रघुः** — अयं दिवसः भारतीय संस्कृत्याः निकषोपलः वर्तते ।

**कौत्सः** — अहं अस्मिन् दिवसि गुरुदक्षिणां दित्सामि गुरवे वरतन्तवे । तस्मात् महाराजानं भवन्तं याचितुं समागतोऽस्मि ।

**रघुः** — अहो तपस्विन् । भवान् मत्सकाशं अधुना याचितुं समागतोऽस्ति । ( मुहूर्तं विचिन्त्य ) साधु किं याच्यते तत्र भवता ।

**कौत्सः** — नरेन्द्र ! शरीर मात्रेण तिष्ठन् आभाति । नृपाः गलित विभवाः शोभन्ते । क्रमेण पीतस्य कलानिधेः कलाक्षयः पुनः वृद्धे भवति खलु । तस्मात् अधुना गुर्वर्थमाहर्तुं अन्यत्राहं यतिष्ये । निर्गलिताम्बुगर्भं शरत्घनं चातकः न याचते । ( इत्युक्त्वा उत्थाय जिगमिषति )

**रघुः** — विद्वन् । त्वया गुरवे प्रदेयं वस्तु किमात्मकं । किं परिमाणं भणतु ।

**कौत्सः** — राजन् । परिसमाप्त विद्येन मया वरतन्तुमहर्षिः गुरुदक्षिणायै विज्ञापितः विद्यापरिसंख्यानुसारेण चतुर्दशकोटि मुद्रापरिमितं धनं मह्यमाहरेत्युक्तवान् । अहं अधुना भवन्तं प्रभुशब्दशेषं मत्वा विद्यामूल्यं अल्पेतरत्वात् निर्बन्धुं नाभ्युत्सहे । तस्मात् अहं जिगमिषुः अस्मि ।

**रघुः** — अयि भोः श्रुतपारदृश्य । गुरुदक्षिणार्थं रघोः सकाशात् मनोरथ मनवाप्य दात्रान्तरं गतोऽसिचेत् मे परिवादस्य नूतनाविर्भावः भविष्यति, तथा मा भूयात् । महात्मन् त्वां प्रशस्ते मदीये अग्नयागारे द्वित्राण्यहानि चतुर्थः अग्निः इव वसन् सोढुमर्हसि । अहं तव प्रयोजनं साधयितुं यतिष्ये ।

**कौत्सः** — राजन् तथैव वसिष्ये । स्वस्ति भवते । [ इति निष्क्रान्तः ]

**रघुः** — [ आत्मगतम् ] अहो अयं वरतन्तुशिष्यः गुरुदक्षिणार्थी अर्थहीनं मां शरणं प्रपन्नः । किं कर्तव्यमधुना । मत्सकाशे यदासीत् सत्सर्वं प्रदत्तं ब्राह्मण याचकेभ्यः । वयं रघुवंशीयाः त्यागाय संभृतार्थाः । यदि न दास्यामि रघूणां कलङ्कः भवति । भवतु तत्र मे न व्यथा । किन्तु भारतीय संस्कृतिः भ्रष्टा भविष्यति । तदहं नसेहे । देश परम्परा समक्षं वैयक्तिक जीवनं तुच्छम् । कुटुम्ब जीवनं निरर्थकम् । तस्मात् भारत संस्कृति संरक्षणार्थं अवश्यं करणीयं बह्वस्ति । क्षतात् त्रायते इति क्षत्रियः । अयं क्षत्रिय शब्दः भुवनेषु रूढः ।

**वयं हि लोके खलु नीच जन्तवः। सुखेषु नित्यं मधुरं विलोलुपाः।**
**अशाश्वतं कश्मल दूषितं तनुः। विदध्महे देशहिताय केवलम्॥**

देशगोवेद रक्षणार्थं युद्धमपि वरं भविष्यति। तस्मात् अहं धनाधिपं कुबेरं रोत्स्यामि। रघुवंशीयानां असाध्यं भुवि न विद्यते।

**अशाश्वतेन देहेन। साधनीयं हि शाश्वतम्।**
**वस्तुलोके नितान्तं च। सज्जनानामियं कृतिः॥**

[ इति गच्छति ]

[ यवनिता पतति ]

* * *

## षष्ठं दृश्यम्

[ ततः प्रविशति कुबेरः श्रेष्ठीसहितः द्वावपि स्वीय स्थानयोः उपविशतः ]

**श्रेष्ठी** — महाभाग कुबेर। भवान् मे अत्यन्तं रोचते यतः धनी।

**कुबेरः** — अहं धनमन्तरेण नान्यत् चिन्तयामि। सर्वमपि कर्म धन संपादनार्थं मया क्रियते।

**धनं सत्यं धनं विद्या। धनं ज्ञानं धनं प्रभुः।**
**कृत्याऽकृत्यं भवत्येव। धनार्थं वसुधातले॥**

**श्रेष्ठी** — चतुर्विध पुरुषार्थेषु अर्थार्जनं पुरुषलक्षणं। जीवने अर्थो यदि स्यात् धर्म काम मोक्ष पुरुषार्थान् मानवः साधयिष्यति। सर्वे गुणाः काञ्चनमाश्रयन्ते। इति लोकोक्तिः सत्यमेव भवति।

**कुबेरः** — मदपेक्षया जगति नऽकोपि धनाढ्यः विराजते। अहं सर्वं करिष्यामि। अहं असाध्यं साधयिष्यामि। दिक्पालेषु अहं धनाढ्यः उत्तराधिपतिश्च।

**अर्थोहि सत्यं जगति प्रजानां। अर्थोहि नूनं व्यवहारयोग्यः।**
**अर्थोहि लोके बलदायकः परम्। अर्थेन हीनः खलु शष्पतुल्यः॥**

**श्रेष्ठी** — न केवलं भूवलयं किन्तु लोकत्रयमपि धने प्रतिष्ठितम्।

**कुबेरः** — सत्यं भणितं भवता। यतः।

**धनमग्निर्धनं वायुः। धनं सूर्यो धनं वसुः।**
**धनमिन्द्रो बृहस्पति। वरुणं धनमश्नुते॥**

अर्थेन हीनः मानवः सकलगुणगणसमञ्चितोऽपि, सुन्दरोऽपि, बुद्धिमानपि, कुलीनोऽपि, वक्ताऽपि लोके गौरवहीनः भवति। तस्मात् यथा कथं चित् मानवेन अर्थवता भवितव्यं। अर्थसाधनं वाणिज्येन भवति। ततः अर्थकाङ्क्षिणः वाणिज्यं कुर्वन्ति।

**श्रेष्ठी** — भवतां भाषणे प्रत्यक्षरं अर्थयुक्तं भाति मे।

**कुबेरः** — अपिच श्रृणु।

**वाणिज्यं सर्व देशेषु। कर्तव्यं मानवैः प्रियम्।**
**वाणिज्येन विना राष्ट्रं। अशान्तिमधिगच्छति॥**

तस्मात् देशहिताय वाणिज्यं षाडगुण्य रसायनमिव शक्तिदायकं भवति।

**श्रेष्ठी** — (इतस्ततः विलोक्य) अयि राजन् कुबेर। उत्तरस्यां दिशि धरापराग पटलः धूम मालिकेव सर्वत्र व्याप्नोति।

**कुबेरः** — अयं आषाढमासः। कालकण्ठ कन्धर कालकूटच्छायानुकारी मेघमालेयं अम्बराङ्गणे प्रच्छन्ना भाति न परागपटलः।

(ततः प्रविशति गणकः)

**गणकः** — (ससंभ्रमम्) अयि भोः कुबेर शस्त्रास्त्रपाणिः राजा रघुः सबलं गज तुरग रथ पदातिभिः पत्तनं रोध्दुं समायाति इति जनाः हाहारावं कुर्वन्ति।

**कुबेरः** — राजा रघुः मां रोध्दुं समायाति।

**गणकः** — इति किंवदन्ती प्रचलति।

**श्रेष्ठी** — तस्य राज्ञः धनस्यावसरः कुतः। अयं वंशः रघूणां भवति। तेषां धनावश्यकता कदापि न भवति। ते पालकाः धर्मरक्षकाश्च।

**कुबेरः** — गणक त्वं गत्वा कोशागारं अन्य कनिष्ठ गणकैः सह परिरक्षस्व।

**गणकः** — यथाज्ञापयति देवः। ( नमस्कृत्य गणकः गच्छति )

**कुबेरः** — अयि भोः श्रेष्ठिन् ! न ज्ञायते भवता। अयं राजा विश्वजिति अध्वरे सर्वमपि स्वीय कोशागारं वेदशास्त्र पुराणेतिहास तज्ञेभ्यः अभिनय दक्षेभ्यः दक्षिणा-रूपेण दत्तवान्। अयं तेषां राज्ञां अनूचान साम्प्रदायः।

**श्रेष्ठी** — त्यागे भारतीय संस्कृतिः समुद्भूता। ततस्ततः।

**कुबेरः** — अधुना तस्य राज्ञः सकाशे एकं द्रम्मकमपि न विद्यते।

**श्रेष्ठी** — दानेन दारिद्र्यं क्रीतवान्। ततः सः निर्धनो जातः।

**कुबेरः** — अधुना धनस्य काप्यत्यन्तावश्यकता संजाता इति मन्ये।

**श्रेष्ठी** — तस्मात् धनार्थे धनदं त्वां रोध्दुं स राजा समायाति।

**कुबेरः** — यदि मां स राजा प्रष्टुं समायाति उत रोध्दुं, नाहं जाने। किन्तु जनश्रुतिः प्रचलति यथेच्छम्।

**श्रेष्ठी** — ते राजानः सर्वदा देशहिताय गोब्राह्मण रक्षणाय सर्वस्वं त्यागं कुर्वन्ति।

**कुबेरः** — राजा योध्दुमेव समायाति चेत् तं प्रतिरोध्दुं न कस्यापि शक्तिः विद्यते। अयं अप्रतिहत शरवेगः।

**श्रेष्ठी** — अयि कुबेर ! तव वाक्य श्रवणेन ममापि किञ्चित् घर्मजलाविर्भावः दृश्यते शरीरे। मुखंच परिशुष्यते। वेपथुः जायते। किं कर्तव्यमधुना धनद !

**कुबेरः** — श्रेष्ठिन् ! वयं कर्तुं व्यवसिताः। मा बिभेहि।

**श्रेष्ठी** — किं कथं ?

**कुबेरः** — नास्त्यत्र उपायान्तरं धनकनक वर्षादृते।

**श्रेष्ठी** — किं सुवर्ण वृष्टिः वर्षाप्यते ?

**कुबेरः** — हां सुवर्ण रौप्यमय मुद्रावर्षं वर्षापयिष्यामि ।

**श्रेष्ठी** — यदि भवता तथा क्रियते तर्हि सः प्रति निवृत्तः भविष्यति किम् ?

**कुबेरः** — हां सत्यमेव सः प्रतिनिवृत्तः भविष्यति । वयं च लोके सर्वैरपि कीर्त्यमानाः भवेम । यतः विना युद्धेन सर्वं शान्तगत्या कृतमिति ।

**श्रेष्ठी** — युद्धेन न प्रयोजनं विद्यते । अनुपदं भवान् सुवर्णं वर्षापयतु यथा सः राजा निवृत्तः भवति तथा ।

**कुबेरः** — एहि गच्छावः सुवर्ण वर्षं वर्षापयिष्यावः । ( इति गच्छतः )

( यवनिका पतति )

*　*　*

## सप्तमं दृश्यम्

( ततः प्रविशति रघुः )

**रघुः** — ( प्रशान्त वदनः ) धनाढ्यः कुबेरः रघूणां गुणगणान् सम्यक् जानाति । तस्मात् रजत सुवर्णवर्षं वर्षापयामास । अद्य मे वाग्दानं सफलं भविष्यति । सर्वत्रापि सुवर्ण मुद्राः वर्षापिताः । सर्वधनं संचयनं विधाय आगतस्य कौत्साय प्रदास्यामि ।

**प्रतिष्ठा भाति सर्वत्र । रघूणां त्याग चेतसाम् ।**
**यथा भानोः प्रकाशस्तु । सर्वत्र धरणीतले ॥**

सत्यमेव कुबेरः मे भावनां तर्कयित्वा विना च युद्धं सर्वमपि सुकरं चकार ।

**संकल्पमात्रेण मनोरथे मे । पूर्णस्सुकाले च विना प्रयासम् ।**
**यत्रास्ति भावस्तु पवित्र रूपः । तत्रैव कार्यं फलरूपमेति ॥**

यतः अस्मदीय वंशजाः देशहिताय सर्वस्वं त्यक्तवन्तः आसन् ततः सर्वमपि कर्म सुकरं सपद फलदायकं बभूव ।

**सत्यं दानदयाधर्माः । शाश्वताः मौलिकाः प्रियम् ।**
**रघुवंशीय भूपानां । नितान्तं भारतावनौ ॥**

अधुना कौत्सः मे अग्निहोत्रगृहे चतुर्थाग्निरिव प्रतिभाति तस्य सकाशं गत्वा सर्वमपि धनकनक वस्तुचयं तस्मै प्रदास्यामि। ( इत्युक्त्वा निर्गच्छति )

( यवनिका पतति )

* * *

## अष्टमं दृश्यम्

( कौत्सः उपविश्य गायत्रीजपं कुर्वन्नास्ते। ततः प्रविशति रघुः धनग्रन्थि संवाहकेन सार्धं )

**रघुः** -- महातेजाः कौत्स ! अहं अभिवादये । ( इति नमस्करोति ).

**कौत्सः** — अयि भोः राजन्। किमहं कामित फल ग्रहीता भविष्यामि।

**रघुः** — अहं सत्यं ते कामित फलदायकः भवामि।

**कौत्सः** — राजन् रघो ! मे आनन्दः अगति प्रवाहः भवति ।

**रघुः** — महात्मन् ! एताः सुवर्ण रजत मुद्राराशयः। एनाः गृहीत्वा मां अनुगृह्णन्तु भवन्तः।

**कौत्सः** — राजन् ! मम केवलं चतुर्दश कोटि मुद्रापरिमितं धनं अपेक्षितमस्ति। तस्मात् तावत् धनं गृहिष्यामि। नाधिकम्।

**रघुः** — कौत्स ! लक्ष्मीः त्वां वृणोति। सा ते पादसन्निधिं समागता। तां मा तृणीकुरुष्व।

**कौत्सः** — प्रभो रघो ! किं भवान् मां परीक्षितुमिच्छति।

**गृह्णामि राजन् गुरुदक्षिणार्थं। कुर्यां सदा ज्ञान समार्जनं च।**
**विप्रस्य माभूत् विषयानुरक्तिः। मधुप्रमग्ना मधुमक्षिकेव ॥**

(इति चतुर्दशकोटि मुद्रापरिमितं गृहीत्वा)

**प्रतिष्ठा भाति सर्वत्र। रघूणां त्यागचेतसाम्।**
**यथा भानोः प्रकाशस्तु। सर्वत्र धरणीतले ॥**

**राजन्** — स्वस्ति भवते। (इति गच्छति)

**रघुः**—अहो तपस्विनां प्रभावः। यदि ईदृशानां तपस्विनां स्थितिः भारते भवेत् तर्हि भारतं सर्वथा भारतं स्थास्यति। नमांसि भूयांसि तपस्विभ्यः। (इति नमस्करोति)

(यवनिका पतति)

* * *

## नवमं दृश्यम्

(वरतन्तुः प्राणायामादिकं कुर्वन् आस्ते। ततः प्रविशति सधनं कौत्सः)
**कौत्सः** — (वरतन्तुं विलोक्य, आत्मगतम्)

**अयं गुरुः परं साक्षात्। भ्राजतेऽत्र पितामहः।**
**इवायं दृश्यते लोके। ज्ञानाद्दिव्यं न विद्यते ॥**

गुरो अहं भोः अभिवादये। (इति साष्टाङ्गं नमस्करोति)

**वरतन्तुः** — वत्स ! अपि कुशली भवान्। कथं हठात् समागतोऽसि। त्व विलोक्य बहुवर्षाणि व्यतीतानीवास्ति मे।

**कौत्सः** — अयि तपस्विन् ! भवतां आशीर्वाद बलेन अहं सुखी । अयि गुरो ! भवद्भिः यावत्परिमितं धनं पृष्टं तावत् परिमितं समानीतं धनं स्वीकृत्य मां अनुगृहणन्तु । ( इति धनं गुरोः पादमूले निक्षिपति )

**वरतन्तुः** — छात्र ! त्वया कथं आनीतं कथं सम्पादितं इयन्तं धनं कथयस्व।

**कौत्सः** — गुरो अहं दिवसमेकं गुरुदक्षिणार्थी भ्रामं भ्रामं अन्ततः भवतां छात्रेण, मम सहाध्याय भूतेन बदरिकेन समादिष्टः सर्वथा अलोच्य महाराजानं रघुं प्रति गतवानस्मि ।

**वरतन्तुः** — ततस्ततः ।

**कौत्सः** — स राजा विश्वजिति अध्वरे सर्व स्वीय सम्पत्ति वेदशास्त्र, पुराण, संगीत, नाट्य तज्ञेभ्यः अपिच याचकेभ्यः प्रदाय निर्धनो जातः । स राजा मृण्मय पात्रावशिष्टः आसीत् ।

**वरतन्तुः** — अयं रघूणां त्याग चेतसां कीर्ति वितनोति । अयं तेषां परम्परागत आचारः । ततस्ततः ।

**कौत्सः** — स राजा मया याचितः न किमपि दातुं शक्तः अभूत् ।

**वरतन्तुः** — बत ! ततस्ततः ।

**कौत्सः** — मां अन्यत्र जिगमिषुं विलोक्य स्वीयाग्निगृहे चतुर्थाग्निरिव मां निवसितुं प्रोक्त्वा स राजा स्वयं कुबेरं अरौत्सीत् ।

**वरतन्तुः** — ततस्ततः।

**कौत्सः** — कुबेरः तदीयागमनं श्रुत्वा सुवर्णमुद्रा वर्षं वर्षापयामास ।

**वरतन्तुः** — ततस्ततः ।

**कौत्सः** — स राजा रघुः सर्वमपि धनं समानीय गुरुदक्षिणार्थं गृहाणेति मां न्यवेदयत् ।

**वरतन्तुः** — ततस्ततः ।

**कौत्सः** — मम गुरवे चतुर्दशकोटि मुद्रापरिमितं धनं केवलं अपेक्षितं दातव्यमस्ति नाधिकं इत्यहं राजानमवोचम् ।

**वरतन्तुः** — ततस्ततः ।

**कौत्सः** — सर्वमपि धनं नेतव्यं इति राजा मां प्रार्थयामास। किन्तु अहं।

**नास्ति काङ्क्षा धने राजन्। तापसानां महौजसाम्।**
**ज्ञानार्जने सदामग्नं। जीवितं न तु भौतिके।।**

इत्युक्त्वा चतुर्दशकोटि मुद्रापरिमितं धनं गृहीत्वा समागतोऽस्मि।

**वरतन्तुः** — वत्स! साधुकृतं भवता। त्वं अतीव ज्ञानी। सत्यमेव भौतिक सुखं त्यक्तवानसि। त्वया कृतं सर्वं महदानन्ददायकं भवति मे। तव गुरुभक्ति अपश्यमहं। रघुवंशीयानां नीवारमुष्टिपचेषु कियानादरभावः गौरवश्च विद्येते तं अधुना अवगतोऽस्मि। राजा रघुः अस्मान् परीक्षितुमेव सर्वमपि धनं गृहाणेति उक्तवान्। अस्मिन् संदर्भे कुबेरस्य रघुवंशे भक्तिः। रघुवंशस्य तपस्विषु समादर भावः। धनविषये तापसानां भावना। शिष्याणां गुरौ भक्तिः। परम्परागत गुरुदक्षिणा पद्धतिः इत्येव मादयः लोकस्य कमपि महान्तं संदेशं प्रयच्छन्ति। अयं अपि तत्र एकः नवीन पाठः।

**कौत्सः** — अनुग्रहितोऽस्मि गुरो!

**वरतन्तुः** — वयं नीहार मुष्टिपचाः। जगति भौतिकसौख्यं विसृज्य केवलं परब्रह्माणि संचार्यमाणाः स्मः। अस्माकं अनेन धनेन न किमपि प्रयोजनं विद्यते। तस्मात् धनमेतत् गृहीत्वा त्वं लोकहिताय बहुजन सुखाय, भारतीय परम्परा वृद्ध्यर्थं व्ययी कुरुष्व इति प्रोक्त्वा रघु महाराजाय समर्पय। (इति धनं शिष्याय ददाति)

**कौत्सः** — यथाज्ञापयति महात्मा। (इति गृहीत्वा निर्गतः)

**वरतन्तुः** — ओं न कर्मणा न प्रजया धनेन त्यागे नैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्त विज्ञान सुनिश्चितार्थाः सन्यास योगाद्यतय श्शुद्ध सत्वाः। ते ब्रह्म लोकेतु परान्तकाले परामृतात्परि मुच्यन्ति सर्वे। ओं शान्तिः शान्तिः शान्तिः।

(यवनिका पतति)

* * *

# ॥ उत्तर-गोग्रहणम् ॥

गो-सम्पदं संस्कृति मूलभूतं । आदित्य रुद्राऽदि परं वसूनाम् ।
बान्धव्य रूपेण विराजमानं । भजामि मे राष्ट्रहिताय नित्यम् ॥

( नान्द्यन्ते )

**सूत्रधारः** — अयि भारत परम्परानुरागिणः सभास्ताराः । अद्य वयं शरन्नव-रात्रिषु विजय दशमी शर्वर्यां, उत्तर गोग्रहणं नाम नाटकं प्रयोक्तुं उन्मुखाः अभवाम । तन्नाटकस्यादौ शरदृतुमुद्दिश्य वर्णयन्ती नटी मे कुटुम्बिनी गीतिकां गास्यति श्रृण्वन्तु भवन्तः ।

**नटी** — ( ससंभ्रमं प्रविश्य ) प्रिय प्रथमतः अहं नाटककर्तुः परिचयं विधाय अनन्तरं गास्यामि ।

**सूत्रधारः** — तथैव कुरु ।

**नटी** — अयि भोः सदस्याः । अस्य नाटकस्य कर्ता गीर्वाणान्ध्र भाषाप्रवीणः पण्डित ओगेटि परीक्षित् शर्मा । अयं महाकविः अयं स्वीय काव्य सन्तानैः गीर्वाण-वाणीं अवाकिरत् भूमण्डले, विंशतितम शताब्दे ।

**गीर्वाणवाणी समलङ्कृतोऽयम् । राष्ट्रीय भक्त्या कृतजीवनश्रीः ।**
**संगीत साहित्य रसग्रहीता । सदा मनोहारि वचः प्रवृत्तिः ॥**

**सूत्रधारः** — प्रिये त्वमधुना प्रकृतमनुसर ।

**नटी** — तत्र भवन्तः रसिकाग्रेसराः श्रृणुत ।

## – गीतम् –

शरदृतुमुद्दिश्य) (केदार राग

**श्वेताम्बर सज्जित वेषा। स्तौमि प्रियं सात्विक हृदयं राजानम्।**
**निर्मल देहावृत धवलाम्बर भूषित। सुन्दर शरदृतु नामानम्॥** ध्रु.

**विलसित तारा मण्डन मण्डित। विश्वाकृति मधुरलसन्तम्।**
**विलसित नीरज गन्धावृत्त। शीतसमीर तरङ्ग विराजन्तम्॥** १

**सुधाकर निसृत ज्योत्स्ना पुन्ज। परागान्वित देहम्।**
**महीकाश मराल पयोधि। प्रभासित मेदुर देहम्॥** २

**सूत्रधार** — अहो ते गानकुशलता। केदार राग रञ्जित शब्द रचना सृष्टिश्च।

**नटी** — अयि भोः (आकर्ण्य) सवत्सानां धेनूनां अम्बरावाः श्रूयन्ते। किमर्थ मेवं गोमातरः आक्रोशन्ति।

**सूत्रधार** — न हि केवलं धेनूनां अम्बरावाः गोपालकानां आक्रोशनमपि श्रूयते।

**नटी** — (आकर्ण्य) सत्यमेव तुमुलोयंनादः। गत्वा पश्यावः। (इति गच्छतः)

(यवनिका पतति)

(रङ्गमञ्चे स्त्रीभिस्साकं भाषमाणः उत्तरः आस्ते)

**चतुरिका** — अयि उत्तरकुमार! भवान् योद्धा इति वारंवारं अस्माभिस्साकं सोत्साहं सानन्दं कथयति अन्तःपुरे। अयं अन्तःपुरः विलासिनीनां स्त्रीणां योग्य स्थानं भवति नहि योद्धानां इदं आयतनं भवति।

**उत्तरः** — जानामि चतुरिके। योद्धानां स्थानं समर भूमिरिति। मम योद्धुं अवसरः न समागतः तस्मात् अत्र निवसामि।

**चतुरिका** — कुमार! किं अधिक प्रलापैः। कार्य शूरेण भवितव्यं भवता।

**उत्तरः** — चतुरिके धीरः समयं पतीक्षते।

**निपुणिका** — चतुरिके। यदि समयः समापन्नः भवति सर्वोऽपि प्रज्ञाचक्षुः भवति।

**उत्तरः** — साधूक्तं भवत्या निपुणिके।

**निपुणिका** — कुमार यः खेलन परः भवति सः योद्धा भविष्यति।

**चतुरिका** — खेलनेषु, विशिष्य भारतीय खेलनेषु युद्धोपायाः निगूढाः सन्ति।

**निपुणिका** — न केवलं युद्धोपायाः वेदान्त भावनाश्च भारतीय खेलनेषु अन्तर्हिताः भवन्ति।

**चतुरिका** — तस्मात् सर्वैरपि खेलनपरैः बाल्ये भवितव्यम्।

**निपुणिका** — कुमार। त्वं अधुना संप्राप्त यौवनोऽसि। त्वया युद्धभेदाः ज्ञातव्याः।

**उत्तरः** — अहं जन्मतः योद्धास्मि। यदि युद्धकालः संप्राप्तः अहं अनुपदमेव कालो भूत्वा। सकलारिवर्गं मदीय करवालेन अस्त्रैच खण्डशः कुर्याम्। (इति हस्तं युध्यमानः इव भ्रामयति।

**चतुरिका** — कुमार। त्वया कदापि युद्धं कृतं किम्?

**उत्तरः** — न कृतम्। किंतु समर्थोऽस्मि। मे पिता कथयति अहं शूरः इति।

**निपुणिका** — राजपुत्र। अन्तपुरभाषणे, समराङ्गण विहरणे महानन्तरः विद्यते।

**उत्तरः** — धैर्यवन्तः शूराः युद्धकर्मणि कुशलाः भवन्ति, न केवलं युद्धानुभवेन।

**चतुरिका** — भवता प्रोक्तं सत्यमेव किंतु भाषणे, आचरणेच अन्तरः महान् अस्ति।

**उत्तरः** — यदि समयः आसन्नः भवति, अहं योद्धुं प्रथमः अस्मि।

**निपुणिका** — चतुरिके सुदेष्णादिष्टाहं गोक्षीरार्थं गोशालां गच्छामि। मया साकं त्वमपि एहि सत्वरं कार्यं समाप्य पुनरागच्छावः। (इति गच्छतः)

(यवनिका पतति)

*　　*　　*

## द्वितीयं दृश्यम्

(उत्तरः एकस्यां कुथायां उपविष्टः गानं श्रृण्वन् भाव प्रकटनां कुर्वन् आस्ते)

**— गीतम् —**

(सारङ्ग रागे

**भ्रम भ्रम भ्रम भ्रमर। भज भज भज नीरज षण्डम्।**
**पिब पिब पिब मधुबिन्दुं। कुसुमात्कुसुमं विटपाद्विटपम्॥** ध्रु.

**प्रति कुसुमं पीत्वा मकरन्दं। कुरुषे परिमल कुसुमाकर विटपम्।**
**मधुरस संभरितं फलभरविटपं। भ्रमर ते हृदयं रसभर हृदयम्॥** १

**जम्बूफल सादृश्यं ते रूपं। कुसुमपरागे लुठितं ते देहं।**
**दृष्ट्वा फल बुद्ध्या सानन्दम्। आगच्छति ग्रसितुं त्वां कीरकुलम्॥** २

(नेपथ्ये कोलाहलः भवति। ततः प्रविशति भीतः गोपाध्यक्षः)

**गोपाध्यक्षः** — (आक्रोशन्) अहो बत अहो बत प्रळयः संजातः। आकाशं भिन्नं भूम्यां पपात। (इति आक्रोशन् भूमिंजयं आगच्छति)

**उत्तरः** — किं रे गोपाध्यक्ष। किमर्थं आक्रोशसि किमर्थं त्वं कम्पसे।

**गोपाः** — किं वदेयं महाराज प्रळयः संजातः।

**उत्तरः** — कोयं प्रळयः।

**गोपा** — सर्वं गोसम्पद् गतं गतं। अहं अशक्तः संजातः। [इति क्रन्दति]

**उत्तरः** — किमर्थमेवं क्रन्दसे।

**गोपा** — मत्स्य पुत्र। गोधनं विजेतुं समुत्तिष्ठ।

**उत्तरः** — कथं गोधनस्यापत्तिः संजाता।

**गोपा** — मत्स्यपुत्र। कौरवाः अस्मदीय गोधनं गृहीत्वा गताः।

**उत्तरः** — अपि सत्यं अयं वृत्तान्तः।

**गोपा** — सत्यमेव। भवान् राष्ट्रवर्धन हितेप्सुः सत्वरं स्वयं निर्याहि।

**उत्तरः** — अस्मदीय राज्ये बहवः सन्ति अस्मिन् कर्मणि शक्ताः।

**गोपा** — न कोपि विद्यते। केवलं भवता गन्तव्यम्।

**उत्तरः** — (भीतः) अल्पकृत्यस्यास्य नाहं शक्तः।

**गोपा** — न हि। भवता केवलं गन्तव्यं विद्यते।

**उत्तरः** — अहं कथं गच्छेयं। किमर्थं गच्छेयम्।

**गोपा** — मत्स्यपुत्र। महीपालः त्वां परिषदः मध्ये श्लाघते सर्वदा।

**उत्तरः** — भवतु नाम। युक्तमेव। किमिति।

**गोपा** — ममपुत्रः उत्तरः, अनुरूपः, शूरश्च। अयं इष्वस्त्रे निपुणः योधः वीरश्चेति।

**उत्तरः** — तत् सत्यमेव। इदानीं अहं किं कुर्याम्।

**गोपा** — सः त्वं मनुष्येन्द्रस्य भाषितं दर्शयितुं, कुरून् जित्वा रणे, महद्यशः अवाप्य पुरीं त्वं प्रविश।

**उत्तरः** — गोपाध्यक्ष। अहं कथं गच्छेयम्।

**गोपा** — स्यन्दने अक्षय तूणीरादिकं धनुर्बाणान्श्च नीत्वा याहि।

**उत्तरः** — रथचोदकः कः ?

**गोपा** — तव सारथिना याहि।

**उत्तरः** — मे सारथिः एकस्मिन् महति युद्धे हतः ।

**गोपा** — अन्यं निरीक्षस्व ।

**उत्तरः** — यदि अश्वेषु कोविदः एकः सारथिः स्यात्, अहं गवांपदं अनुगच्छेयम् ।

**गोपा** — यन्तारं विलोक्य त्वमेव ।

**उत्तरः** — अहं न जानामि यन्ता कः भवेत् ।

**गोपा** — पश्यामः ।

**उत्तरः** — प्रयास्यतः मम युक्तं सारथिं क्षिप्रं पश्यध्वम् ।

**गोपा** — अवश्यं भवान् अवाप्नुयात् सारथिम् ।

**उत्तरः** — यदि हययानविदं नरं लभेयं, गजवाजि रथाकुलं परानीकं विगाह्य कुरून् जित्वा पशून आनयेयम् ।

**गोपा** — कुमार । तान् सर्वान् त्वं जेष्यसि किं ।

**उत्तरः** — ( अट्टहासं कृत्वा ) पश्य ।

**दुर्योधनं शान्तनवं । द्रोणं कर्णं महारणे ।**
**त्रासयित्वा परं वीरान् । ग्रहिष्यामि पशून् प्रियम् ।।**

( इति स्मश्रू मार्जयन् हसति )

**गोपा** — सत्यं महत् युद्धं भविष्यति ।

**उत्तरः** — यदि अल्प युद्धं नाहगन्ता ।

**गोपा** — ततः इदं महत् युद्धं भवति ।

**उत्तरः** — पश्येयुरद्य ममवीर्यं ते कुरवः एव ।

**गोपा** — कथं त्वां ते द्रक्ष्यन्ति ।

**उत्तरः** — किमयं साक्षात् अर्जुनः अस्मान् प्रबाधते इति ।

**गोपा** — मत्स्यपुत्र ! त्वया साकं अहमपि । योध्दुं आगच्छेयम् ।

**उत्तरः** — मास्तु इदं घोरं महद्युद्धं भविष्यति।

**गोपाः** — अहं युयुत्सामि।

**उत्तरः** — तव प्रथमतः लघुयुद्धे योद्धव्यं वर्तते।

**गोपाः** — भवता कथं युद्ध्यते, इति द्रष्टुं त्वां अहं आगच्छेयम्।

**उत्तरः** — त्वं मम युद्धं कौरव सेनांच विलोक्य पलायन मन्त्रं पठिष्यसि।

**गोपाः** — त्वं मां रक्षस्व।

**उत्तरः** — अहं युद्ध निमग्नः भवामि। त्वां कथमहं रक्षयेयम्।

**गोपाः** — कुमार ! अहं ते युद्धं द्रष्टुमिच्छामि।

**उत्तरः** — त्वं युद्धं न द्रक्ष्यसि।

**गोपाः** — कथमहं न द्रक्ष्यामि।

**उत्तरः** — गोपाध्यक्ष। कौरवैस्सार्धं युद्धं महत् दुष्करं अतीव भयदं भविष्यति।

**गोपाः** — अहं धैर्यमवलम्ब्य युद्धं द्रक्ष्यामि।

**उत्तरः** — गावः कौरवैः गृहीताः इति वार्ता कथयितुं क्रन्दन्, आक्रोशन् इतः सकम्पं समागतोसि। किं त्वं प्रत्यक्षं युद्धं द्रक्ष्यसि। शृणु।

**आग्नेयास्त्रादि बाणैश्च। गारुडैर्नाग वारुणैः।**
**युद्धयमानान् विलोक्य त्वं। पन्चत्वं प्राप्यसि ध्रुवम्॥**

**गोपाः** — (भीतः) तथा यदि भवेत् तर्हि नाहमागमिष्यामि। मत्स्यपुत्र। त्वमेव गत्वा सर्वं साधय। अहं गच्छामि। (इति गच्छति।

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

( उत्तरः एकाकी उपविश्य चिन्तयति ततः प्रविशति सैरन्ध्री )

**सैरन्ध्री** — उत्तरकुमार ! किमर्थमेवं चिन्ताक्रान्तः एकाकी उपविष्टोसि ।

**उत्तरः** — न कापि चिन्ता विद्यते मम ।

**सैरन्ध्री** — ते वदनमण्डलं चिन्ताकुलं भाति त्वं कुमारोऽसि का ते चिन्ता मे कथय ।

**उत्तरः** — सैरन्ध्रि ! सत्यमेवाहं चिन्ताक्रान्तोऽस्मि । अहं एकस्मिन् संङ्कटे निपतितोऽस्मि ।

**सैरन्ध्री** — कोयं संङ्कटः ।

**उत्तरः** — अस्मदीय गावः कौरव हस्तगताः अभवन् । श्रृणु ।

**गावः सर्वाः पराक्रान्ताः । योध्दुमिच्छामि तैः स्वयम् ।**
**अश्वशास्त्र परिज्ञाता । यदि कोप्यस्ति सारथिः ।।**

**सैरन्ध्री** — कथं ज्ञातमेतत् ।

**उत्तरः** — गोपाध्यक्षः आगत्य अकथयत् ।

**सैरन्ध्री** — अहो विराटराजस्य गावः पराक्रान्ताः । किमेतदाश्चर्यम् ।

**उत्तरः** — तैः सार्कं योध्दुं गन्तव्यमिति गोपाध्यक्षः अवदत् ।

**सैरन्ध्री** — तव पिता अस्ति खलु । त्वं कुतः ।

**उत्तरः** — पिता अन्यत्र योध्दुं गतः ।

**सैरन्ध्री** — अहो ! तथा यदि, त्वं गच्छ योध्दुम् ।

**उत्तरः** — अहं योध्दुमेव चिन्तयामि । किंतु ।

**सैरन्ध्री** — किंतु, किं जातम् ।

**उत्तरः** — यदि कश्चन सारथिः स्यात्, अहं सर्वं साधयिष्यामि ।

**सैरन्ध्री** — ते सारथिः वर्तते खलु ।

**उत्तरः** — मे सारथिः महति युद्धे निहतः ।

**सैरन्ध्री** — बत ! कथं ते सारथिः लभिष्यति ।

**उत्तरः** — तं विषयमुद्दिस्यैवाहं चिन्तयामि ।

**सैरन्ध्री** — अधुना सर्वमवहितास्मि ।

**उत्तरः** — अश्व कोविदः सारथिः अपेक्ष्यते ।

**सैरन्ध्री** — उत्तर कुमार अहं कथयामि श्रृणु ।

**बृहन्नलेति विख्यातः । स आसीत् सारथिः पुरा ।**
**अर्जुनस्य परं युद्धे । धैर्यवान् अश्व कोविदः ॥**

यः वारणाभः सुप्रियदर्शनः युवा बृहन्नलेति विख्यातः पार्थस्य सारथिः आसीत् । सः मया दृष्टपूर्वः आसीत् । यदा पावकः खाण्डवं अदहत् तदा अर्जुनस्य हयोत्तमाः अनेन संगृहीताः । तादृक् यन्ता कुत्रापि नास्ति ।

**उत्तरः** — सैरन्ध्रि । अहं तं नपुंसकं प्रष्टुं न शक्नोमि ममहयान् चालयेति । कुत इतिचेत् ।

**पुरुषोऽस्मि युवा चाहं । संग्रामे परमेश्वरः ।**
**कथं क्लीबेन कुर्यां मे । भाषणं वनिते वद ॥**

**सैरन्ध्री** — उत्तरकुमार । अधुना ते भावनां जानीतास्मि । ततः वीर । ते भगिन्याः उत्तरकुमार्याः वचनं सः अनुपदं करिष्यति ।

**उत्तरः** — यदि सः मे सारथिः भविष्यति विना संशयं तान् सर्वान् जित्वा गाः समादाय ध्रुवं आगमिष्यामि । कः कोऽत्र भोः ( इति आह्वयति ।

**प्रतीहारी** — ( प्रविश्य ) अहमस्मि ( इति नमस्करोति )

**उत्तरः** — सत्वरं उत्तराकुमारीं आह्वय ।

**प्रतीहारी** — यथाज्ञापयति भवान् । ( इति निर्गतः )

( ततः प्रविशति मुग्धा सालङ्कारा उत्तराकुमारी )

**उत्तरा** — भ्रातः ! किमर्थमहमाहूतास्मि ।

**उत्तरः** — स्वसः ! अधुनाहं कौरवैस्सार्थं योध्दुं जिगमिषामि। मे सारथिः महति युद्धे निहतः । यदि सारथिः ते गुरुः बृहन्नलः भवेत् सर्वं सुकरं भविष्यति। तस्मात् त्वं तव गुरुं बृहन्नलं प्रति कथय मदीयं वृत्तान्तं सर्वमपि अपिच तमानय।

**उत्तरा** — भ्रातः अहं अधुनैव गत्वा तमानयेयं ।

**उत्तरः** — तं कथय। अस्मदीय गाः पराक्रान्ताः अभवन्, तस्मात् अधुनैव मे भ्राता योध्दुमुद्युक्तः। किंतु तस्य अनुरूपः सारथिः नोपलब्धः । सैरन्ध्री त्वामुद्दिश्य सविस्तरं जगाद इति ।

**उत्तरा** — भ्रातः ! अहं सर्वं कथयेयम्। सैरन्ध्रि त्वमपि आगच्छ मया सार्धं मे गुरुगृहम्।

**सैरन्ध्री** — तथैव एहि कुमारी गच्छावः। ( इति द्वेऽपि गच्छतः )

* * *

## चतुर्थं दृश्यम्

( बृहन्नलः नाट्यं शिक्षयन्ती आस्ते। बालिकाः नाट्यं कुर्वन्त्यः वर्तन्ते )

**गीतम् (मोहन रागे)**

**लास्यं स्मर हर मानस दास्यं। कुरुते सुन्दर नर्तन शीला।**
**हृदयाहलादन सज्जित वेषा। शीतल नगराज सुता बाला।।** धृ.

**अतुलित भावास्पद लीला। अभिनव मण्डित शृङगारा।**
**पदवारिज चालन नूपुर। बम्भर गुन्जन झं झं झंकारा।।** १

**किंशुक सुम निचयान्चित सुषमा। मुखरित भ्रमरी कबरी भारा।**
**मधुमय हासेक्षण लज्जा विनमित। पेशल कम्र सुमध्य कुचभारा॥ २**

**लोकत्रय मूर्तीकृत निरुप सन्ध्या। रन्जित मन्जुल लोला सुषमास्या।**
**प्रावृट् कालाम्बर प्रथम स्फोरक। चपला वल्ली चन्चल शोभा लास्या॥ ३**

(ततः प्रविशति उत्तराकुमारी)

**बृहन्नलः** — अयि कुमार्यः। अद्य नाटयं पर्याप्तं बभूव, भवत्यः गृहं गच्छन्तु। (सर्वाः अपि नमस्कृत्य गच्छन्ति)

**उत्तरा** — गुरवे नमः। (इति नमस्करोति)

**बृहन्नलः** — को विशेषः कुमारी।

**उत्तरा** — गुरो मे मनः अद्य त्रस्तमासीत्।

**बृहन्नलः** — त्रासस्य हेतुः का?

**बाले तव मुखाम्भोजं। ग्लपितं केन हेतुना।**
**कदापि नैव दृष्टासि। विचारवृत वीक्षणैः॥**

**उत्तरा** — गुरो! मे सोदरः उत्तरकुमारः अतीव भयद संङ्कटे पतितः।

**बृहन्नलः** — तस्मात् ते मुखकमलं म्लानं जातम्।

**उत्तरा** — अयि बृहन्नल! नः राष्ट्रस्य गावः कुरूभिः आक्रमिताः।

**बृहन्नलः** — कदा आक्रमिताः।

**उत्तरा** — अद्य मध्यान्हे।

**बृहन्नलः** — केनोक्तम्।

**उत्तरा** — गोपाध्यक्षेण।

**बृहन्नलः** — केन श्रुतम्।

**उत्तरा** — भ्रात्रा उत्तरकुमारेण।

**बृहन्नलः** — भ्राता किमवादीत्।

**उत्तरा** — मे सारथिः महति संग्रामे मृतः। तस्मात् अधुना मे अश्वेषु कोविदः यन्ता आवश्यकः। यदि सः लभ्यः स्वयं गत्वा कौरवान् विजित्य गाः प्रत्यानयेयं इति अवादीत्। तस्मात्

**मे भ्राता याति योध्दुंतैः। कौरवैर्धेनु मोचने।**
**सारथिर्नैव लब्धोऽस्ति। तस्माच्चिन्तावृता गुरो॥**

**बृहन्नलः** — विदितं सर्वं। ततस्ततः।

**उत्तरा** — सैरन्ध्री तं अवादीत् यत् बृहन्नला पूर्वं अर्जुनस्य सारथ्यं चकार। यदि त्वं तव सोदरीं बृहन्नलस्य समीपं संप्रेष्य विचारयिष्यसि अवश्यं सः बृहन्नलः ते सारथ्यं करिष्यतीति।

**बृहन्नलः** — ततस्ततः।

**उत्तरा** — तस्मात् त्वां मम भ्रातृ पक्षात् इयन्तमर्थं प्रष्टुं समागता।

**बृहन्नल** — तत् सत्यमेव पुराऽच मया कृतम्।

**उत्तरा** — ततः बृहन्नल ! त्वं मम भ्रातुः रथसारथ्यं कुरु। नोचेत्।

**सारथ्यं मम भ्रातुस्त्वं। नैवकर्तुं समीहसे।**
**अधुना तव सान्निध्ये। परित्यक्ष्यामि जीवितम्॥**

(इति बृहन्नला समक्षं तिष्ठति)

**बृहन्नलः** — उत्तराकुमारि। मा विचारय अहं त्वया सार्धं आगच्छामि। आवां तव भ्रातुः सकाशं गच्छावः एहि। इति तया सार्धं निर्गच्छति)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

( उत्तरः चिन्ताक्रान्तः इतस्ततः विचारयन् तिष्ठति। ततः प्रविशति उत्तरा-सहित बृहन्नलः )

**उत्तरः** — ( उत्तरासहित बृहन्नलं वीक्ष्य ) एहि बृहन्नल एहि।

**बृहन्नलः** — उत्तरकुमार ! किमर्थं त्वं अकारणं चिन्ताग्रस्तोऽसि।

**उत्तरः** — अयि बृहन्नल। त्वया सारथिना खाण्डवे पार्थः अग्निमतर्पयत्। पृथ्वीं अजयत्। सैरन्ध्री तं विषयं सर्वं मे समाचष्टे।

**बृहन्नलः** — अयि उत्तरकुमार।

**न शक्तिर्विद्यते मेऽत्र। परं सारथ्य कर्मणि।**
**तौर्यत्रिके सदा बुद्धिः। प्रसरत्येव पुत्रक॥**

राजपुत्र ! संग्राम मूर्ध्नि सारथ्यं कर्तुं का शक्तिः मम विद्यते। गीतं वा नृत्यं वा पृथक्-विधं वादित्रं वा करिष्यामि। ते सारथ्यं मम कुतः।

**उत्तरः** — बृहन्नले त्वं गायकोवा उत नर्तकोवा भवतु। क्षिप्रं हयोत्तमान् निगृहीष्व।

**बृहन्नलः** — भवदनुज्ञया अहं निग्रहिष्यामि।

**उत्तरा** — बृहन्नल ! भीष्मद्रोण मुखान् कुरून् संग्रामे विजित्य, सूक्ष्माणि, मृदूनि चित्रविचित्राणि, रूचिराणि वासांसि आनयेथाः पाञ्चलिकार्थम्।

**बृहन्नलः** — उत्तराकुमारि !

**उत्तरो यदि तान् सर्वान्। विजेष्यति महाबलः।**
**पाञ्चालिकार्थं वासांसि। तुभ्यं दास्यामि बालिके॥**

**उत्तरः** — बृहन्नल ! त्वं इदं कवचं धरस्व। ( इति ददाति )

**बृहन्नलः** — ( कवचं अस्तव्यस्तं धरति। उत्तरः उत्तराच तत् दृश्यं विलोक्य प्रहसन्तौ करताल ध्वनिं कुर्वाते )

**उत्तरः** — बृहन्नल ! कवचं एवं धार्यते किम् ?

**बृहन्नलः** — अहो ज्ञातं सुष्टु धरामि। (इति धारयति)

**उत्तरः** — बृहन्नल ! कशां गृहाण शिरस्त्राणं पादत्राणे धरस्व।

**बृहन्नलः** — (धरति)

**उत्तरः** — बृहन्नल ! गच्छावः (इति चलतः)

**उत्तरा** — भ्रातः ! समस्त सन्मङ्गलानि भवन्तु।

(यवनिका पततति)

* * *

# षष्ठं दृश्यम्

(रणदुन्दुभयः श्रूयन्ते, ततः प्रविशति उत्तर-बृहन्नलौ)

**उत्तरः** — बृहन्नल ! कोयंनादः।

**बृहन्नलः** — अयं दुन्दुभि नादः।

**उत्तरः** — मे हृदयं विदलितं भवति। अहं भीतोऽस्मि।

**बृहन्नलः** — न भेतव्यम्।

(नेपथ्ये शङ्खानां नादाः भवन्ति)

**उत्तरः** — (आकर्ण्य) बृहन्नल कोयं नादः।

**बृहन्नलः** — अयं शंङ्खनादः।

**उत्तरः** — अहं बधिरो भवामि मे कर्णरन्ध्रौ विदलितौ भवतः। (इति कर्णौ पिदधाति)

**बृहन्नलः** — उत्तरकुमार ! अहमास्मि तव पुरतः चिन्तां मा कुरू।

**उत्तरः** — बृहन्नल ! भीतोऽस्मि सैन्यं दृष्ट्वा। एते सर्वे नादाः मां बधिरान्धपङ्गुं कुर्वन्ति।

**बृहन्नलः** — उत्तर ! भीतिः कथम्।

**उत्तरः** — बृहन्नल ! कुरुभिर्योद्धुं नोत्सहे। कुरु सैन्यमनन्तकं। अहं प्रतियोद्धुं नशक्ष्यामि। एतान् कुरून् दृष्ट्वैव रोमाणि हृषित्तानि। मम कश्मलं संजातं। बालः अहं। अहं एकः सूनः मे पितुः। अस्त्रशस्त्रेषु अकृतश्रमः। बृहन्नल ! निवर्तस्व। प्रतियोद्धुं न शक्ष्यामि।

**बृहन्नलः** — राजपुत्र ! तथा स्त्रीषु प्रतिश्रुत्य पौरुषं अभिनिर्माय कत्थमानः किमर्थं न युयुत्ससे।

**उत्तरः** — भीतोऽस्मि चमूदर्शनेन। अहं गृहं गच्छेयम्।

**बृहन्नलः** — ताः गावः न विजित्य त्वं गृहं कथं प्रतियास्यसि।

**उत्तरः** — नाहं याचे किमपि।

**बृहन्नलः** — अकार्यं त्वं करोषि।

**उत्तरः** — कार्याऽकार्यं नाहं जाने। अहं भीतोऽस्मि।

**बृहन्नलः** — त्वां नराः नार्यः वीराश्च प्रहसिष्यन्ति।

**उत्तरः** — के नराः। काः नार्यः। के वीराः। अहमनभिज्ञः।

**बृहन्नलः** — अहमप्यत्र सैरन्ध्र्यां सारथ्य कर्मणि ख्यातः।

**उत्तरः** — तव ख्यातिं नाहं विचारयामि।

**बृहन्नलः** — अनिर्जित्य गाः पुरं प्रतियातुं न शक्ष्यामि।

**उत्तरः** — मत्स्यानां भूयान् धनं कामं कुरवः हरन्तु न मे चिन्ता।

**बृहन्नलः** — किमर्थं ते हृदयदौर्बल्यम्।

**उत्तरः** — नराः नार्यश्च मां प्रहसन्तु। न विचारयेयम्।

**बृहन्नलः** — संग्रामे एवं न प्रवर्तितव्यम्।

**उत्तरः** — मे संग्रामे न च कार्यम्।

**बृहन्नलः** — क्षत्रियस्य संग्रामः कार्यः।

**उत्तरः** — संग्रामो मास्तु। गच्छन्तु गावः।

**बृहन्नलः** — ताः भवदीय देशसम्पदः।

**उत्तरः** — मे नगरं गच्छतु शून्यम्। पितुः न बिभेम्यहम्। (इति अभिद्रवति)

**बृहन्नलः** — [ बृहन्नलः तं प्रतिगृह्य ] मत्स्यपुत्र ! एषः धर्मः शूरैः न स्मृतः।

**उत्तरः** — नाहं शूरः।

**बृहन्नलः** — क्षत्रियस्य पलायनं न योग्यं युद्धे।

**उत्तरः** — अहं क्षत्रियकुमारः। किन्तु न मयि विद्यते क्षत्रियत्वम्।

**बृहन्नलः** — भीतस्य पलायनं न श्रेयः।

**उत्तरः** — कः श्रेयः कथय।

**बृहन्नलः** — मरणम्।

**उत्तरः** — [ कम्पयन् ] बृहन्नले रथं क्षिप्रं निवर्तस्व।

**बृहन्नलः** — अयोग्य मिदं कर्म।

**उत्तरः** — बृहन्नल ! नरः जीवन् भद्राणि पश्यति।

**बृहन्नलः** — तादृश जन्मना किं प्रयोजनम्।

**उत्तरः** — बृहन्नल ! अहं ते सुवर्ण निष्कशतं दास्यामि। मां विसृज।

**बृहन्नलः** — अपिच किं दास्यसि।

**उत्तरः** — हेमबद्धान् दश वैदूर्य मणीन् च ते दास्यामि।

**बृहन्नलः** — अपिच किं दास्यसि।

**उत्तरः** — मत्तान् दश मातङ्गान् ते दास्यामि।

**बृहन्नलः** — ततः अहं किं कुर्याम्।

**उत्तरः** — मुञ्च मां बृहन्नल !

**बृहन्नलः** — कुमार।

**सारथिर्नास्ति ते मत्वा। सारथ्यं कर्तुमुद्यतः।**
**लब्ध्वा मदीय साहाय्यं। युध्यस्व कृत निश्चयः॥**

**उत्तरः** — नाहं योत्स्यामि। (इति उपविशति)

**बृहन्नलः** — राजपुत्र! यदि नोत्सहे योध्दुं, सारथ्यं कुरु। अहं योत्स्यामि शत्रुभिः। (इति सान्त्वयति)

**उत्तरः** — ओम्। सारथ्यं करिष्ये। नहि नहि सारथ्यं कर्तुं नोत्सहे।

**बृहन्नलः** — कुतः।

**उत्तरः** — प्रथमतः शात्रवबाणाः मामेव प्रहरिष्यन्ति। तस्मात् सारथ्यं नाह मनुवहामि।

**बृहन्नलः** — कुमार! अरिवीरबाणस्पर्शे विना अहं त्वां रक्षयिष्यामि शस्त्रास्त्रेभ्यः।

**उत्तरः** — तथा यदि भवेत् तदा सारथ्यं अहं करिष्यामि।

**बृहन्नलः** — उत्तरकुमार। त्वं प्रथमतः अस्य शमीवृक्षस्य समीपं रथं चोदय।

**उत्तरः** — किमर्थं।

**बृहन्नलः** — अयि मत्स्य राजनन्दन! पाण्डबाः तेषां आयुध सम्पदं अस्य वृक्षस्योऽपरि निक्षिप्य गताः।

**उत्तरः** — ते अधुना कुत्र गताः।

**बृहन्नलः** — ते सर्वे अज्ञातवासं कुर्वन्ति।

**उत्तरः** — कोऽयं संबन्धः तव च अस्य आयुध सम्पदश्च।

**बृहन्नलः** — अस्माकं अविनाभावसंबन्धः विद्यते। तेषां आयुधाः एव अस्माकमपि आयुधाः।

**उत्तरः** — तत्कथं भवति।

**बृहन्नलः** — भवितुं शक्यः। पश्य अहं अर्जुनोऽस्मि।

**उत्तरः** — ( कर्णौ पिधाय ) हा शान्तं पापं शान्तं पापं ।

**बृहन्नलः** — किमासीत् । किमर्थं तथा वदसि ।

**उत्तरः** — किं त्वं अर्जुनः ? ( इति हसति )

**बृहन्नलः** — किमर्थं हससि ।

**उत्तरः** — त्वं नपुंसकः । अर्जुनः महापुरुषः । तत्सादृश्यं त्वं कथं प्राप्स्यसि ।

**बृहन्नलः** — अयं मे शापः ।

**उत्तरः** — अयं ते शापः ।

**बृहन्नलः** — ओम् सत्यम् ।

**उत्तरः** — अन्य ते भ्रातरः कुत्र सन्ति ।

**बृहन्नलः** — कुमार श्रृणु ।

**युधिष्ठिरस्सभास्तारः । वल्वलो भीम पूरुषः ।**
**नकुलश्चाश्व बन्धुश्च । गोकुले सहदेवकः ।।**

**उत्तरः** — किमेतदाश्चर्यम् । बृहन्नल ! पाण्डवानां पत्नी द्रौपदी कुत्रास्ति ।

**बृहन्नलः** — श्रृणु ।

**सैरन्ध्रीं द्रौपदीं विद्धि । श्रृणु सर्वेऽपि कीचकाः ।**
**निहताः सुतरां गूढं । बाल त्वं बहु श्रद्धया ।।**

**उत्तरः** — ( आश्चर्येण ) यदि त्वं अर्जुनः तस्य दशविध नामानि श्रावय ।

**बृहन्नलः** — श्रृणु ।

**अर्जुनः फल्गुणो जिष्णुः । किरीटी श्वेतवाहनः ।**
**बीभत्सुः विजयी कृष्णः । सव्यसाची धनुंजयः ।।**

**उत्तरः** — त्वं साक्षात् अर्जुनः । अहं ते दासः । मे मनः स्वास्थ्यं जातं । मे महत् भाग्यमेतत् ।

**बृहन्नलः** — पुरुषव्याघ्र ते न भयं विद्यते। ते शत्रून् सर्वान् अहं रणे नुदामि।

**उत्तरः** — नाहं बिभेमि। त्वां सव्यसाचिनं युधिष्ठिरं जानामि। अहं ते सारथिः भवामि। ( इति नमस्करोति )

**बृहन्नलः** — ( तं उद्वहन् ) न ते भीतिः चल। ( इति द्वावपि गच्छतः )

( यवनिका पतति )

* * *



# ॥ स्वप्नानिरुद्धम् ॥

स्वप्नानिरुद्ध मधुराधर दंशनेन ।
तेजोविराजित मनोभव वैभवेन ।
नाकीय भव्य विषय प्रविचेष्टितोषा ।
त्रैगुण लोकमनिशं महसा पुनातु ॥

नान्द्यन्ते

सूत्रधारः -- आर्ये यद्यवसित नेपथ्यालङ्कारा इतः आगम्यताम् ।

नटी — आर्य ! नेपथ्याऽलङ्कारः चरमालङ्करण दशायां विद्यते किञ्चित् कालं निरीक्षस्व समागच्छेय्यम् ।

सूत्रधारः — (उच्चैः) विलम्बः संजातः हञ्जे । (आत्मगतम्) स्त्रियः न केवलं मन्दयानाः किन्तु मन्द कार्यकरण्यश्चाऽपि ।

नटी — (ससंभ्रमं प्रविश्य) आर्यपुत्र इयमस्मि । नेपथ्यालङ्कारः अवसितः अस्ति ।

सूत्रधारः -- आर्ये! सकलकलागुणालङ्कार भूयिष्ठा खल्वियं सभा ।

नटी -- नूनमेव एषा सभा कलाभिज्ञैः परिपूर्णा ।

सूत्रधारः -- तस्मात् अद्य गीर्वाणान्ध्र भाषाप्रवीणेन सम्बमूर्ति शर्मणः सूनुना परीक्षित् शर्मणा ग्रथितवस्तुना स्वप्नानिरुद्धम् इत्यनेन नाटकेन उपस्थातव्यमस्माभिः । तथा पात्रग्रहणे आधीयतां मतिः ।

नटी -- आर्यस्य मधुरा प्रयोगतया न किमपि परिहीनं भविष्यति ।

सूत्रधारः -- आर्ये गीयतां किंचित् ।

नटी -- कं विषयमुद्दिश्य गातव्यम् ।

सूत्रधारः — संगीत साहित्य प्रभाविमं वसन्तमुद्दिश्य गीयताम् ।

नटी -- अनेन संबंधेन किमत्र प्रयोजनम् ।

सूत्रधारः--आधुनिक दिवसेषु सुशिक्षितानामपि संगीतसाहित्य संबन्धमुद्दिश्य सम्यक् ज्ञातं न भवति ।

नटी -- तत्कथम् ।

सूत्रधारः -- गायकः साहित्यं न जानाति । साहित्यज्ञः संगीतं न जानाति । यदि तौ गायकौ भवतः, तदा तयोः गानें रसाविर्भावः सम्यक् न भवति ।

नटी — तस्मात् किं कर्तव्यमिति भवतां मनीषा ।

सूत्रधारः -- गायन समये रसाविष्करणार्थं साहित्यं सम्यक् ज्ञात्वा सुस्वरेण संगीतेन गीते विद्यमान भावः गायकेन प्रकटी कर्तव्यः । तदानीं आनन्दस्य परमावधिः भविष्यती । श्रृणु ।

**विशदार्थ प्रभावेन । साहित्यं ज्ञानदायकम् ।**
**नादब्रह्म वशेनैतत् । संगीत मोक्षदायकम् ।।**

ततः गायन समये गायकस्य संगीत साहित्ययोः समानीदृष्टिः भवितव्या। तदानीं साहित्यज्ञान मिश्रित संगीतमार्गेण गायकः श्रोतारः अपि मुक्तिं प्राप्स्यन्ति इति भारतीयानां समयः ।

नटी -- आर्य ! आधुनिकाः गायकाः तथा न कुर्वन्ति किं !

सूत्रधार :-- नहि । ते पदस्य विच्छेदः कुत्र कर्तव्यः । कुत्र दीर्घः कर्तव्यः, कुत्र ह्रस्वः कर्तव्यः इति ज्ञानेन विना केवलं ताले निबद्ध चित्तवृत्तयः गायन्ति । ततः भवती वसन्तमुद्दिश्य वसन्त रागेण गायतु ।

नटी :-- आर्य ! काचन शङ्का विद्यते ।

सूत्रधार :-- का शङ्का पृच्छतु ।

**नटी** — आर्य ! गीर्वाणप्रपञ्चे विराजमान नाटक संचयं विसृज्य किमर्थं नूतन नाटक व्यमोहः ।

**सूत्रधारः** — आर्ये श्रृणु ।

**शब्दार्थ संप्राणित रम्यभावैः । कृतं प्रियं नाटक चक्रमेतत् ।**
**नवं पुराणं खलु कल्पनेयं । तात्कालिका सर्वमिदं पुराणम् ।।**

अपिच ।

**श्रृङ्गारपूर्णं मधुशब्दरम्यं । संगीत चित्रावली मञ्जुकाव्यम् ।**
**प्रिया परिष्वङ्गवदीहया तत् । स्वर्गीय सौख्यं प्रददाति लोके ।।**

**नटी** — अधुना अधीत तत्वास्मि ।

**सूत्रधारः** — अधुना परिषदः श्रुति प्रसादन निमित्तं गायनमुपक्रम्यताम् ।

**नटी** — श्रूयतां

**तन्त्री स्वरोपमित षट्पद नादपुञ्जैः ।**
**गायन् विमोहयति कोकिल कण्ठनादैः ।**
**कौसुम्भराग परिचर्चित चित्रिताङ्ग ।**
**चैत्रः प्रियं स्वकवितां मधुमास काले ।।**

**सूत्रधारः** — आर्ये साधुगीतं । अहो पश्य सर्वतः परिषदियं बद्ध चित्तवृत्तिः आलिखितमिवाभाति तव वसन्त गीत रागेण ।

**नटी** — आर्य ! श्रृङ्गार रसपूर्णं स्वप्नानिरुद्धं नाम अपूर्व नाटकं वयं प्रकट-यितुं उद्युक्तास्मः, यतः श्रृङ्गारस्य वसन्ततौ आनुकूल्यत्वात् ।

**सूत्रधारः** — आर्ये ! अन्यत्र दत्तावधानोऽस्मि पश्य ।

**उषा चित्र सुवर्णाख्याः । बाणकुम्भाण्ड कन्यकाः ।**
**आलपन्त्यः प्रियं भावैः । प्रविशन्ति यथा प्रियम् ।।**

ततः गच्छावः एहि । ( इति तया सार्धं गच्छति )

(शोणित पुर्यां राजप्रासादः। ततः प्रविशन्ति हसन्त्यः उषा चित्रलेखा सुवर्णाख्याः)

**चित्रलेखा** — सखि उषे एहि उपविश अस्मिन् पीठे। अहं ते केश प्रसादनं करिष्ये।

**उषा** — ( उषा पीठे उपविशति )

**चित्रलेखा** — (कङ्कतिकया उषायाः केश प्रसादनं करोति, ततः वेणीं रचयति )

**उषा** — स्वसौन्दर्यं हस्तदर्पणे पश्यन्ती श्रृन्ङ्गार चेष्टादिकं कुर्वन्ती आस्ते)

**सुवर्णरेखा** — हञ्जे चित्रलेखे राजोद्यानं अद्य बहुधा पुष्पैः चित्रितं गन्धिलंच आस्ते। अहं पर्याप्त पुष्पस्तबकान् विलूय उषामण्डनार्थं आनीतास्मि। अधुनाहं मालां विरचेयम्। ( इति उषायाः पार्श्वे उपविश्य मालां रचयति )

**चित्रलेखा** — उषे अयमधुना मधुमासः खलु।

**उषा** — हां अयं मधुमासः।

**चित्रलेखा** — अस्मिन् मधुमासे सर्वा प्रकृतिः नवनवोन्मेष शालिनी भूत्वा यौवतस्य चित्ताह्लादकारिणी भवति।

**उषा** — हां सत्यमेव भवति।

**चित्रलेखा** — प्रायशः शर्वर्यः अतिसुखदाः परम रमणीयाः भवन्ति किं सत्य मेव खलु। ( इति सुवर्णरेखां पश्यन्ती हसति )

**उषा** — चित्रलेखे मदपेक्ष्या त्वं अनुभव शालिनी असि। वयसि ज्येष्ठासि। त्वदीय जीवने अनेकाः वसन्ताः व्यतीताः। किं मत्तः सर्वं ज्ञातुमिच्छसि।

**सुवर्णरेखा** — ( हसन्ती ) सखि उषे त्वं मदपेक्ष्या ज्येष्ठाऽसि मां कथय तत् सर्वं। किं तत् सत्यं यदुदीरितं चित्रलेखया? उत सा त्वां परिहासयति?

**उषा** — सख्यौ वयं सर्वाः किंचिन्न्यूनाधिक वर्षैः समवयस्काः। अस्माकं सर्वासां सर्वं अनुभवैकवेद्यं भवति। तरतम भावपूर्णाः वयं सर्वाः। अनुभवैकवेद्यं कथं वक्तुं शक्यते।

**सुवर्णरेखा** — वाक्चातुर्यं यदिस्यात् अनुभवैक वेद्यं स्वप्नदृष्टमपि वक्तुं शक्यते।

**उषा** — सखि, जगति अनुभवैक वेद्यानि वक्तुं दुष्कराणि भवन्ति, किन्तु अनुभोक्तुं सुकराणि भवन्ति।

**चित्रलेखा** — सखि ! उषे त्वं एषु दिवसेषु किञ्चित् नाशिकानर्तित कोपेन प्रत्युत्तरं ददासि किमत्र कारणं भवति।

**उषा** — नाहं कदापि कुपिता भवामि। युवां मां कुपितमनस्कां कुरुतः।

**चित्रलेखा** — उषे त्वं कतिपय दिवसेभ्यः अन्यमनस्का भवसि। त्वदीयः सर्व व्यवहारः अस्मदृशानां शङ्कास्पदः भवति।

**सुवर्णरेखा** — सखि एतैः कुसुमैः सुन्दरमाला मया ग्रथिता। इति चित्रलेखायै ददाति)

**चित्रलेखा** — (तां मालां गृहीत्वा आघ्राय तां हेलया उषायाः वेण्यां निक्षिपति, उषायाः भुजौ गृहीत्वा तां वामतः दक्षिणतः भ्रामयित्वा, तदीयं सौन्दर्यं पश्यन्ती ) सखि ! सर्वा मधुमास लक्ष्मीः त्वयि मूर्तीभूतेव संदृश्यते। अहं किं कथयेयं ते सौन्दर्यमुद्दिश्य।

**सुवर्णरेखा** — नूनं त्वया कथितं सत्यं। परंतु अहं एवं कथयेयं इयं उषा मधुमासलक्ष्मी इति।

**उषा** — युवां किं कथयतः नाहं जाने। भवत्योः संभाषणं मे दुर्बोधा भवति। भवत्योः वाक्प्रसारसरणिः काप्यन्या भाति।

**चित्रलेखा** — सखि ! त्वं सर्वं जानासि। अधुना त्वं अवगत तत्त्वाऽसि किन्तु बहिः दुर्बोधा भवति इति कथयसि। भवती अवहित्थां जानाति।

**सुवर्णरेखा** — एषा उषादेवतेव प्रत्यहं दृष्टापि नवीन शोभामावहन्ती अलौकिकानन्दं प्रजनयति।

**चित्रलेखा** — तस्मादेवास्याः पिता बाणः अस्यै उषासुन्दरीति नामकरण मकरोत्।

**उषा** — त्वं न जानासि कस्मात् मे पिता तन्नामकरणं अकरोत्।

**चित्रलेखा** — त्वं कथय कस्मात्।

**उषा** — अहं कल्ये ब्राह्मी मुहूर्ते उषोदये संजाताऽस्मि तस्मात् मे नामकरणं तथा कृतवान् पिता ।

**चित्रलेखा** — सखि ! सुवर्णरेखे यदा यदाऽहमेनां पश्यामि तदातदा ममैतादृशी भावना संजायते ।

**सुवर्णरेखा** — काते भावना कथय ।

**चित्रलेखा** — शृणु ।

**उषा सखो विश्वसृजः प्रवृत्तेः । प्रतीक रूपा लसते धरण्याम् ।**
**कोवाऽनुभोक्ता प्रियरूपमस्याः । धन्योऽस्ति नित्यं खलु कामराज्ये ॥**

**सुवर्णरेखा** — सखि चित्रलेखे भवत्या साधु समुद्गीरितम् । ममापि तदा तदा एवं प्रति भाति, सत्यं उषा गगनमण्डलात् भूतलमवतीर्णा उषा सुन्दरी इति । एषा स्वीय सौन्दर्यालङ्कारैः कामस्य पञ्चबाणान् तिरस्कृत्य षष्टः शरः इव प्रतिभाति । यतः

**अशोकपुष्पैः नवमालिकासुमैः । अलङ्कृता पङ्कज शोभितानना ।**
**नीलोत्पलाक्षी नवपल्लवाधरा । हिनस्ति नूनं कुसुमायुधं सा ॥**

**उषा** — ( कोपेन लज्जया च एकस्मिन् कोणे अवनत मुखी भूत्वा हस्तनखान उल्लिखन्ती आस्ते )

**चित्रलेखा** — सुवर्णरेखे पश्य । एषा किलिकिञ्चितवती दूरं गत्वा तिष्ठति । तस्याः व्यावर्तनादिकं सौन्दर्यपूर्णं भासते पृष्टभागेऽपि । विलोकय ।

**रोलम्बमाला निभ रम्यवेणी । चक्रक्रिया कम्र नितम्ब भारा ।**
**स्रस्तांस रम्या भुजवल्लरीभ्यां । कस्य प्रिया नैव भवत्यहो सा ॥**

**सुवर्णरेखा** — तस्मादहं वक्ष्ये जन्मतः सौन्दर्यं संक्रमितं भवति । शृणु ।

**सौन्दर्यं कविता गानं । संक्रामन्तिच जन्मतः ।**
**संस्कार भावनाभ्यासैः । पूर्णत्वं यान्ति भूतले ॥**

**चित्रलेखा** — ( उषायाः समीपं गत्वा ) उषे किमर्थं त्वं रुष्टासि कथय मे। ( इति तां सान्त्वयति )

**उषा** — युवां मां लज्जानम्रमुखीं कुर्वन्त्यौ आस्ताम्।

**चित्रलेखा** — उषे अत्र न कोप्यन्यः उत काप्यन्या वा विद्येते। वयं सर्वाः सख्यः। किंचित्कालं परिहास पूर्वकः कालः यापनीयः इति ममाभिप्रायः। अहं यत् कथयामि तत् असंगतं न भवति। अहं सर्वदा वर्तमानस्थितिं कथयामि। एहि उषे ( इति तां स्वनिकटं गृहीत्वा ) सुवर्णरेखे पश्य। एषा उषासुन्दरी युवतीनां उन्माद कारयित्री भवति किमुत पुरुषाणां विषये श्रृणु।

**स्त्रैणं प्रयाति खलु वीक्ष्य तदीय हेलां।**
**माद्यन्मनोभव विलास विकार भावम्।**
**किं किं वदेयमहमत्र विचित्र लोकं।**
**कामावृताखिल मदोद्धत राजलोकम्॥**

**सुवर्णरेखा** — सखि ! राजा बाणस्तु नितान्तं दुर्वार दोर्गर्व समञ्चितः दुहितृ सौख्यं न विचारयति।

**चित्रलेखा** — यदि एवमेव पराधीन मनस्कः बाणः व्यवहरिष्यति तर्हि दुहितृ जीवने वक्रः पन्था भविष्यत्यवश्यम्।

**सुवर्णरेखा** — संस्कारबलेन वक्रः पन्था न भवति।

**चित्रलेखा** — सखि बह्व्यः राजकन्यकाः वक्रमार्गे विचरन्त्यः अन्ततः दुःख-सागरे निमज्जिताः अभवन्।

**सुवर्णरेखा** — तथा न भूयात् कस्याः अपि जीवनम्। सखि बह्व्यः कथाः संश्रूयन्ते सुखान्ते परिणताः।

**चित्रलेखा** — सखि ! कास्ताः कथाः श्रावय।

**उषा** — सख्यौ किमर्थं मां टीकात्मिकां कुर्वाते।

**सुवर्णरेखा** — सखि आवां त्वामुद्दिश्य न किमपि कथयावः।

**चित्रलेखा** — उषे ! आवयोः भाषणं मा श्रृणु। किञ्चित्कालं पराङ्मुखी भव।

**सुवर्णरेखा** — चित्रलेखे ! नगराज पुत्री उमा शंङ्करं तपसा विचिक्रिये।

**चित्रलेखा** — तयोः दाम्पत्यं जगतः आदर्शं बभूव। तथा यदि स्यात् जीवनं घृते पतित माषापूप शकलमेव भवति।

**सुवर्णरेखा** — अपिचान्या रुक्मिणी कृष्णेन सार्धं पलायन मन्त्रं पपाठ।

**चित्रलेखा** — सः पलायनमन्त्रः योग्यः सर्वथा अभिनन्दितः सर्वैः।

**सुवर्णरेखा** — एवं बह्व्यः कथाः संश्रूयन्ते। यदा पितरौ दुहितृवर्गकल्याण मुद्दिश्य न चिन्तयतः तदा उमारुक्मिणीवत् दुहितॄणां विवाहः भविष्यति।

**चित्रलेखा** — यदि तथा भवेत्। सः विवाहः काम्यः भवति।

**सुवर्णरेखा** — किन्तु व्यथापरिणामकारकः मा भूयात्।

**चित्रलेखा** — सर्वोऽपि जीवनं सुखान्तं कामयते। तद्भिन्नं कदापि कोऽपि न कामयते।

**सुवर्णरेखा** — सखि ! निम्नगाः सर्वदा पतिं उदन्वन्तं प्रयान्ति लोके अयं निसर्गस्वभावः।

**उषा** — सख्यौ युवां नद्यः इव निम्न स्थानं कामयेते किं ?

**चित्रलेखा** — उषे ! आवां लोके वृत्त वर्तिष्यमाणानां कथानां विषये संलापं कुर्वः। त्वं विहर भावप्रपञ्चे।

**उषा** — ( कुपित चालनं करोति )

**चित्रलेखा** — ( तस्याः संमुखं गत्वा किञ्चित् नाटयं कुर्वन्ती। उषाहस्तौ गृहीत्वा कल्याण रागे गायन्ती आस्ते।

**गीतम्**

**कुण्यत्येषा। वनिता चोषा।**
**मंजुलहासा। शोभितवासा॥** ध्रु.

**पङ्कज वदना। कुडमल रदना।** १
**चन्चल नयना। मन्मथ शयना॥**

( तां विसृज्य नाट्यं कुर्वन्ती आस्ते )

**सुवर्णरेखा** — ( उषां धृत्वा )

**(आनंदभैरवी रागे)**

**कुप्यत्येषा । वनिताचोषा ।**
**मंजुलहासा । शोभितवासा ।।** ध्रु.

**वक्रित केशा । मदनावेशा ।**
**सज्जित वेशा । पल्लविताशा ।।** १

**चित्रलेखा** — ( उषां गृहीत्वा )

**(मोहन रागे)**

**कुप्यतेषा । वनिताचोषा ।**
**मंजुलहासा । शोभितवासा ।।** ध्रु.

**पृथुल नितम्बा । राका बिम्बा ।**
**चलने शम्पा । गन्धिल चम्पा ।।** १

( इति तां त्यजति )

**उषा** — सख्यौ किं मां भावज भावनायां विहारिष्यमाणामिव जानीयाते (इति रुष्टा जिगमिषति )

**सख्यौ** — ( तां धारयतः । )

[ ततः प्रविशति वेत्रवती ]

**वेत्रवती** — अयि उषानन्दिनि । राजा बाणः भवतीः सर्वाः समाहृवयति । ( इति नमस्कृत्य कथयति )

**उषा** — सख्यौ अहं गच्छामि ।

**सख्यौ** — सखि उषे आवामपि त्वां अनुसरावः । ( इति सर्वे गच्छन्ति )

( यवनिका पतति )

* * *

# द्वितीयं दृश्यम्

( शयनमन्दिरे उषाचित्रलेखासुवर्णरेखाः स्वपन्ति )

**उषा** — ( हा हा शब्दं कुर्वन्ती शनैः शनैः उत्तर काये उपविश्य ) कोऽसि प्रिय । ( इति बाहू उद्यम्य विरौति )

( तस्याः शब्दं श्रुत्वा चित्रलेखा सुवर्णलेखा च प्रजागर्य उषां पश्यतः । चित्रलेखा उत्थाय उषा समीपं गत्वा तां धृत्वा )

**चित्रलेखा** — सखि ! उषे किमभूत् किमर्थं विरौषि ?

**उषा** — प्रिय क्वासि प्रयच्छ मे प्रतिवचनम् । ( इति नभसि गाढालिङ्गनं करोति ]

**सुवर्णरेखा** — [ तस्याः समीपं गत्वा ] सखि उषे किमर्थमेवं निर्लज्जया प्रवर्तसे ।

**उषा** — [ ते विलोक्य सव्रीडं अधोमुखी आस्ते ]

**चित्रलेखा** — [ उषायाः पार्श्वे उपविश्य ] सखि उषे किमर्थमेवं उच्चैराक्रोशसि ।

**उषा** — सखि न किमपि विद्यते ।

**चित्रलेखा** — तथा मावद । किमपि गोप्यं न विद्यते ते मत्सकाशे । कथय किं वृत्तम् ।

**उषा** — नाहं वक्तुं समर्थास्मि ।

**सुवर्णरेखा** — किमर्थमेवं हाहाकारं कृतवती ।

**उषा** — महानानन्दः अनुभूतः मया ।

**चित्रलेखा** — कोऽयं आनन्दः ।

**उषा** — अनिर्वचनीयः आनन्दः ।

**चित्रलेखा** — सखि त्वं एतावत्पर्यन्तं असूर्यं पश्या असि । किं अनुभूतं भवत्या सविस्तरं कथय ।

**उषा** — सखि स्वप्नः दृष्टः।

**चित्रलेखा** — जानाम्यहं अयं स्वप्नः इति। कीदृशः स्वप्नः इति मे प्रश्नः।

**सुवर्णरेखा** — उषे किमयं दुस्वप्नः।

**उषा** — न हि दुस्वप्नः।

**चित्रलेखा** — तर्हि कथं इयमवस्था तव भवति।

**उषा** — सखि ! स्वप्ने दृष्टः कश्चित् दिव्यमानुषविग्रहः।

**चित्रलेखा** — [ सुवर्णरेखां विलोक्य हसन्ती ] किमयं दिव्यमानुषविग्रहः दृष्टपूर्वः।

**उषा** — न मया दृष्ट पूर्वः।

**सुवर्णरेखा** — किं श्रुतपूर्वः।

**उषा** — नहि।

**सुवर्णरेखा** — किं चित्रमेतत्।

**उषा** — इदं विचित्रमेतत्।

**चित्रलेखा** — यदि विचित्रं स्यात् अहं प्रत्यक्षं करिष्यामि।

**उषा** — मया दृष्टं चित्रं, कथं त्वं प्रत्यक्षं करिष्यसि।

**चित्रलेखा** — करिष्याम्यहम्।

**उषा** — न शक्यं भवति ते।

**चित्रलेखा** — जगति अशक्यं न किमपि विद्यते।

**उषा** — तर्हि श्रृणु। सः स्वप्नसुन्दरः।

**चित्रलेखा** — हां सत्यं स्वप्नसुन्दरः ?

**उषा** — सः अनिर्वचनीयः।

**सुवर्णरेखा** — यथा दृष्टं वर्णय।

**उषा** — श्यामाकृतिः।

**सुवर्णरेखा** — अपिच कथं।

**उषा** — कमल लोचनः।

**चित्रलेखा** — अपिच।

**उषा** — पीतवासाः।

**सुवर्णरेखा** — ततस्ततः।

**उषा** — बृहद्बाहुः।

**चित्रलेखा** — अपिच कीदृशः।

**उषा** — योषितां हृदयन्ङ्गमः।

**चित्रलेखा** — सः कस्मिन् कर्मणि रतः।

**उषा** — [ लज्जिता भवति ]

**चित्रलेखा** — सखि। आवां तव सख्यौ। आवयोः समक्षं लज्जा कुतस्ते।

**सुवर्णरेखा** — निर्भीका सविस्तरं अल्पाक्षरैः कथय।

**उषा** — सखि। नाहं वक्तुं शक्तास्मि।

**सुवर्णरेखा** — प्रयतस्व।

**उषा** — अहं संक्षिप्तेन कथयामि।

**अधरं मे निपीड्यासौ। बद्धवा मां बाहुपञ्जरे।**
**यथेष्टं विहरन् कामे। तोषयमास सर्वथा।।**

**चित्रलेखा** — [ सुवर्णरेखां पश्यन्ती, भ्रूविक्षेपं कुर्वन्ती साभिप्रायं ] कथम्?

**उषा** — गाढमालिङ्गय। [ इति चित्रलेखां आलिङ्गति ]

**सुवर्णरेखा** — तं महान्तं आपादमस्तकं यथा दृष्टं वर्णयित्वा चित्रलेखां कथय। सासर्वं सुकरं करिष्यति।

**चित्रलेखा** — शतथाऽहं ते उपकरिष्यामि।

**उषा** — कथं त्वं करिष्यासि।

**उषा** -- कथं त्वं करिष्यसि।

**चित्रलेखा** — यस्ते मनोहर्ता तं वर्णय।

**उषा** — नाहं जाने सः कथं ते उपयोगः भवति।

**सुवर्णरेखा** — तस्याः नाम चित्रलेखा। त्वं जानासि। सा अश्रुतं अदृष्टं केवलं श्रुत्वा चित्रलेखनं करिष्यति। साङ्कुशाग्र धिषणाशालिनी।

**उषा** — हला मे प्रियसखी चित्रलेखा भविष्यति। (इत्यालिङ्गति ताम्)

**चित्रलेखा** — सखि उषे! त्वं निर्लज्जया यथा दृष्टं तं दिव्यमानुषविग्रहं वर्णय।

**उषा** — चित्रलेखे श्रृणु।

**कर्णान्त विस्फारित लोचनोऽयम्। पीनोन्नतोरस्थल कम्बु कण्ठः।**
**नीलोत्पलश्याम तनुप्रकाशः। संभोगकाले रतिसुन्दरोऽभूत्॥**

**सुवर्णरेखा** — सखि चित्रलेखे। सिद्धचारण पन्नगान् देवगन्धर्व दैत्य विद्याधरान् यक्षान्, मनुजान्, रामकृष्णौ, कन्तजयन्तौ, प्रद्युम्नं च विलिख। उषे त्वं विना चिन्तां स्वपस्व। आवां त्वत्कृते यत्कर्तव्यं तत् सर्वं विधाय पुनरागच्छावः। (इति निर्गतवत्यौ, उषा सुप्ता भवति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(ततः प्रविशतः चित्रलेखा चित्रसंवाहिनी सुस्मिता च)

**चित्रलेखा** — हञ्जे चित्रवाहिनि सुस्मिते!

**सुस्मिता** — कथय तत्र भवती।

**चित्रलेखा** — अद्य चित्रगृहे सप्तवर्णपूरितं चित्र कलशावळिं विविध कूर्चिकाः तूलिकाः नैकचित्र फलकानि समाहृत्य संसिद्धं कुरु चित्रलेखनार्थं।

**सुस्मिता** — मंत्रिणि। अद्य भवती अतीव संतुष्ट हृदया दृश्यसे। किमत्र कारणम्।

**चित्रलेखा** — हञ्जे सुस्मिते। मे सखी उषा स्वप्ने कमपि दिव्यमानुषविग्रहं दृष्ट्वा तस्मिन् अनुरक्ता अस्ति। सः कः। कीदृशः। न कोऽपि जानाति। उषायाः वर्णनानुसारं चित्रं मनसि निधाय तस्य प्रतिकृतिः कर्तव्या। तस्मात् मे हृदयं आनन्देन दोलायितं भवति।

**सुस्मिता** — अहो बहुकालानन्तरं आनन्दमयी वार्ता श्रुता।

**चित्रलेखा** — इयं वार्ता अस्माकं परमानन्ददायिनी भवति।

**सुस्मिता** — अयं तवारम्भः सदृशोदयाय भविष्यति।

**चित्रलेखा** — एतावत्पर्यन्तं ममारम्भः फलितार्थः अभूत्।

**सुस्मिता** — देवि। बाणः दुहितरि न कदापि वात्सल्यं दर्शयति। कात्र हेतुः।

**चित्रलेखा** — अयं सर्वदा भुजकण्डूत्यपनयनार्थं युयुत्सति। सर्वदा नर्तने वाद्ये, युद्धकरणे आसक्तः। एकैकस्यास्ति एकैकव्यामोहः संसारे। सर्वस्यापि स्वीयोन्मत्तता स्वीयानन्दाय भवति।

**सुस्मिता** — कन्या विवाहयोग्या जाता इत्येतन्मात्रमपि तस्य न विदितं भवति किं?

**चित्रलेखा** — अन्येषां व्यवहारेषु न रोचते मे हस्तक्षेपः। राजानं प्रति त्वं किमपि माभण। तथा भणणं अस्माकं योग्यं न भवति। पश्यतोहरः वार्ताहारः भविष्यति। पितरौ दुहितृ विषये न श्रद्धावन्तः जातौ तदस्माकं किमर्थं।

**सुस्मिता** — साधु भणितं भवत्या। वयं कर्मचराः न तु मन्त्रिणः।

**चित्रलेखा** — भवती सत्वरं सर्व व्यवस्थां कुरु।

**सुस्मिता** — देवि भवती अत्रैव उपविशतु। अहं सर्ववर्ण पात्राणि अत्रैवानयिष्यामि। (इति सर्व वस्तुचयं अपेक्षितं यत्, तत् सर्व आनीय तत्र निक्षिप्य गच्छति)

**चित्रलेखा** — ( तूलिकां गृहीत्वा सप्तवर्ण पूरित कलशेषु निक्षिप्य यथोचितं चित्राणि करोति )

( ततः प्रविशति सुवर्णरेखा )

**सुवर्णरेखा** — हञ्जे चित्रलेखे, कियत्पर्यन्तं चित्रलेखनं समाप्तं दर्शय मे ।

**चित्रलेखा** — ( एकैकं सुवर्णरेखायै दर्शयति )

**सुवर्णरेखा** — ( आश्चर्येण ) अहो कियत् सुन्दरं कृतं चित्रलेखनम् । एषु चित्रेषु को नाम भविष्यति । प्रिय सख्यः उषायाः स्वप्नसुन्दरः वरः ।

**चित्रलेखा** — वयं न किमपि निर्णीतुं शक्ताः ।

**सुवर्णरेखा** — कथं भवत्या विचित्रवर्ण चित्राणि लिखितानि । सत्यं ते कला जन्मतः संक्रामिता ।

**चित्रलेखा** — मम बाल्ये मे पिता मदीय मानसिक प्रवृत्तिं विलोक्य मम चित्रलेखा इति नामकरणं कृतवान् ।

**सुवर्णरेखा** — त्वयि सर्वमेतत् योग्यं युक्तं च भवति । लोके मूर्खः किंचित् अभ्यस्य तस्य कला जन्मतः संक्रामिता इति कथयन् आत्मानं महांपुरुषं कर्तुं प्रयतते । इयं परिपाटिः लोके दृश्यते ।

**चित्रलेखा** — उषायाः कथनमनुसृत्य चित्रमेतत् चित्रितं । किमयं जन्मतः संक्रामित संस्कारः न भवति ।

**सुवर्णरेखा** — बाल्ये केवलं जन्मान्तर वासनाः छायारूपेण व्यक्तिमत्वं प्रदर्शयन्ति । ताः वासनाः अभ्यासक्रमेण परिपूर्णाः भवन्ति । त्वयि इयमवस्था प्रत्यक्षं भवति ।

**चित्रलेखा** — भवत्या सत्यमुदीरितं । तथैव अत्र उषासुन्दरी विषयेऽपि पूर्वजन्मकृत वासनाः तां अनुधावन्ति, यतः एषा न कदापि अन्यं कमपि पुरुषं ददर्श अन्तःपुर वासिनी भूत्वा । तया स्वप्ने कोऽपि महानुभावः दृष्टः । तथ्यमयं पूर्वजन्मनि समधिगत संस्कार भावना विशेषः एव ।

**सुवर्णरेखा** — केचन पूर्वसंस्कार विशेषः इति न जानन्ति, किन्तु यत

किमपि वृत्तं इति मन्यते। केचन अवितर्कित पूर्वाऽपरविषयाः आकाशवाणी भूत्वा प्रतिगृहं गत्वा अप्रस्तुत प्रशंसां कुर्वन्ति जगति।

**चित्रलेखा** — ते मूर्खाः इति मन्ये यतः।

**असंस्कारवतां लोके। कथं संस्कारभावना।**
**जायते, तथ्यमेवास्ति। पुनर्जन्म धरातले॥**

असूर्यं पश्याचैषा कथं दिव्यपुरुषं अपस्यत् स्वप्ने। विचार्यमाणे सर्वमाश्चर्यं भवति।

**सुवर्णरेखा** — भवत्या उषायाः स्वप्नानुगुण्यं चित्रनिर्माणं कृतमिति मे मतिः।

**चित्रलेखा** — यथा तया कथितं तद्वदेव प्रतिकृतिः विलिखिता।

**सुवर्णरेखा** — तथा यदि स्यात् तस्याः कामनाः परिपूर्णा भविष्यति। अधुना अहं उषायाः सकाशं गत्वा तस्याः प्रकृतिः कथं विद्यते इति विचारयेयं। भवती चित्र-वाहिन्या सुस्मितया चित्रैः साकं उषासदनं समागच्छ। ( इति गच्छति )

**चित्रलेखा** — ( सर्व चित्राणि एकत्र एकैकोपरि एकं निक्षिप्य हस्तप्रक्षाळनं कर्तुं अन्तः प्रविशति )

**सुस्मिता** — देवि चित्रलेखे, इति आह्वयन्ती प्रविशति सुस्मिता, गच्छति च चित्र फलकानां समीपं )

**चित्रलेखा** — ( प्रविश्य ) हञ्जे सुस्मिते। त्वं समये प्रत्यागतासि। ( इति वस्त्रखण्डेन हस्तौ मार्जयन्ती ) त्वं अधुना सर्व चित्र चयं व्यवास्थतं बध्वा निक्षिप। अधुना सर्वाणि चित्रफलकानि नेयानि उषा सदनं। एहि आवां गच्छावः [ इति निष्क्रान्तौ ]

[ यवनिका पतति ]

* * *

# चतुर्थं दृश्यम्

( उषा सुवर्णरेखे संलपन्त्यौ स्तः )

**सुवर्णरेखा** — कथं विद्यते ते मानसिक बाधा ।

**उषा** — तथैव विद्यते यथापूर्वं । नोपशमिता बाधा । पदे पदे तदेव स्वप्न-चित्रं समक्षं भवति ।

**सुवर्णरेखा** — चित्रलेखा सुन्दर चित्राणि विलिखितवती आसीत् । अहं सर्वाणि चित्राणि अपस्यम् । ते अतीव सुन्दराणि मनोहराणि । त्वं तानि द्रक्ष्यसि ।

( ततः प्रविशति सुस्मिता चित्रफलकैः )

**सुस्मिता** — अयि देवि सुवर्णरेखे चित्रलेखा चित्राणि विलिख्य मां आदिदेश अत्र फलकानि स्थापयितुं । अपिच सा अनुपदमेव अत्रागमिष्यति ।

**सुवर्णरेखा** — हां सुष्टुकृतं भवत्या तत्र निक्षिप्य गम्यताम् ।

**सुस्मिता** — तथैव । ( इति निक्षिप्य गच्छति )

( ततः प्रविशति चित्रलेखा )

**चित्रलेखा** — सखी उषे ! कथं विद्यते ते मानसिक प्रवृत्तिः ।

**उषा** — सखि ! मानसिक व्याधेः नास्त्यौषधं लोके ।

**चित्रलेखा** — अस्त्यौषधं अहं दास्यामि ते ।

**सुवर्णरेखा** — सत्यं चित्रलेखा मानसिक व्याधि तज्ञा, चिकित्सका च मास्तु ते चिन्ता ।

**चित्रलेखा** — उषे । अहं तव व्याधि उपशमनार्थं अनेक औषध प्रक्रियाः विधाय त्वत्सकाश मानीतास्मि पश्य । ( इति चित्रबन्धनं विसृज्य एकैक चित्रं तस्यै दर्शयितुं प्रयतते ) पश्यैतत् चित्रं यदि ते मनोनुरुपं उत नहि । ( इति एकं चित्रं दर्शयति )

**उषा** — ( दृष्ट्वा ) एतन्नहि । ( इति हस्तेन निराकरोति-तत् चित्रं )

**चित्रलेखा** — ( नैक चित्राणि दर्शयति )

**उषा** — एतानि सर्वाणि अननुकूलानि मे बाधा निवारणाय। ( इति असंतुष्टिं प्रदर्शयति )

**चित्रलेखा** — सखि इमौ पश्य। ( इति रामकृष्णौ दर्शयति )

**उषा** — ( तौ दृष्ट्वा ) एतौ पूज्यपादौ।

**चित्रलेखा** — एवं पश्य। ( इति प्रद्युम्नं दर्शयति )

**उषा** — [ दृष्ट्वा लज्जा भवति ]

**चित्रलेखा** — उषे किमर्थमेवं लज्जिता भवसि। एवं पश्य। [ इति अनिरुद्धं दर्शयति ]

**उषा** — [ ह्रिया अवाङ्मुखी भवति कथयति ]

**सोसावत्मनि संलग्नः। मधुराधर दंशकः।**
**त्यक्त्वा मां वृजिनारण्ये। गतः स्वप्ने महीपतिः।**

[ चित्रलेखा सुवर्णरेखा च परस्परं विलोकय साभिप्रायं हसतः ]

**चित्रलेखा** — सखि उषे ! अहं अनुपदमेव द्वारकां गत्वा अनिरुद्धं योगे नात्रानयेयम्। भवती मा विचारयतु। त्वयासाकं सुवर्णरेखा अत्रैवस्थास्यति।

**उषा** — सखि ! त्वं मे प्रियसखी मनश्चित्रलेखा भवसि खलु।

**चित्रलेखा** — आवां चित्रसुवर्णे तव सख्यौ। [ इति तां प्रसान्त्वयित्वा गच्छति ]

[ यवनिका पतति ]

* * *

# पंचमं दृश्यम्

[ द्वारका नगरी तत्र सौधे अनिरुद्धः नन्दसारणसाम्बैः साकं द्यूतं खेलन् आस्ते। ]

**अनिरुद्धः** — [ अक्षान् कुस्यति ] ओ षट्। एकं द्वे त्रीणि चत्वारि पञ्च षट् [ इति अक्षं चालयति ]

**सारणः** — अरे साम्ब ! पश्य अहं पञ्च दर्शयेयं। [ इति अक्षान् कुस्यति ] अहह साम्ब एकं द्वे त्रीणि चत्वारि पञ्च। [ इति अक्षं चालयति ]

**नन्दः** — [ अक्षान् हस्ते चालयित्वा कुस्यति ] यत् भणितं तत् जातं। [इति एकं द्वे इति अक्षं चालयति )

**साम्बः** — पश्य अहं चत्वारि दर्शयेयम्। (इति अक्षान् कुस्यति) एकं द्वे त्रीणि चत्वारि इति उक्त्वा। अक्षं चालयति)

**अनिरुद्धः** — (अक्षान् गृहीत्वा वेगेन हस्ते चालयति)

(ततः प्रविशति दौवारिकः)

**दौवारिकः** — (प्रविश्य) अयि देव ! चित्रलेखा नाग कन्यका तत्र भवतः दिदृक्षया द्वारि तिष्ठति।

**अनिरुद्धः** — अनुपदं प्रवेशय ताम्।

**दौवारिकः** — यथाज्ञापयति देवः। (इति प्रणम्य गच्छति)

**अनिरुद्धः** — अरे नंदसारणिसाम्बाः गच्छथ यूयं सर्वे। (सर्वे गच्छति)

(ततः प्रविशति चित्रालेखा)

**चित्रलेखा** — अयि अनिरुद्ध देव ! शत प्रणामाः (इति नमस्करोति)

**अनिरुद्ध** — हो नमस्काराः। एहि सुन्दरि। कासित्वं।

**चित्रलेखा** — अहं चित्रालेखा। बाणस्य मन्त्रिणः कुम्भाण्डस्य पुत्री।

**अनिरुद्धः** — किमर्थमागतासि।

**चित्रलेखा** — कार्यमेकं साधयितुं समागतास्मि।

**अनिरुद्धः** — उपविशतु तत्र भवती।

**चित्रलेखा** — (उपविशति)

**अनिरुद्धः** — किं व्रत् करणीयं विद्यते निवेदय। अहं ते कार्यं साधयिष्यामि।

**चित्रलेखा** — अहं अतीव तुष्टास्मि।

**अनिरुद्धः** — चित्रालेखे त्वां दृष्ट्वा मे मनः आनन्द पारवश्यतां प्राप्नोति। कारणं नाहं जाने।

**एकाकिनी त्वं खलु यौवनेऽसि। मत्तः प्रियं किं तव कार्यमस्ति।**
**वदस्व नूनं प्रियमाचरेयं। निर्भीक भावेन विशाललोचने।**

**चित्रलेखा** — अयि भोः न ते युक्तं मां संबोधितुं विशाललोचने इति।

**अनिरुद्धः** — कोऽयं अत्र दोषः।

**चित्रलेखा** — अदृष्टपूर्वां मां परिचितः इव कथं एवं सम्बोधयसि।

**अनिरुद्धः** — सौन्दर्योपासकानां जगति सौन्दर्यवत्यः हृदयग्राहिकाः भवन्ति तत्र दोषो न कार्यः।

**चित्रलेखा** — भ्रमया भ्रमरो मा भवतु।

**अनिरुद्धः** — भवती भ्रमरी भूत्वा अत्रागतासि।

**चित्रलेखा** — भवान् अत्यन्त सरसः अस्ति। शृणु।

**यत्र ते हृदयं लग्नं। कामिनी यत्र चुम्बिता।**
**तत्रैव यानं योग्यं ते। सा ते हृदय सुन्दरी॥**

**अनिरुद्धः** — चित्रलेखे। किं त्वं कथां कल्पयसि ते कविता सौन्दर्येण।

**चित्रलेखा** — अलं आश्चर्याभिनयेन।

**अनिरुद्धः** — भामिनि किमर्थमेवं कथयसि।

**कुत्राऽहं कामिनी कुत्र। चुम्बनं तु विशेषतः।**
**किमेवं सर्वतो भ्रान्ति। प्रकल्पयसि सुन्दरि॥**

मम सकाशे असत्यस्य स्थानं नहि।

**चित्रलेखा** — प्रभो अनिरुद्ध! मयि कृत्थो मा भव।

**पुरुषाः निर्भयं कृत्वा। कृत्याऽकृत्यमनारतं।**
**अज्ञाता इव शान्त्या ते। प्रवदन्तिच नीतयः॥**

**अनिरुद्धः** — सुन्दरि चित्रलेखे। भवती भावोद्वेगेन किंवा किंवा प्रजल्पन्ती मां विमोहयसि।

**चित्रलेखा** — भवतः कृत्यं समालोच्य व्यथाविला भवामि।

**अनिरुद्धः** — किमपराद्धं मया।

**चित्रलेखा** — कथयामि शृणु।

**उषा नाम सखी स्वप्ने। चुम्बिता भवता भृशं।**
**साचासील्लग्न चित्ता च। त्वयि भूप विचारय॥**

**अनिरुद्धः** — (आश्चर्येण) मया उषानाम कन्या स्वप्ने चुम्बिता। इदं आश्चर्याणां परमायतनम्। (इति उच्चैः हसति)

**चित्रलेखा** — देव! सत्यं ब्रवीमि। अत्र हसितस्य कारणं न विद्यते। अयं आलोचनात्मकांशः भवति।

**अनिरुद्धः** — चित्रलेखे। विचारणीया सराणिरियम्। अयं सन्निवेशः परमानन्दस्यात्युत्तम समावेशः भवति।

**सा धन्या सुन्दरी लोके। या स्वप्ने चुम्बिता प्रियं।**
**अनाज्ञातेन भूपेन। तदेतत्परमं सुखम्॥**

**चित्रलेखा** — कथनीयं बहु विद्यते शृणोतु भवान्।

**अनिरुद्धः** — कथनीयं यत् विद्यते ते तत् आसान्तं कथय।

**चित्रलेखा** — सा निद्रायाः उत्थाय कोऽसि क्वासि, क्व गतोऽसि इति निर्लज्जया अरोदीत्। भवानेव मम सख्याः तादृशावस्था कारकः। तस्मात् त्वयाऽपराद्धं मम सख्यैः। अपराध परिहारार्थं समेतु भोः इति मदीया विज्ञाप्तिरियम्।

**अनिरुद्धः** — चित्रलेखे ! सा मया अदृष्ट पूर्वा। कथमहमागमिष्यामि।

**चित्रलेखा** — देव ! सा त्वां स्वप्ने ददर्श। तस्याः सखी अहं त्वां पश्यामि भवानपि तां अधुना द्रक्ष्यति।

**अनिरुद्धः** — उषायाः स्वप्नसुन्दरोऽहं इति भवती कथं जानाति।

**चित्रलेखा** — भोः श्रृणु।

**उषा त्वां वर्णयामास। त्वदीयं रूपसम्पदं।**
**तदुक्तिमनुसृत्यैव। चित्रं ते लिखितं मया॥**

**अनिरुद्धः** — चित्रलेखे। मे हृदयं सत्यं रसनिस्तुलं भवति। इयं घटना परमानन्ददायिनी भवति। एतावत्पर्यन्तं ईदृशी घटना मया न श्रुता। विचार्यमाणे इयं बहु रसनिर्भरा भवति।

**कविता वनितां चैव। स्वातन्त्र्येण विनिसृते।**
**रसाधिक्यं प्रकुर्वाते। काव्यं हृदयमेवच॥**

**चित्रलेखा** — अनिरुद्ध ! त्वमेव उषा पतिः एहि मया सार्धं। अपिच युवयोः समागमः स्वप्न संजातः परमपवित्रप्रायः। प्रभो शोणित पुरं निर्भयमहं मम योग विद्यया त्वां नेष्यामि तव प्रियायाः सकाशम्।

**अनिरुद्धः** — चित्रलेखे ! श्रृणु।

**यदि कन्या विनाऽयासं। वशं याति सलक्षणा।**
**यथेच्छमनु भोक्तव्या। सत्यं रसिक लक्षणम्॥**

**चित्रलेखा** — अयमेव आदर्शपूर्ण दाम्पत्यभावः।

**अनिरुद्धः** — अयि सुन्दरि। आगच्छेयम् मार्गमादिशतु भवती।

**चित्रलेखा** — मार्गमादिशाम्यहं। प्रथमतः भवता किं कर्त्तव्यं तत् भवान् शृणोतु।

**अनिरुद्धः** — कथयतु भवती।

**चित्रलेखा** — प्रभो अहं गृहस्यान्तर्भागं गत्वा तस्यै उषायै कथयेयं यत् वृत्तं तदुदन्तजातं सर्वमपि, भवान् बहिः तत्रैव स्थित्वा, यदा उषा एकाकी भूत्वा, विरहवेदनां असहन्ती त्वां निन्दंती रोदितुं प्रारभते, तदा यथासंदर्भं प्रविशतु।

**अनिरुद्धः** — शाधि मां चित्रलेखे।

**चित्रलेखा** — मे यत्नः फलोन्मुखः भवति। धन्योस्म्यहं। भवान् मामनुसरतु। (इति द्वावपि गच्छतः)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(उषा एकान्ते उपविश्य अनिरुद्धस्य चित्रफलकं गृहीत्वा गायन्ती आस्ते)

**(भीमपलास रागे)**

**आयाता मधुर मधु यामिनी। मुग्ध वधूजन जीवनदायिनी।**
**मलयानिल चन्चल गामिनी। मधुमय जीवित वसन्त भामिनी॥** १

**चिरयति मे जीवन वसन्त दाता। अभिनव यौवन मद संभारिता।**
**रसमय प्रियतम पदसंगीता। वल्लभ प्रतिकृति दर्शन रमिता॥** २

**निन्दति स्वान्तं रन्जित सन्ध्यारागं। शतथा मन्जुल गन्धिल कुसुम परागं।**
**मधुरं गायति प्रियतम मोहन रागं। प्रथयति लोके प्रेम लतानुरागम्॥ ३**

**पराभृत विरुतं कुरुते हृदयं। पतिविरहित जनमनुरागमयं।**
**कर्षति चापं मुन्चति शर निचयं। अबलाजन हृदयमदय मदनोऽयम्॥ ४**

(गीतान्ते प्रविशति चित्रलेखा)

**उषा** — चित्रलेखां विलोक्य सन्तोषेण) सखि चित्रलेखे त्वमागतोऽसि? सखि किं सः दृष्टः।

**चित्रलेखा** — (उषायाः हस्तौ गृहीत्वा सानन्दं) सखि उषे सः दृष्टः।

**उषा** — सखि सः किमवदत्।

**चित्रलेखा** — न किञ्चिदप्यकथयत्।

**उषा** — न किमप्यकथयत्।

**चित्रलेखा** — सः उदन्तमेतत् श्रुत्वा कृत्थो बभूव।

**उषा** — किमर्थं कृत्थः।

**चित्रलेखा** — भवती तस्मै अर्धाधर पानमेव दत्तवतीति।

**उषा** — सः कथं जानाति अर्धाधर पानं दत्तं मया इति।

**चित्रलेखा** — सोऽपि स्वप्ने त्वामश्यत्। (इति हसति)

**उषा** — त्वं असत्यं वदसि।

**चित्रलेखा** — नहि। मया परिहासपूर्वकं जल्पितं।

**उषा** — भवतु नाम। अर्धाधरपान दान विषये न मे दोषः विद्यते। अहं न किमपि जानामि इतः परं यत् सः मां दोर्भ्यां गाढमालिङ्ग्य बहुवारं अधरं निपीड्य चुचुम्ब इति।

**चित्रलेखा** — त्वदीय शरीरे लावण्यमय सम्पत् बाहुबन्धने राशीकृत्य अचुचूरदिति मन्ये।

**उषा** — मम शरीर सम्पदासार्थं मानसमपि चोरयामास।

**चित्रलेखा** — ( विहस्य ) एतत् सर्वं नोक्तं भवत्या सविस्तरं ।

**उषा** — तस्मै त्वया न विपुली कृतोऽयं वृत्तान्तः ?

**चित्रलेखा** — एतत् सर्वं अहं न जानामि। भवत्या नोक्तं सविस्तरम् ?

**उषा** — तर्हि त्वं किमवोचः।

**चित्रलेखा** — मे सखी न केवलं स्वप्नसुन्दरी परन्तु सा सुरसुन्दरी तव हृदय सुन्दरी। भवता सा प्रत्यक्षी कर्तव्या इति ममाभिप्रायः इत्येवमुक्तं मया।

**उषा** — ( सकुतूहलं ) सः कीदृशः सखी।

**चित्रलेखा** — त्वया कथित वर्णनानुसारं विद्यते सः।

**उषा** — अपिच।

**चित्रलेखा** — उषे ! अतीव सुन्दरोऽयम्।

**उषा** — ( सकुतूहलं ) ततस्ततः।

**चित्रलेखा** — व्यूढोरस्कः।

**उषा** — ततस्ततः।

**चित्रलेखा** — बलवान्।

**उषा** — हां ततस्ततः।

**चित्रलेखा** — महाभुजाः। श्यामः। सः मया सार्धं किमपि किमपि भाषमाणः तस्थौ। कथं कालः व्यरंसीत् आवां न ज्ञातवन्तौ।

**उषा** — सखि त्वं मदर्थं अतीव मुदिताऽसि।

**चित्रलेखा** — परार्थे मर्दनं सुखतमं भवति। तस्य रूपं मनसः अपाकर्तुं अशक्यं भवति, यतः शृणु।

**मधुर मधुर भाषी शब्दतत्त्वार्थ धीमान्।**
**मधुर गुण समेतो मन्मथो नैवचान्यः।**
**जलधर समकायः पूर्ण राशिक्य मूर्तिः।**
**सुहसित वदनेन्दुः सौम्यभावोऽनिरुद्धः॥**

**उषा** — ( सानन्दम् ) हे सखि त्वं मदर्थं बहु कष्टं भजसे।

**चित्रलेखा** — नास्ति मे कश्चिदपि क्लेशः किन्तु तव कष्टं मे असह्य वेदनं भवति।

**उषा** — त्वं मम सखी खलु तस्मात् एवं वदसि।

**चित्रलेखा** — सखि त्वं अधुना वासक सज्जिका भूत्वा शयनमन्दिरं केलीगृहं आत्मानं च मुहुर्मुहुः मण्डयन्ती कालं निरीक्षस्व। सः आगमिष्यति तेन सार्धं तव समागमः भविष्यति। मा चिन्तां कुरु सः सकालं त्वां समेष्यति। शुभयामिनी भवतु ते। अहं गच्छामि। इति गच्छति )

( ततः प्रविशति सुवर्णरेखा )

**सुवर्णरेखा** — सखि उषे !

**विचित्र पुष्पाणि मनोहराणि। सुगंध माल्यानि च लेपनानि।**
**एलाश्च ताम्बूल लवङ्ग पूगाः। समाहृताः पश्य नताङ्गि तुभ्यम्॥**

सखि उषे। चित्रलेखा मां जगाद यत् अद्यैव ते हृदयाधि देवः अनिरुद्धः समागमिष्यति इति। तस्मात् भवती यथोचितं हावभाव विलास हासलालित्यैः तं आत्मायत्तं करोतु। सुखं भूयात्। शुभ रात्रिः। ( इति थच्छति )

**उषा** — ( एकान्ते शयने उपविश्य कामे विचरन्ती जोगिया रागे गायति )

**गीतम्**

**एहि प्रिय। पाहि प्रिय।**
**स्मर संगर कामी। वनिताऽवनगामी॥** ध्रु.

**मधुराधर पाई। गाढाऽलिङ्गन दायी।**
**निरतं संगमलग्नां। निभृतं कामे मग्नां॥** २

**मामलिङ्गय तोषय मदनं। गाढं चुम्बतु सरोज वदनं।**
**मम पृथुल नितम्ब भरेण। तारय कामं संतोषेण॥** ३

प्रिय। अहं वासक सज्जिकाऽभवम्। अहं प्रति क्षणं त्वदागमनं निरीक्षन्ती केलीगृहं तथा आत्मानं च अलङ्कुर्वन्ती भवन्तुमानेतुं सखीं प्रैषयम्। सखी भवतः सन्देश मानीय प्रतिनिवृत्ता किन्तु भवान् न समागतवान्। अहं विभावानुभावैः मथितान्त रङ्गिणी भवामि। न ते हृदयं यथा मम भवति तथा? प्रभो भवान् स्वप्ने दृष्टोऽस्ति। अहं प्रत्यक्षं त्वां दिदृक्षामि। सत्वरं गाढं मां ते बाहुबन्धनडोलायां प्रसान्त्वय।

**रात्रिं दिवं मे हृदयं त्वदीयं। रूपं च चेष्टां सततं व्यनक्ति।**
**सेहे न बाधां कुसुमायुधस्य। किमर्थमेवं प्रविलंबसे प्रिय॥**

अपिच।

**अङ्गनासु सदाऽनङ्गः। निर्दयः क्रूर सायकः।**
**रत्वा त्वया प्रियं चाहं। तर्पयिष्यामि मन्मथम्॥**

प्रिय! आलस्ये अमृतमपि विषं भविष्यति। (इति शयनमन्दिरे शयने मदनरेखेव तनुलतां निक्षिप्य विचारयन्ती आस्ते)

**अनिरुद्धः** — (एकस्मात् कोणात् प्रविश्य तां पश्यन्) (आत्मगतम्) युवतीनां विलासाः कृशावस्थासु शरन्नद्यः इव रमणीयाः चित्ताकर्षकाः भवन्ति। अत्रैव स्थित्वा अहं निरीक्ष्ये। (इति तत्रैव पश्यन् तिष्ठति)

**उषा** — (शरीरोत्सारणं जृम्भणं च कृत्वा) अहो निरीक्षणमेतत् हृदयविदारकं भवति। कुसुमायुधः क्रूरः भवति। प्रभो

**गच्छाम्यहं काल कृतान्त गेहं। पृच्छाम्यहं त्वां तव पादपीठम्।**
**जीवामि नाहं भवता विना च। प्राणेश तुभ्यं शतथा नमांसि॥**

(इति शयने इतस्ततः लुठति)

**अनिरुद्धः** — (प्रविश्य)

आगतोऽस्मि प्रिये मास्तु । चिन्ता सौख्य विनाशिनी ।
इतः परं सदाऽनन्दे । तारयिष्यामि मा शुचः ।।

(इति तस्याः समीपं गत्वा) प्रिये ।

अन्योन्यालम्बनेनैव । जीवितं सरसं सदा ।
आधाराधेय रूपेण । सर्वं चलति मानिनि ।।

(इति तां आलिङ्गितुं गच्छति)

(यवनिका पतति)

* * *



## ।। इन्द्राय-स्वाहा ।।

सर्व भूतेषु तल्लीनं । सृष्टिस्थिति लयालयम् ।
सौरंमहः सदा भक्त्या । वन्दे चैतन्यकं महत् ।।

(नान्द्यन्ते)

**सूत्रधारः** — तत्र भवन्तः रसिकाः कलाभिमानिनः अद्य वयं इन्द्राय-स्वाहा नाम नाटकं प्रदर्शयितुं समुत्सुकास्मः।

**नटी** — (प्रविश्य) आर्य ! नाटक प्रदर्शनार्थं रङ्गमञ्चः यथोचितं यथोक्तं समलङ्कृतः विद्यते। समारम्भोयं उपक्रम्यताम्।

**सूत्रधारः** — तिष्ठतावत् किञ्चित् कालं।

**नटी** — किमर्थं विलम्ब्यते।

**सूत्रधारः** — प्रथमतः कविपरिचयः कर्तव्यः।

**नटी** — सविस्तरं कथय।

**सूत्रधारः** — अयं कविः सर्वतोमुख साहित्यसृष्टिं विधाय विंशतितम शताब्दे गीर्वाणभारतीं प्रजाभारतीं चक्रे।

**नटी** — कथमयं प्राचीन कथावस्तु केवलं विलिखितवान्।

**सूत्रधारः** — अस्ति कारणम्। यतः।

प्राचीनं शाश्वतं सत्यं। नवीनं हृदयङ्गमम्।
ततः प्राच्य कथावस्तु। नावीन्ये रचितं प्रियम् ।।

**नटी** — अयं कविः प्राचीननवीनसङ्गमं कृतवान् किं ?

**सूत्रधारः** — अयं प्राचीन नवीन साम्प्रदाय मेळने सेतुरूपः जातः। अयं भारतीय परम्परार्चकः, संस्कृत भाषाभिमानी च।

**नटी** — अस्मिन् सर्वसंकर त्रिंशतितमे शताब्दे पद्मपत्र स्थितवारिबिन्दुरिव जीवनं यापयन् गीर्वाणवाणीसेवारतो जातः अयं कविः। तस्मादहं बहु प्रमुदितास्मि। कर्तव्यमादिश्यतां देवः।

**सूत्रधारः** -- रसिकान् प्रतोषयितुं किञ्चित् गीयताम्।

**नटी** — आर्य। एतत् गायनस्य स्थानं भवति।

**सूत्रधारः** — हञ्जे। त्वं न जानासि। अयमेव योग्यः कालः यतः प्रत्यूष पवनाङ्कुराः मन्दं मन्दं प्रवहन्ति।

**नटी** — अधुना सूर्यपुत्रः कर्णः प्रसुप्तः अस्ति। तस्मात् अयं कालः योग्यः नहि। मदीयगानेन तस्य निद्राभङ्गः भविष्यति।

**सूत्रधारः** — प्रिये अयमेव पवित्रकालः यतः कर्णस्य पिता लोकचक्षुः सप्ततुरग रथाधिष्ठितः लोकं पवितुं समायाति।

**नटी** — हां सत्यमेव। कं विषयमुद्दिश्य केन रागेण गातव्यम्?

**सूत्रधारः** — भूपाल रागे कर्णं प्रबोधयन्ती सूर्यं स्तुवन्ती गायस्व।

**नटी** — शृण्वन्तु भवन्तः।

**निद्रोत्थिताः सर्वदिशश्च सूर्यं। विलोक्य सप्ताश्व रथोपरिस्थम्।**
**महोज्ज्वलैः तस्य हिरण्यरश्मिः। प्रक्षालिताः भान्ति तनुप्रकाशैः॥**

**सूत्रधारः** — अहो ते कविता सौन्दर्यं गान माधुर्यं च अपरूपं अद्वितीयम् भवतः।

**नटी** — आर्य। सूर्यः क्षिप्रं विसर्पति गगनमण्डलं एहि करणीयेषु मग्नौ भवेव। (इति गच्छतः)

(शय्यायां कर्णः स्वपिति सूर्यः तस्य पादसन्निधौ तिष्ठति)

**कर्णः** — (ससंभ्रमं उत्थाय अक्षिणी प्रमार्ज्य) कोऽस्ति भवान्।

**सूर्यः** — अहं आदित्योऽस्मि।

**कर्णः** — (सहसोत्थाय) भगवन् ज्योतिषांपते अभिवादयेऽहम्। (इति नमस्करोति। उपविष्टुं पीठं ददाति सूर्यः उपविशति)

**नमस्ते देवदेवेश। कर्मसाक्षी त्रयीतनो।**
**किमर्थमागतोसित्वं। नाकलोकात् प्रियं भण।।**

**सूर्यः** — (विहस्य अपि कुशलं ते।

**कर्णः** — अयि तेजस्विन्। आरोग्यक्षेम कल्याण कारकेण भवता सर्व लोकोऽयं चाल्यते पावनं क्रियते। अनामयं किमुत मद्विषये।

**सूर्यः** — कर्ण! त्वं न जानासि ममागमन कारणम्।

**कर्णः** — भगवन्। महौजसां युष्मादृशानां भावना, अस्मादृशानां लौकिकानां कथमनुमेया भवति)

**सूर्यः** — हृद्गत भावनां प्रकटयितुमेव समागतोऽस्मि।

**कर्णः** — अहं सन्नद्धोऽस्मि कथयतु भवान्।

**सूर्यः** — कर्ण। श्रृणु ते जन्मरहस्यम्।

**कर्णः** — जन्म सहजं भवति। रहस्यं किं विद्यतेऽत्र।

**सूर्यः** — अस्ति।

**कर्णः** — लौकिकानां अविदितं अलौकिकानां विदितं भवति।

**सूर्यः** — कर्ण श्रृणु, त्वं मे सुतः असि।

**कर्णः** — अहं, कथं तव सुतः, महाभाग।

**सूर्यः** — कर्ण! सौहृदादहं ब्रवीमि श्रृणु।

**कर्णः** — अवहितोऽस्मि भगवन्।

**सूर्यः** — एकदा दुर्वासाः कुन्तिभोज गृहं समायातः।

**कर्णः** — परिव्राजकानां अयं सहजः।

**सूर्यः** — भोजकन्या कुन्ती दुर्वास संभक्त्या पूजयामास।

**कर्णः** — भारतीयानां विशेषतः स्त्रीणां मुनिपूजनं योग्यः। ततस्ततः।

**सूर्यः** — स मुनिः तुष्टः तस्यै सूर्यमन्त्रं उपदिष्टवान्।

**कर्णः** — साधुकृतम्। ततस्ततः।

**सूर्यः** — गङ्गायां स्नास्यन्ती कुन्तीकन्या चापल्यात् अरुण गभस्तिबिम्बं प्रार्थयामास। तेन मन्त्रोच्चारणेन अहं तस्याः सकाशं समागतः आसम्।

**कर्णः** — ततस्ततः।

**सूर्यः** — तदा तस्यै पुत्रदानमकरवम्। स एव पुत्रः त्वं मदीयः।

**कर्णः** — भगवन्। त्वदीय वदनारविन्दात् निसृतां छन्दोमयीं वाणीं श्रुत्वा मे भवत्याश्चर्यम्।

**सूर्यः** — सर्वमेतत् सत्यम्। तस्मात् त्वं कानीनः।

**कर्णः** — भगवन्। ज्ञातमधुना मया मे जन्मवृतान्तविशेषः। अधुनात्रागमन प्रयोजनं किम्।

**सूर्यः** — श्रृणु। पुत्रप्रेम्णा कथयामि।

**कर्णः** — निवेदयतु भवान्।

**सूर्यः** — शक्रः त्वां वञ्चयितुं समागमिष्यति।

**कर्णः** — मां वञ्चयितुं ? मां वञ्चयित्वा शक्रः किं प्राप्स्यति।

**सूर्यः** — श्रृणु !

**उपयास्यति शक्रस्त्वां। पाण्डवानां हितेप्सया।**
**ब्राह्मणच्छद्मना प्राप्तुं। भवतः कर्णकुण्डलौ॥**

**कर्णः** — शक्रः मां याचितुं कर्णकुण्डलौ आगच्छति ?

**सूर्यः** — हां शक्रः।

**कर्णः** — अहो मे भाग्यम्।

सूर्यः – तथा मावद त्वं न जानासि ।

कर्णः – एतत् मे भाग्यं जानामि ।

सूर्यः – एतत् ते भाग्यं नहि ।

कर्णः – कथं नहि

सूर्यः – एतत् ते दौर्भाग्यं अस्ति ।

कर्णः – कथम् ।

सूर्यः – कर्ण । ते दौर्बल्यं त्वं न जानासि ।

कर्णः – किं तत् दौर्बल्यम् ।

सूर्यः – त्वं तव दानगुणेन मृत्युं क्रीणासि

कर्णः – तत् कथम् ।

सूर्यः – श्रृणु ।

**तवशीलं विदितं सर्वैः । याचसे नत्वं कदापि च ।**
**किन्तु त्वं भिक्षितः सद्भिः । ददास्येव सदा प्रियम् ॥**

एवंविधं त्वां ज्ञात्वा, स्वयं पाकशासनः
कुण्डलार्थाय कवचं चैव भिक्षितुं आगन्ता ।

कर्णः – यदि एतत् सत्यं भवति तर्हि ।

**धन्योऽस्मि जातः खलु भूतलेस्मिन् । सान्तत्य दानेन महीसुराणाम् ।**
**क्रीणामि सत्यं बहुपुण्य राशिं । अतः प्रियं किं भवतीह देव ॥**

भगवन् लोके याचनं दानं च सहजाती । तौ अन्योन्याश्रयौ भवतः ।

सूर्यः – तस्मादहं वच्मि त्वया तस्मै प्रयाचनाय कुण्डले न देये ।

कर्णः – किमस्ति दोषः अत्र ।

सूर्यः – विद्यतेऽत्र दोषः । तात कुंण्डलार्थें ब्रुवन् । अन्यैः बहुविधैः वित्तैः त्वां शक्रः विमोहयिष्यति । त्वचा सः निवार्यः ।

कर्णः – ततस्ततः ।

सूर्यः – **रत्नैः स्त्रीभि स्तथागोभिः । बहुधैः सकलैर्धनैः ।**
**कुण्डलेप्सुः समायाति । कर्ण त्वां मघवा ध्रुवम् ॥**

कर्णः – ततस्ततः ।

सूर्यः – **यदि दास्यसि कर्ण त्वं । सहजे कुण्डले शुभे ।**
**क्षीणायुः सपदंगत्वा । मृत्योर्वशमवाप्स्यसि ॥**

कर्णः – आश्चर्यमेतत् ।

सूर्यः – कर्ण कवच कुण्डलाभ्यां समायुक्तः त्वं रणे अरीणां अवध्यः भविष्यसि । मम वचः विद्धि ।

कर्णः – किं कर्तव्यम् ।

सूर्यः – तस्यात् कर्ण ते जीवितम् प्रियं चेत् तत् जीवितं त्वया रक्ष्यम् ।

कर्णः – भगवन् सूर्य । अहं ते प्रियः अस्मि । किन्तु अस्मात् व्रतात् न निवार्यः अहं । इदं मे भाग्यं जानामि ।

**अत परं नास्ति बृहत्तमं भुवि । यतः स्वयं सो मघवाभ्युपेत्य मां ।**
**लघुश्च भूत्वा मम सन्निधौ प्रियं । नतो ह्रिया वस्तुचयं प्रयाचते ॥**

सूर्यः – पुत्र, एवं मा भण ।

कर्णः – भगवन् अनेन जीवितेन लोके कीर्तिं वृणोमि ।

सूर्यः – कीर्तिमान् लोके किं अश्नुते ।

कर्णः — भगवन् । कीर्तिमान् स्वर्गं अश्नुते । हीनकीर्तिः नश्यति । कीर्तिः मातृवत् लोके पुरुषं संजीवयति । नरस्य कीर्तिः आयुः । कीर्तिः परलोके पुरुषस्य परायणं भवति ।

सूर्यः – कीर्त्या ते किं भवति ।

कर्णः – कीर्तिः आयुर्विवर्धिनी भवति । तस्मादहं शरीरजे ब्राह्मणेभ्यः

दत्वा शाश्वतीं कीर्तिं प्राप्स्यामि ।

**जित्वा परान् गर्वपरान् प्रकामं । हुत्वा शरीरं परवीरयुद्धे ।**
**प्राप्स्यामि लोके विमलां प्रसिद्धिं । आचन्द्र तारार्कमनन्य कीर्तिम् ।।**

जीवितेनापि मे कीर्तिः रक्ष्या । तत् मे व्रतं विद्धि । अहं मघवते भिक्षां दत्वा देवलोके परां गतिं गमिष्यामि ।

**सूर्यः** – ( स्मितंकृत्वा ) कर्ण । कीर्तिः पुरुषस्य जीवित साध्वी भवति । मृतस्य कीर्त्या किं कार्यम् । मृतः कीर्तिं न जानीते । जीवन् कीर्तिं नसमश्नुते । मृतस्य मर्त्यस्य कीर्तिः गातायुषः माला इव भाति ।

**कर्तव्यः परमो धर्मः । धर्मान्नान्योऽस्ति भूतले ।**
**कानीन त्वं विजानीहि । काकीर्तिः किंनु शाश्वतम् ।।**

**कर्णः** – भगवन् त्वं मां विलोभयसि भवदीय मायावादेन ।

**सूर्यः** – कर्ण न विलोभयामि । किन्तु सत्यं कथयामि ।

**कर्णः** – अहमपि सत्यं कथयामि मार्ताण्ड ।

**सूर्यः** – कन्यकाजात । अत्र विद्यते किञ्चित् देवनिर्मितम् । देवगुह्यं त्वया ज्ञातुं नशक्यं । तस्मात् ते गृह्यं नाख्यामि । तत् भवान् काले वेत्स्यति ।

**कर्णः** – भगवन् । भवान् सर्वशक्तिमान् । किं एवं ब्रवीति ।

**सूर्यः** – महाद्युते । त्वं कुण्डलाभ्यां शोभसे । भिक्षिते वज्रपाणौ ते कुण्डलौ न दातव्यौ । कर्ण, पुरंदरस्य बुद्धिं त्वं अपनुद ।

**कर्णः** – एवं करणं न मे शक्यं भवति ।

**सूर्यः** – त्वं नित्यं सव्यसाचिना स्पर्धसे । इह युधि शूरः सव्यसाची त्वया समेष्यति ।

**कर्णः** – युधि कवच कुण्डलैः किं प्रयोजनम् ।

**सूर्यः** – कवच कुण्डलैः किं प्रयोजनं इति ब्रूते श्रृणु ।

कुण्डलान्वित वीरं त्वां । इन्द्रोवा फल्गुनोऽपिवा ।
नशक्तो युधि जेतुं च । तस्मात् देयौ नते सुत ।।

मे हित वाक्यान्येतानि त्वं श्रृणु ।

कर्णः – तिग्मांशो । मां त्वं रक्षितुं प्रयतसे । नकापि भीतिः विद्यते मे ।

रणेऽर्जुनं विजेष्यामि । भीतिर्नास्ति ममाहवात् ।
बिभ्येहं अनृतान्नित्यं । किन्तु मृत्योर्नहि प्रभो ।

सूर्यः – भवान् अरीन् कथ जेष्यति ।

कर्णः – भवान् न जानाति । ममास्ति खलु महत् अस्त्रबलं यत् उपात्तं द्रोणात् जामदग्न्याच्च । इद्रं अनुजानीहि सुरश्रेष्ठ । भिक्षिते वज्रपाणौ आत्मनः जोवितमपि दद्यां इदं ममव्रतम् ।

सूर्यः – कर्ण । त्वं मम वाक्यं तृणीकरोषि । तत् सर्वथा सत्यं भाति । यतः ।

संप्राप्ते मृत्यु कालेतु । बुद्धिनाशो भविष्यति ।
हितमप्यहितं भाति । मित्रं शत्रुर्भवत्यहो ।।

तात ! यदि वज्रिणे कुण्डले ददासि त्वं युद्धे अर्जुनेन अवश्यं विनाशं प्रापितः भविष्यसि । तदर्थमेव दानव सूदनः ते कुण्डले जिहीर्षति । यदि त्वं कुण्डले वर्म दास्यसि तर्हि अमित्र निर्बर्हिणीं शक्ति अमोघां मे देहोति पुरंदरं अभ्यर्थय । एनं उपायं ते कथयाम्यहम् ।

कर्णः – साधूक्तं भवता भगवन् ।

सूर्यः – एतादृशेन भावेन । यदि त्वं कर्णकुण्डले ।
दद्याः शक्राय युद्धेऽस्मिन् । तया शत्रून् हनिष्यसि ।।

कर्णः – अभिवादये गभस्तिमान् ।

सूर्यः – भद्रं ते भवतु । ( इति गच्छति )

कर्णः – (आत्मगतम्) इन्द्राय कवचकुण्डलानि दत्वा तस्मात् शक्ति प्राप्य तया अर्जुनं हनिष्यामि (इतिगच्छति)

(यवनिकापतति)

# द्वितीयं दृश्यम्

( एकाकी शय्यायां उपविश्य आत्मगतम् )

**कर्णः** — अहो लोकबान्धवः भगवान् सूर्यः पुत्रप्रेम्णा मे समक्षं समागत्य सर्वं सविस्तरं उपदिष्टवान्। धर्मस्तु बलवत्तरः। देशप्रतिष्ठा गौरवश्च धर्मे प्रतिष्ठितौ। यदि महारथिनः धर्मभ्रष्टं कुर्युः तर्हि भव्य भारतं अस्मान् विनिन्दिष्यति। तत् अयोग्यं भवति। वयं मर्तारः किन्तु देशप्रतिष्ठा शाश्वती भवति। स्वार्थाय देशगौरवं नाशयितुं अहमसमर्थः। धर्माद्भिन्नं न कर्तव्यं इति कृत निश्चयोऽहं। त्यागेन यशस्वी भवेयम्। त्यागेन अनश्वररूपां कीर्तिं लभेयम्। कः कोऽत्र भोः। ( इति आह्वयति )

**प्रतीहारी** — ( शस्त्रकटिः प्रविश्य ) अहमस्मि आज्ञापयतु महाराज। ( इति नतमस्तकः भवति )

**कर्णः** — मे सारथिं शल्यं आह्वय।

**प्रतीहारी** — यथाज्ञापयति भवान्। (इति नत्वा गच्छति ततः प्रविशति शल्यः )

**शल्यः** — महाराज नमांसि। ( इति नमस्करोति )

**कर्णः** — एहि सारथे। उपविश। ( इति पीठं ददाति। शल्यः उपविशति पीठे )

**शल्यः** — महाराज ? को विशेषः विद्यते, अद्य प्रभाते केवलं आहूतोऽस्मि।

**कर्णः** — अस्ति विशेषः।

**शल्यः** — कथयतु।

**कर्णः** — शृणु।

**शल्यः** — अवहितोऽस्मि।

**कर्णः** — अद्य प्रभाते अधुना भगवान् सूर्यः मे समक्षं समागत्य जन्मरहस्यं कथयित्वा गतवान्।

**शल्यः** — अप्यस्ति जन्मविशेषः ?

**कर्णः** — अस्ति।

**शल्यः** — महापुरुषास्सर्वे विशेष जन्मानः ।

**कर्णः** — सत्यमेव सर्वोऽपि जानाति जन्मनाऽहं कवचकुण्डलैः समन्वितः इति।

**शल्यः** — सर्वोऽपि जानाति।

**कर्णः** — कवचकुण्डलौ मम जीवन रक्षकौ इति सूर्येण प्रबोधितः।

**शल्यः** — विषयमेनं श्रुत्वा मे महदानन्दं भवति यतः भवान् शस्त्रास्त्र संपदा परिभूषितः, अपिच जीवन रक्षकैः कवचकुण्डलैः परिपूर्णः इति ।

**कर्णः** — सत्यं ब्रवीति भवान्। जामदग्न्यात् बहु शस्त्रसम्पदं प्राप्तोऽस्मि। द्रोणाचार्य शिष्यत्वे बहु शस्त्रसम्पदं प्राप्तवानस्मि।

**शल्य** — भवान् अधुना पाण्डव जेता भविष्यति।

**कर्णः** — नास्ति संशयलेशः। अहं त्वदीय सारथ्येन मम शस्त्रास्त्र बलेन अमूल्यः कवचकुण्डलैः अवश्यं पाण्डव जेता भविष्यामि।

**शल्यः** — वयं भद्राणि द्रक्ष्यामः।

**कर्णः** — अहं मे आप्त मित्राय सुयोधनचक्रवर्तिने समस्त धरावलयं जित्वा उपायनमिव दास्यामि।

**शल्यः** — महाराज! प्रफुल्लितेयं भावना। भवतां मनोरथसिद्धिः अवश्यं भविता। कुरुवृद्धः पितामहः तथा शरतल्पगतः अभूत्। गुरुः द्रोणः तथा व्यापादितः। एतावत्पर्यन्तं महाभारत युद्धे पञ्चदश दिवसाः व्यतीताः भीष्मद्रोण सेनाधिपत्ये। तदनन्तरं योग्यः सेनाधिपतिः भवानेव।

**कर्णः** — शल्य। तव सारथ्येन मम शस्त्रास्त्र सम्पदा यत् भीष्मद्रोणाभ्यां न साधितं तदहं साधयिष्यामि।

**शल्यः** — भवान् अवश्यं साधयिष्यति।

**कर्णः** — मे मित्रं सुयोधनः समस्त धरातलस्य शासकः भविष्यति। बहुकालानन्तरं मे अनुकूलः समयः सम्प्राप्तः।

**शल्यः** — अवश्यं भवान् पाण्डवजेता भविता।

**कर्णः** — अहं एतावत्पर्यन्तं मम त्यागेन दानेन लोकप्रसिद्धः अभवम्। इतः परं अयं कर्णः अर्जुन जेता इति प्रख्यातिं प्राप्स्यति।

**शल्यः** — भवतः वदनारविन्दात् प्रसृतं वाक्चयं श्रुत्वा अहं प्रफुल्लितः भवामि।

**कर्णः** — अत्र विद्यते किञ्चित् अधर्मप्रवृत्तिः।

**शल्यः** — केयं प्रवृत्तिः।

**कर्णः** — मदीय शस्त्रास्त्रबलं कवचकुण्डलानि विलोक्य शक्रः ईर्ष्यायुतः भूत्वा ब्राह्मणरूपे अभ्यर्थयितुं आगमिष्यति। त्वं तस्मै मायच्छ इति च जगाद भगवान् सूर्यः।

**शल्यः** — भवान् मा यच्छतु।

**कर्णः** — तत् कथं भविष्यति। यदि सः आगत्य ब्राह्मणवेषे मामभ्यर्थयति अवश्यं दातव्यं अस्ति।

**शल्यः** — अहं वच्मि, भवान् विना च कवचकुण्डलानि अन्यत् दास्यमीति प्रार्थयतु।

**कर्णः** — तथा कथनं कर्णस्य शोभां नावहति।

**शल्यः** — असत्य भाषणं पापं न भवति।

**कर्णः** — तथा मावद।

**शल्यः** — प्राणावसान समये असत्यभाषणं पापं न भवति इति शास्त्र प्रमाणम्।

**कर्णः** — स्वार्थाय असत्यभाषणं पापमेव भवति।

**शल्यः** — राजतन्त्रे पापकर्म किं पुण्यकर्म किम्।

**कर्णः** — स्वार्थाय साधयित्वा जनाः चिरंजीविनः भविष्यंति किम्।

**शल्यः** — नहि। किन्तु अन्ततः सर्वमपि शून्यं भवति।

**कर्णः** — तस्मात् अकीर्तिकरं कर्तुं नोत्सहे।

शल्यः — का कीर्तिः। का अकीर्तिः। द्वावपि दिवारात्र रूपौ। अत्रेयं आभासा-केवलं। द्वावपि वस्तुतः अभिन्नौ।

कर्णः — शल्य त्वं न जानासि धर्मं। युद्धे अधर्मः अयोग्यः क्षत्रियस्य।

शल्यः — तर्हि भवान् कवचकुण्डलानि दित्सति।

कर्णः — यदि वृत्रः ब्राह्मणरूपे आगत्य मे कवचकुण्डलानि अभ्यर्थयते, तर्हि प्रत्याम्नायं अन्यत् दातुं प्रयतिष्ये। यदि हठेन कवच कुण्डलानि पृच्छति तर्हि तानि तस्मै दत्वा तस्मात् अमोघां शक्तिं प्राप्स्यामि।

शल्यः — तथा यदि क्रियते तर्हि पर्यवसानं सुखमयं भवति। अधुना भवान् कौरवसेना समुद्रवेला परिपालन महामहीधरः अस्ति।

कर्णः — (सगर्वं) भवान् रथं सज्जीकुरुष्व। गच्छ। अहं सन्नद्धोभूत्वा आगच्छामि।

शल्यः — नमस्ते महारथ। शुभं भूयात्। (इति गच्छति)

कर्णः — (आत्मगतम्) अहं अधुना कौरवसेना समुद्रवेला परिपालन महामहीधरः नरपतिः। मदीय सेनाधिपत्ये महाभारत संग्रामः कर्तव्यः इतः परम्। यदि प्रथमतः अर्जुनं जेष्यामि तर्हि महाभारत युद्धं अवसित प्रायं भविष्यति। भवतु धर्मस्तु बलवत्तरः। यत् भाव्यं तत् भवति। कालाय तस्मै नमः। (इति गच्छति)

(यवनिका पतति)

* * *

## तृतीयं दृश्यम्

(युद्ध संरम्भः भवति। पणवपटहकाहळशङखानां नादाः दिगन्तराळं बधिरयन्ति। ततः प्रविशति सारथिना शल्येन सहितः महारथी कर्णः। अश्वानां खुरनादाः शल्यस्य अश्वचोदन कण्ठरावाः श्रूयन्ते)

कर्णः – शल्य ! यत्र अर्जुनः तत्र मे रथं स्थापय ।

शल्यः – यथाज्ञापति भवान् ।

( नेपथ्ये )

( भवान् भिक्षां ददातु ) ( इति ब्राह्मणकण्ठ स्वरः श्रूयते )

कर्णः – कथमत्र संग्राममूर्घ्नि याचकस्याविर्भावः ।

ब्राह्मणः – (नेपथ्ये) महत्तरां भिक्षांयाचे ।

कर्णः – शल्य ! यत्र अर्जुनः अस्ति तत्र मे रथं स्थापय ।

शल्यः – यथाज्ञापयति भवान् ।

( ततः प्रविशति ब्राह्मणः )

ब्राह्मणः – अयि दानकर्ण महत्तरांभिक्षांयाचे ।

कर्णः – अयिभोः महाब्राह्मण स्वागतं ते ।

ब्राह्मणः – ते कीर्तिः आचन्द्र तारार्कं तिष्ठेत् ।

कर्णः – (आत्मगतं) कथमयं चिरंजीव इति न वदति । किमेपक्ष्यते भवता ।

ब्राह्मणः – कर्ण ! भवतः याचकाः किमपेक्षन्ते । (कर्णः रथादवतरति)

कर्णः – नमो भूदेवताय ब्राह्मणाय । स्वागतं ते ।

ब्राह्मणः – किं स्वागतं कथयति भवान्, ददानि इतिकथय ।

कर्णः – महा ब्राह्मण ! किं ददानि ते ।

ब्राह्मणः – ब्राह्मणाय किं देयं इति मा विचारय ।

कर्णः – हिरण्य कण्ठचः ।

ब्राह्मणः – नहि ।

कणः – प्रमदाः ।

ब्राह्मणः – कथं प्रमदाः ।

कर्णः – ग्रामान् ।

**ब्राह्मणः** – नाहं याचे ग्रामान्।

**कर्णः** – नोचेत् गोकुलानि।

**ब्राह्मणः** – एते ब्राह्मणस्य नोपयुक्ताः।

**कर्णः** – किं ददानि ते निश्शङ्कं कथय।

**ब्राम्हणः** – प्रष्टुं मे संकोचः भवति।

**कर्णः** – ब्राह्मण तक्रार्थमागत्य तक्रभाण्ड गोपनेन किं प्रयोजनम्।

**ब्राम्हणः** – दाता याचक हृदयम् ज्ञात्वा यदि ददाति महानानन्दः भवति।

**कर्णः** – किं ददानि मे प्राणान्।

**ब्राम्हणः** – शान्तं पापं। (कर्णौ पिधाय)

**कर्णः** – गृहाण दास्यामि।

**ब्राम्हणः** – नहि। नहि।

**कर्णः** – भूखण्डं ददानि।

**ब्राम्हणः** — (त्वरया) हां देहि। (किञ्चित् विचार्य) मास्तु। मास्तु।

**कर्णः** – रत्नखचित हेमाभरणानि ददानि।

**ब्राम्हणः** – नहि।

**ब्राम्हणः** – **देहि मह्यं समुत्पाट्य। कुण्डले सहजे तव।**
**तदात्वं सत्यवान् भूयाः। ते कीर्तिः चन्द्रिका भवेत्॥**

**कर्णः** – विप्र। ते कामना महत्तमा अनूह्याच भाति।

**ब्राम्हणः** – भवान् दाता। अहं प्रति गृहीता। दान समये ते हस्तः उपरि, ममहस्तः अधः भवति। तत् ते गौरवास्पदं भवति।

**कर्णः** – विप्र! ते वर्म सकुण्डलं नदास्यामि तुभ्यं अवनिं प्रमदाः गाश्च दास्यामि।

ब्राम्हणः – विशां पते ! अन्तरेण सहजवर्म कुण्डले नह्यन्यत् प्रवृणोऽस्मि ।

शल्यः – राजन् अयं ब्राह्मणः नहि । अत्याशापूरितः महाब्राह्मणः ।

कर्णः – तथा मावद ।

शल्यः – सत्यं ब्रवीमि । असंतुष्टो द्विजोनष्टः ।

ब्राह्मणः – अहं महाब्राह्मणः । मदीया कामना महती भवति ।

कर्णः – (विहस्य) विप्र सहजं वर्म मे कुण्डलेच अमृतोद्भवे । तेनाहं अवध्योऽस्मि । ततः नैतत जहाम्यहं । तस्मात् ब्राह्मण, मत्सकाशात् त्वं विशाल राज्यं प्रतिगृहीष्व । यतः ।

**कुण्डलाभ्यां विमुक्तोऽहं । तेजोहीनो भवामि च ।**
**गमनीयो भविष्यामि । शत्रूणामाहवे द्विज ।।**

ब्राम्हणः – भवान् महादाता । दानशूरः इति त्वामहं यशोयुतं समागतोऽस्मि । यदि भवान् दित्सति यत् याचितं तत् संगृह्य गच्छेयं । नोचेत् भवन्तं कलङ्कितं विधाय प्रतिविवृत्तः भवेयम् ।

( इति अर्थवृतः गच्छति )

कर्णः – (विस्मित्य) देवेश तिष्ठ ।

ब्राम्हणः – (कर्णाभिमुखंआगत्य) धन्योऽस्मि भूपते ।

कर्णः – देवेश त्वं मया विदितोऽसिप्रागेव ।

ब्राम्हणः – अहं कथं विदितोऽस्मि भवता ।

कर्णः – भगवान् कर्मसाक्षी सर्वमकथयत् ।

ब्राम्हणः – भवान् ज्ञातपूर्वोऽस्ति तस्मात् दातुं उद्युक्तो भव ।

कर्णः – महाब्राह्मण । वृथा वरःमया दातुँ न शक्यः भवति । भवान् देवेश्वरः साक्षात् । त्वयावरः देयः । भवान् अन्येषां भूतानां अपि ईश्वरः भूतकृत् ।

ब्राम्हणः — भवान् मां सम्यक् जानाति ।

कर्णः — यदि शतक्रतवे दास्यामि, तर्हि मे शतक्रतु फलं भविष्यति, यत् अन्येषां न भवति ।

**ददामि तुभ्यं मम वर्म कुण्डले। ऋते प्रदानान्नहि विद्यते परं।**
**महीतलं नश्यति कालपर्ययात्। विभान्ति दत्तानि चिरं हुतानि च॥**

देव! कुण्डले कवचं यदि दास्यामि वध्यतां उपयास्यामि। मतः विनिमयेन कुण्डले-वर्मच हरस्व।

ब्राम्हणः — कर्ण! तवान्तिक आगच्छता मया पूर्णमेव रवेः विदितं आसीत् सर्व। मे वज्रं वर्जयित्वा यथेच्छया प्रवृणीष्व ।

कर्णः — धन्योऽस्मि ब्राह्मण। देवेश।

**गृहाण कर्णात् देवेश। कुण्डले वर्म एवच।**
**शत्रुघ्नीं शक्तिमेकां मे। देहि दिव्याममोघिनीम्॥**

ब्राम्हणः — (विचिन्त्य मुहूर्तं) शरीरजं वर्म कुण्डले च मे प्रयच्छस्व। भवान् शक्तिं गृह्णातु। शृणु।

**अमोघा शतशः शत्रून्। हत्वा मे पाणिमेष्यति।**
**रिपुमेकं निहत्याजि। मामेव सहसा प्रियम्॥**

शल्यः — सूतपुत्र! त्वरयति भवान्। द्विवारं चिन्तय कार्यारम्भे। सहजाते वर्म कुण्डले मा यच्छतु। शत्रु निबर्हणं अति क्लेशप्रायं भवति।

कर्णः — शल्य, जानासि खलु मम सान्निध्ये शस्त्रास्त्र संपत्तिः विद्यतेऽति।

ब्राम्हणः — कर्ण! ते अमोघां मे शक्तिं यच्छामि। (इति यच्छति)

कर्णः — तिष्ठ देवेश? प्रथमतः मत्सकाशात् कवचकुण्डले गृहाण। अनंतरं ते शक्तिं मे प्रयच्छ। (इति खड्गेन कवचं विच्छेद्य कवचकुण्डले समुत्कृत्य) इन्द्राय स्वाहा! इन्द्रायेदं न मम। (इति यच्छति)

**ब्राम्हणः** — अहं संतुष्टोऽस्मि ( इति गृहणाति, शक्ति प्रयच्छति )

**कर्णः** — महाब्राह्मण देवेश अनुगृहीतोऽस्मि।

**ब्राम्हणः** — ( विहसन् गच्छति )

**कर्णः** — शल्य ! यत्र अर्जुनः तिष्ठति तत्र मे रथं नय। मे कवचकुण्डले प्रदत्ते भारताहव यज्ञे। तस्मात् इन्द्रात् मे यज्ञफलमित्र शाक्ति नामकं अस्त्रं प्राप्तमासीत्। रथं चोदय यत्र अर्जुनः वर्तते तत्र।

**शल्यः** — यथाऽज्ञापयति देवः। ( इति रथं चोदयति )

( यवनिका पतति )

* * *



# ।। धनुर्भङ्गम् ।।

श्रीरामादर्शदाम्पत्यं । सान्तत्यं भारतावनौ ।
धर्मार्थकाममोक्षाळि । दद्यात्कीर्तिच शाश्वतीम् ।।

(नान्द्यन्ते)

सूत्रधारः — अयि कुटुम्बिनि ! हञ्जे कुटुम्बिनि ! किं अवसितमण्डनाऽसि ?

नटी — (नेपथ्ये) आर्य ! अलङ्करोम्यात्मानम् । भवान् किञ्चित्-कालं तिष्ठतु ।

सूत्रधारः — हञ्जे वेला अतिक्रान्ता क्षिप्रमेहि । स्वात्मनः अलङ्करणं विना नान्यदस्ति नारीणां जगति । एताः अलङ्करणसमये, स्वात्मानं आदर्शे विलोक्य विविध चेष्टादिकं कुर्वन्त्यः मर्कटायन्ते । (उद्वेगेन) हञ्जे ! कुटुम्बिनि !

नटी — (कर्णाभरणं अलकुर्वन्ती) एषास्मि भोः (इति प्रविशति)

सूत्रधारः — तरुणि इतः पश्य । अद्य धनुर्भङ्गं, नाम नाटकं प्रदर्शयितुं भारतीय परम्परानुयायिभिः आज्ञप्तोऽस्मि । तस्य कृते ते सहायमपेक्ष्यते ।

नटी — आर्य ! नाटक प्रदर्शने सर्वदा मम सहायः भविष्यति ।

सूत्रधारः — प्रिये भवदीय सहकारेण प्रमुदितोऽस्मि ।

नटी — किं मया कर्तव्यं आज्ञापयतु भवान् ।

सूत्रधारः — भवती संगीतराज्ञी । प्रथमतः वसंतरागे वसंतऋतुमुद्दिश्य गायस्व यतः सामाजिकाः रसिकमनस्काः भूत्वा नाटक दर्शनोन्मुखाः भविष्यंति

नटी — विचित्र पुष्पाभरणा धरित्री । हरीतचीरावसनं दधाना ।
पैकस्वरेणामधुरं लपन्ती । चैतन्यवन्तं कुरुते प्रपञ्चम् ।।

सूत्रधारः — प्रिये सुष्टुगीतं भवत्या । भवदीय वसन्त रागेण न केवलं वसन्तः वसन्तीकृतः किन्तु प्रेक्षकाः अपि वसन्तीकृताः

नटी — अनुग्रहीताऽस्मि । आर्य ! कवि परिचयं श्रोतुमिच्छामि ।

सूत्रधारः — परीक्षिन्नाटकचक्र कर्ता परीक्षित् शर्मा अयं महाकविः । अयं गीर्वाण प्रपञ्चे प्रथितयशाः । किंबहुना ।

**संस्कृतिर्जीवनं यस्य । संस्कृतं श्वसनं सदा ।**
**अभूत्तस्य ध्रुवं जन्म । सार्थक्यं मेदिनीतले ।।**

नटी — आर्य अन्येषां आधुनिकानां कवीनां नाटकानि विहाय,- अस्यकवेः नाटक प्रदर्शने कोविशेषः ।

सूत्रधारः — अयं प्रतिभाशाली । अयं जन्मना कविः । पश्य ।

**द्राक्षागुळुच्छ स्वादिष्टं । हृदयाहलादकं परम् ।**
**अन्तर्बहिश्च तत्सर्वं । कवित्वं रसनिर्भरम् ।।**

नटी — अयं आधुनिक कवि मणिमालायां परं नायकायते । (आकर्ण्य) अयि भोः युवतीनां हसित प्रलापाः श्रूयन्ते कास्ताः ?

सूत्रधारः — (आकर्णनमभिनीय) एताः युवत्यः सीतया सहिताः- कन्दुक क्रीडार्थं इतः एव आगच्छन्त्रि । एहिगच्छावः । (इति निष्क्रान्तौ)

(ततः हसन्त्यः सीता मञ्जुला बकुळा चम्पाः प्रविशन्ति)

वकुळा — सीते त्वं अत्र आग्नेयमूले तिष्ठ । (इति सीतां निर्दिशति सीता गत्वा तथैव तिष्ठति)

चम्पा — सखि वकुळे ! अहं कुत्र तिष्ठेयम् ?

मन्जुला — चम्पे ! त्वं नैऋतिमूले तिष्ठ ।

वकुळा — मञ्जुला कथनानुसारं त्वं नैऋति मूले तिष्ठ ।

(चम्पा गत्वा तथैव तिष्ठति)

मन्जुला — सखि वकुळे ! अहं कुत्र तिष्ठेयम् !

वकुळा — त्वं वायव्यामूलें तिष्ठ ।

(मन्जुला तथाकरोति)

चम्पा — वकुळे ! त्वं ईशान्यामूले तिष्ठ

वकुळा — त्वदीरितं सत्यमेव परिशेषन्यायेन अहं तथैवकरिष्यामि

(इति तथाकरोति)

सीता — सख्यः वयं चतस्रः दिकपालकानां सहधर्मचारिण्यः इव-तिष्ठामः

वकुळा — वयं मर्त्यलोकीयाः तथा न भविष्यामः ।

मन्जुला — सखि ! स्थितस्यगतिः चिन्तनीया ।

वकुळा— हां सत्यमेव । श्रुणुत कन्दुकः ममहस्ते विद्यते । महां, या रोचते तस्यै कन्दुकं अस्यामि । सा कन्दुकं गृहीत्वां तस्यै या रोचते तस्याः सकाशं अस्यति । एवं सर्वैरपि तथैव कर्तयं अव्यवधानेन ।

( इति वकुळा कन्दुकं सीतां प्रति अस्यति )

( कन्दुकं गृहीत्वा मंजुलां प्रति अस्यति )

( तथा सर्वाः खेलनपराः भवन्ति )

( निमेषद्वयानन्तरं यदा कन्दुकं सीतायाः हस्ते भवति तदा )

सीता — सख्यः ! वयं एकैकशः हस्तेन भूमि कन्दुक ताडन खेलनं कुर्मः ।

सर्वाः — (तथैव) सीता हस्तेन भूमिकन्दुकताडनोत्पतन खेलनं कुर्वन्ती आस्ते ।

चम्पा — हञ्जे ! वकुळे ! खेळनपरां सीतां पश्य एषातन्त्री, खेलने सुरसुन्दरीव नवीनशोभां तनोति ।

वकुळा — सत्यमेव खेलनसमये अस्याः हावभाव विलास लास्यादिकं पुरुषायित मग्न नाकविलासिनीव दिदृक्षूणां बुद्धि जनयति ।

मन्जुला — अन्यदाश्चर्यंपश्य ! सीतां परितः पवित्रा काण्यभिरव्या चक्रभमणं करोति ।

वकुळा — एषा अयोनिजाखलु, सर्वत्र चालने हसने, भणने दिव्यत्वमेवाभासते ।

सीता — सख्यः पश्यन्तु भवत्यः अहं कियत्कालं क्रीडासकताऽभवम् इति ।

चम्पा — सीते ! वयमपि तदेव भणामः ।

वकुळा — अस्माभिः यद्दृश्यते यद्अनुभूयते तदेव वयं भणामः ।

मन्जुला — सहजसौन्दर्यमुद्दिश्य यत्किमपि भाणितुं वयं स्वतन्त्राः ।

सीता — भवन्त्यः वक्रोक्तिभिः मां तुदन्ति ।

चम्पा — सीते तुदन्ति इति मावद । स्तुवन्ति इति कथय ।

वकुळा — वयं असत्यं न भणामः । किन्तु सत्यकथने काबाधा ।

मन्जुला — सरसगोष्टीं अन्तरेण नान्या सन्तोषदायिनी भवति ।

सीता — सख्यः इतः पश्यन्तु ।

**एषात्र कन्दुकक्रीडा । चित्तवृत्ति निरोधका ।**
**आह्लादं तनुते स्वान्ते । श्रमयोऽध्वस्त्त तन्द्रिता ॥**

वकुळा — सखि ! सत्यंश्लोकितं भवत्या ।

मन्जुला — वकुळे ! सीता मुग्धापि भावगोपने प्रौढा भाति ।

चम्पा — विलासिनीनां भावगोपनं सहजमण्डनं भवति ।

वकुळा — सख्यः । पश्यन्तु भवत्यः ।

**कन्दुकक्रीडया तन्वीं । प्रविचालित कुण्डलां ।**
**पुरुषायितमग्नाङ्गीं । रासिक्ये प्लाविनीं प्रियाम् ।।**

**सीता** — सख्यः ! अहं परिश्रान्ता अनया कन्दुकक्रीडया । अधुनावयं उपविश्य कन्दुकक्रीडां खेलिष्यामः ।

**सर्वाः** —( तथैव इति उपविश्य कन्दुकक्रांडां खेलन्ति )

**सीता** — ( सकोपं ) कन्दुकं वकुळांप्रति अस्यति ।

**वकुळा** -- सखि ! सीते ! भवती मयि कुथ्यसि । तस्मात् वेगेन कन्दुकं मां ताडयितुमिव अस्यसि ।

**सीता** — वकुळे ! तथा मया नकृतम् ।

( इति हसति )

**वकुळा** -- (कन्दुकुं सीतां अस्यति । सः कन्दुकः गच्छति तत्र विद्यमान धनुष्पेटिकामधोऽधः प्रविशति । )

**सीता** -- वकुळे कन्दुकः पेटिकायाः निकटंगतः । अहं तं कन्दुकमानेतुं गच्छामि ।

( इति गच्छति )

**चम्पा** — सीते धनुष्पेटिकासमीपं त्वं मागच्छ ।

**सीता** -- त्वं मां किमर्थं निवारयसि ।

**चम्पा** -- सीते ! इयं धनुष्पेटिका बहुभारवती । तस्याः स्पर्शनमपि ते नयोग्यम् ।

**सीता** -- सखि ! एतत् शिवधनुः कथं स्पर्शयोग्यं न भवति ।

**वकुळा** -- सीते ! त्वं शिरीषमृद्वङ्गी इदं ते स्प्रष्टुं न योग्यमिति ।

**सीता** -- सखि ! अहार्यनिश्चयाहम्, अवश्यं कन्दुकं आनयेयम् ।
(इति धनुष्पेटिकासमीपं गच्छति शकटं द्वाभ्यां हस्ताभ्यां अपसारयति कन्दुकं आनयति) .

**सर्वाः** -- आहो (इति साश्चर्यं गण्डस्थले हस्तान्ङ्गुलिं निधाय आश्चर्य मुद्रामभिनयन्ति)

वकुळा — सीते त्वं शक्तिस्वरूपिणी ।

( इति तस्याः हस्तौ गृहीत्वा )

गीतम् ( काफी रागे )

सखि सत्यं त्वं भागवती
भवति च नूनं वेदवती
नूनं सुमति तवभर्ता
भविता कोऽयं भणकर्ता ॥ सखि

( इति सीतां विसृजति )

मन्जुला — सखि ! सीते ( इति तस्याः हस्तौ गृहीत्वा )

गीतम् ( सोहिनी )

भवसि च रूपे अबला
नूनं कर्मणि सबला
लोके भवती मातुला
सीते भवसि च प्रिय हला ॥ सखि

( इति सीतां विसृजति )

चम्पा — सीते ( इति तस्याः हस्तौ गृहीत्वा )

गीतम् ( दुर्गा रागे )

कात्वं भण पिकवाणि
श्रावय किंचित् गीर्वाणि
कदा भविता त्वं कल्याणि
माविस्मर किसलय पाणि ॥ सखि

( इति सीतां विसृजति )

( सीतां मध्ये संस्थाप्य सर्वाः सख्यः मण्डलाकारं कुर्वन्ति । आनुनासिक्य स्वरैः बम्भरगुञ्जनैः, शब्दोत्पादनं कुर्वन्त्यः सविलासं, चक्रभमणं कुर्वन्त्यः सन्ति । )

( यवनिका पतति )

* * *

## द्वितीयं दृश्यम्

जनकः, पुरोहितः, शतानन्दः, मन्त्री च स्वीय आसनेषु अलङ्कृताः सन्ति ।

जनकः — मन्त्रिन् एतत् मम महत् आश्चर्यं भवति, यत् मे कन्या सीता अत्यंत भारभूतं शिवधनुश्शकटं अचालयत् इति ।

शतानन्दः — साबाला लौकिका नहि । केवलं दैवांश संभूता इति मन्ये ।

जनकः — सत्यं इयं मे नन्दिनी अयोनिजा । सर्वशक्ति संपन्ना । तस्मात् पुरुषश्रेष्ठः वरः द्रष्टव्यः अस्ति ।

मन्त्री — युक्तमेव राज्ञां गान्धर्वविधिना विवाहः ।

शतानन्दः — राजन् ! स्वयंवर विवाहः योग्यः ।

जनकः — वयमपि तमेव भावयामः ।

मन्त्री — तर्हि स्वयंवरार्थं प्रकटी कुर्वन्तु ।

जनकः — तमेवकर्तुं व्यवसितावयम् ।

मन्त्री — स्वयंवरे पणनं किं विद्यते ।

जनकः — पणनं शिवधनुः अस्ति । श्रुण्वन्तु ।

**यःकरोति धनुर्भङ्गम् । उद्यम्यैतन्महाबलः ।**
**तं वृणीते सती सीता । पुरुषं दैव सन्निभम् ॥**

मन्त्री — अस्मिन् कर्मणि निरताः वहवः राजानः सन्ति । ते सर्वेऽपि स्वयंवरार्थं समागमिष्यन्ति ।

जनकः — शैवं धनुः न सर्वोऽपी भङ्क्ष्यति ।

शतानन्दः — यःकोपि दैवांश संभूतः शक्तः भविष्यति ।

जनकः — मे जानकी अयोनिजा दैवांश संभूता तस्मात् स्वयंवरार्थं पणनरूपेण राजानः समाहूयन्ते ।

मन्त्री — शुभस्य शीघ्रं अहं श्वः घोषणार्थं घोषकान् प्रेषयिष्यं ग्रामं ग्रामं नगरं नगरम् ।

शतानन्दः — आर्य ! आलस्यं अमृतं विषं । तस्मात् अद्यैव घोषकान् घोषणार्थं प्रेषयतु भवान् ।

मन्त्री — भवद्भिः यत् निगदितं तत् योग्यम् इति मन्ये । अहं अद्यैव कारयेयम् ।

जनकः — कः कोऽत्रभोः ।

प्रतीहारी — ( प्रविश्य ) अयमस्मिभोः ।

जनकः — अरे लेखनतज्ञं प्रवेशय ।

प्रतीहारी — यथाज्ञापयति देवः ।

( इति नमस्कृत्य गच्छति )

लेखकः — ( प्रविश्य ) नमांसि महाराज ।

( इति नमस्करोति )

जनकः — अयि लेखक ! सीतास्वयंवरार्थं त्वं घोषणापत्रमेकं संसिद्धंकुरू ।

लेखकः — महाराज ! केकेविषयाः उल्लेंखनीयाः सन्ति आज्ञापयन्तु भवन्तः ।

जनकः — महामात्य ! भवान् सविस्तरं कथयतु ।

मन्त्री — भोः लेखक ! श्रुणोतु भवान् । यः शिवधनुर्भङ्गम् करिष्यति तस्मै जनक महाराजस्य दुहिता सीता जीवनसहभागिनी रूपेण प्रदीयते इति घोषणापत्रं विलिख्य तत्घोषयितुं नगरं नगरं ग्रामं ग्रामं घोषकान् प्रेषयतु ।

लेखकः — अवहितोऽस्मि ( इति नमस्कृत्य गच्छति )

जनकः — महामात्य स्वयंवरार्थं सर्वसन्नाहं करोतु भवान् ।

शतानन्दः — महाराज ! विवाहसमये चतुर्वेद पारगान् ब्राह्मणान् दशग्रन्थि ब्राह्मणान् आशीर्वचनार्थं संभावनार्थं निमन्त्रणादिकं प्रेषयेयं ।

जनकः — भवद्भिः यत् कर्तव्यं तत् सर्वं कुर्वन्तुभवन्तः ।

( नेपथ्ये घंटारावः )

मन्त्री — महाराज ! घण्टारावः श्रूयते ।

जनकः — कः कोऽत्रभोः ।

प्रतीहारी — ( प्रविश्य ) अहमस्मि भोः ।

जनकः — मार्गदर्शी भव । इति उत्तष्ठति । (सर्वेऽपि उत्तिष्ठन्ति)

प्रतीहारी — यथाज्ञापयतिदेवः । इतः इतो देवः ।

( सर्वे तमनुसरन्ति )

( यवनिका पतति )



# तृतीयं दृश्यम्

( कल्याणिरागे शहनाई भवति )

। मञ्जुला वकुळा चम्पाः प्रविशन्ति ।

**मन्जुला** — वकुळे सीता स्वयंवरार्थं अस्माभिः स्वयं सर्वसन्नाहाः करणीयाः सन्ति ।

**वकुळा** — हां जानाम्यहं। सर्वं सुगन्धिलकुसुमनिचयं विलूय आनीतास्मि ।

**मन्जुला** — चम्पे ! त्वं कर्पूरमिश्रितचन्दनं संसिद्धं कुरु । अहं गंधिलजलं झरींपात्रेषु प्रपूर्यं हरिद्राकुङ्कुम चूर्णादिकं, नागवल्लीदळयुक्त मुक्ताचूर्णं क्रमुकादिकं विविधपात्रेषु निक्षिपेयम् । अहं धूपादिकेन सर्वमपि कल्याणमण्डपं गन्धायितंकुर्याम् । ( इति सर्वसन्नाहं कुर्वन्ती आस्ते । )

( ततः प्रविशति सीता )

**मन्जुला** — सीते एहि । त्रिपादिका पीठोऽपरि उपविशतु तत्रभवती ।

**सीता** — ( लज्जया उपविशति )

**मन्जुला** — सीते वयं त्वां स्वयंवरार्थं अलङ्कर्तुं उद्युक्ताः । तत्रभवती प्रशान्तभावेन अत्र उपविश ।

**सीता** — सख्यः ! मम स्वयंवरे तत्रभवत्यः दिवारात्रं कृतश्रमाः भवन्ति ।

**चम्पा** — सीते । अस्मद्भ्यः एतत् मण्डनादिकं पुनः भवत्याः कदा-भविष्यति ।

**सीता** — स्वयंवरानन्तरं अस्माकं मेलनं न भवति किम् ?

**मन्जुला** — कथं भविष्यति । अनुरूपेण वरेण ते मेलनं भवति । तदा वयं काः ।

**सीता** — युष्मान् अहं कथं विस्मरिष्यामि ।

**चम्पा** — मञ्जुले ! सर्वालङ्करणभूषितां सीतां द्रष्टुं वः नेत्राणि अपर्याप्तानि भवन्ति ।

**वकुळा** — एतैः नेत्रैः सीताभिन्नं द्रष्टुं वयमशक्नुमः ।

**सीता** — यूयं मामुद्दिश्य अतिशयोक्ति कुर्वन्ति ।

**चम्पा** — स्वीय सौन्दर्यमाधुर्यं स्वयं नकोपि जानाति ।

**वकुळा** — परैं केवलं जानन्ति वस्तुसौन्दर्यं, नकदापि वस्तु ।

**मन्जुला** — ( आदर्शमानीय सीतायै ददाति ) सीता आदर्शे सौन्दर्यं चित्रीकरोति ।

**चम्पा** — मञ्जुले ! सीता आत्मनः बिम्बं आदर्शे कथं पश्यतिवा निरीक्षस्व ।

**मन्जुला** — एषा स्व प्रतिबिम्बं आदर्शे विलोक्य तन्मयतां प्राप्नोति । सत्यं एषा मूर्तीकृत त्रिलोक सौन्दर्यमिव प्रतिभाति :

( ततः प्रविशति वेत्रवती )

**वेत्रवती** — अयि सख्यः ! यदि सीता अवसितमण्डना भवति तर्हि स्वयंवर मण्डपमानीतव्या इति जनकमहाराजस्यादेशः । ( इति नमति)

**सीता** — हञ्जे ! सीता अवसितमण्डना अस्ति । अधुनैवागच्छति इति राज्ञे निवेदय ।

**वेत्रवती** — यथाज्ञापयति देवी ।

( इति गच्छति )

**मन्जुला** — सखि सीते !

**श्रुत्वा त्वां भुवि वीरमण्डलमहो**

**सौन्दर्यराशिः प्रिया ।**

वकुळा -- अपिच

सीता नान्यतुला बिभाति धरणीसौन्दर्यमूर्तीकृता ।

चम्पा — तस्मात् ।

इत्येवं सुविचार्य वारणरथाश्वैश्चारुशोभायुतम् ।।

सर्वाः —प्राप्नोत्येव वरीतुमत्र महिते सीते नुते भुसुते ।

सीता — ( लज्जया हस्ते विद्यमानपुष्पमालया सर्वाः ताडयन्ती विनीर्गता । )

( सर्वाः अपि हसन्त्यः सीतामनुसरन्ति )

( यवनिका पतति )

* * *

## चतुर्थं दृश्यम्

राजा जनकः शतानन्देन सार्धं धनुर्भङ्ग दर्शनाय उपविष्टः अस्ति, तत्रपार्श्वे धनुष्पेटिका वर्तते । अङ्गदेशीयोराजा, वङ्गदेशीयोराजा, काश्मीराधिपतिश्च, उपविष्टाः सन्ति ।।

( वाचकः क्रमशः एकैकं राजानं नाम्ना आह्वयति ते सर्वे आगत्य धनुर्भङ्ग- कर्तुं असफलाः भूत्वा निर्गच्छन्ति । )

वाचकः — अङ्गदेशीयाः सकलारि संमर्दनाः सिंहबलाः अनलोवाम राजानः आगच्छन्ति ।

(राजा उत्थाय बाहू प्रसार्य भुजास्फालनंकृत्वा धनुः उन्नमितुं प्रयतते अन्ततः अधःपतति, लज्जितः निर्गच्छति )

वाचकः -- वङ्गदेशीयाः अष्टैश्वर्यभूषिताः धनुर्विद्यापारंगताः आदित्य महाराजाः ।

( उत्थाय बाहूप्रसार्य पादौप्रसार्य श्मश्रु संमार्ज्य वामहस्तेन उन्नमितुं प्रयतते, द्वाभ्यां हस्ताभ्यां उद्धर्तुं असमर्थः भूत्वा निर्गतः )

वाचकः -- गजरथतुरग चमूनाथाः काश्मीराधिपाः समरनाथाः । (सगर्वमागत्य धनुः उद्धरति । धनुर्भारेण कम्पितः धनुस्त्यक्त्वा निर्गच्छति)

जनकः -- ( चिन्ताक्रान्तः ) शतानन्द किमिदमाश्चर्यं एकोऽपि वीरः धनुरुद्यमितुं समर्थो न जातः ।

शतानन्दः -- तथा माकथयन्तु । वीरमण्डलं एतावत्पर्यन्तं अत्र नागतमिति मे प्रतिभाति ।

जनकः -- तथा यदिस्यात् सीता अविवाहिता भविता किम् ?

शतानन्दः -- तथा नभवति ।

जनकः -- अस्मिन् विषये विचारः कर्तव्यः एव । धनुरिदं अपसारितं सीतया । लोके सीतापेक्ष्या पुरुषेषु अबलाः संति किम् ?

शतानन्दः -- महाराज । सीता अयोनिजा दैवांश संभूता । अस्मिन् कर्मणि अवश्यं दैवांश संभूताः भविष्यन्ति :

जनकः -- एतावत्पर्यन्तं नकोपि दैवांश संभूतो समागतः ।

शतानन्दः -- राजन् ।

**सृष्ट्यां सर्वं यथायोग्यं । संबद्धं भाति सर्वदा ।**
**तत्रास्ति योजको देवः । मास्तु चिन्ता कदापि भोः ॥**

जनकः — शतानन्द ! सृष्टिकर्ता देवः । किंतु योजकः अन्यः भवति येनकेनापि निमित्तेन ।

शतानन्दः — साधूक्तं भवभ्दिः । अवश्यं तत्र भविता संयोजकः ।

जनकः — लोके सर्वदा योजकः दुर्लभः भवति ।

शतानन्दः — राजन् न विचारः कर्तव्यः । योजकः भविष्यति सर्वं यथोचितं मङ्गलान्तं भविष्यति ।

जनकः — अधुना माध्यान्हिकाअनुष्ठानं निर्वर्त्य पुनः सायं स्वयंवरार्थं सभां उद्घाटयिष्यामः ।

शतानन्दः — तथैव राजन् ! किंतु मेमनसि एतादृशी भावना विद्युतायते ।

जनकः — कीदृशी ते भावना ।

**शतान्नदः–सायंकाले शान्तवातानुकूले । सन्ध्यारागे दिव्यगोधूलिरम्ये ।**
**नूनंभव्यं तद्धनुर्भंङगमेतत् । भाव्यं राजन् श्रूयतांवच्मिसत्यम् ।**

जनकः — तत्रभवन्तः शतानन्दाः भवतांवचनं सत्यं भविता नकोण्यत्रसंदेहः ।

शतानन्दः — राजन् गच्छावः एहि ।

( इति निष्क्रान्तौ )

( यवनिका पतति )

□ □ □ □

## पंचमं दृश्यम्

( ततः प्रविशति जनकः शतानन्देनसमं,
जनकः सिंहासने उपविशति शतानन्दः विद्यमानपीठे उपविशति )

जनकः — शतानन्द ! भवतां ज्योतिष्यानुसारं सन्ध्यासमये सर्वं भविता ।

शतानन्दः — भविष्यतीति मे भावना । यतः

**भविष्यमाणं जगति प्रजानां । छायानुरुपेण सदा चकास्ति ।**
**तपस्विनां तत्रभवत्यजस्रं । सचित्ररुपं बहुधासमक्षम् ।**

( ततः प्रविशति दौवारिकः )

दौवारिकः — महाराज कुशिकनन्दनः बालाभ्यां सहितः युष्मान् द्रष्टुं द्वारि तिष्ठति ।

जनकः — क्षिप्रं प्रवेशय ।

दौवारिकः — यथाऽज्ञापयति देवः । ( इति गच्छति )

शतानन्दः — अयं तपोधनः बालाभ्यां समागतः । कौतौ बालौ ?

जनकः — पश्यामः ।

( ततः प्रविशति रामलक्ष्मणाभ्यां कुशिकनन्दनः । )

कुशिकनन्दनः — महाराज ! परिपूर्ण मनोरथो भवतु भवान् ।

जनकः — ( उत्थाय ) नमांसि भूयांसि कुशिकनन्दनाय । अत्रोऽपविशन्तु भवन्तः सशिष्याः ।

( इति पार्श्वस्थ आसनानि दर्शयति )

कुशिनन्दनः — ( सशिष्यः तत्र यथानिर्दिष्ठं उपविशति )

जनकः — कुशिकनन्दन ! कथं भवान् अत्राऽगतोऽस्ति ।

**महान्तः सततं लोके । नैव यान्ति निकेतनं ।**
**परेषां यदि यास्यन्ति । तत्रस्यात्कारणं ध्रुवम् ।**

कुशिकनन्दनः — ( विहस्य ) निर्वर्तितसत्रः क्षिप्रं अत्राऽगच्छामि ।

शतानन्दः — कौतौ तापसकुमारौ ।

कुशिकनन्दनः — एतौ तापसकुमारौ नहि ।

जनकः — कावेतौ ।

कुशिकनन्दनः — इमौ दशरथ तनयौ ।

जनकः -- एतौ राजपुत्रौ ?

**वर्चिष्मन्तौ प्रियावेतौ । काषायाम्बरधारिणौ ।**
**राजपुत्रौ विराजेते । पावकाऽवृत सामिधौ ।**

शतानन्दः — एतौ भवतासार्थं कथं ?

कुशिकनन्दनः --

**एतौच बालौ बहुवीर्यवन्तौ । सुबाहुमारीच निशाचरादीन् ।**
**निहत्य पूतं मम यज्ञकार्यं । ररक्षतुर्दानव घोरसङ्कटात् ।।**

अहं अनयोः साहाय्येन अवसित सत्रोऽस्मि ।

जनकः — किं नाम धारिणौ ?

कुशिकनन्दनः — अयं नील मेघशामः रामः । अयं लक्ष्मणः ( इति द्वावपि पर्शयति )

शतानन्दः -- ( विकसितवदनः) साधु महामुने साधु । कुमारयो नामश्रवणानन्तरं तयोः शौर्यंश्रवणानन्तरं जनकमहाराजस्य भावनाः सर्वाः पल्लविताः भवन्ति ।

जनकः -- कथं तत्र भवन्तः अत्राऽगतवन्तः ।

कुशिकनन्दनः -- ( विहस्य ) अवसित सत्रेमयि कापि घोषणा मे कर्णपथं प्राप्ता । तदर्थं शिष्याभ्यां अत्र समागतोऽस्मि । तां घोषणांप्रति सविस्तरं कथयन्तु भवन्तः ।

जनकः —(सहर्षं) पूज्यातिथयः किंचित्कालं विश्रान्तिसुखमनु भवन्तु ।

कुशिकनन्दनः -- तपस्विनां विश्रान्तिःकुतः ।

जनकः -- तथायदि श्रृण्वन्तु घोषणां । देवरात इति ख्यातः महीपतिः आसीत् । अयं न्यासः तस्य ।

कौशिकः — ततस्ततः ।

जनकः -- दक्षयज्ञवधे क्रुद्धं रूद्रं देवाः प्रसारयन् । रुद्रः प्रीतः अभूत् । तदातस्य धनुःन्यासं आसीत् अस्मदीय पूर्वजानांगृहे।

कुशिकनन्दनः -- ततस्ततः ।

जनकः — इयंकथा धनुषः ।

कुशिकनन्दनः — एषाकन्या कदासंभूता ।

जनकः — एषाकन्या अयोनिजा ।

कुशिकनन्दनः — आश्चर्यं । निवेदयन्तु सविस्तरम् ।

जनकः — क्षेत्रं कृषतः मे इयं कन्या लब्धा । तस्मात् सीता नाम्न बभूव ।

कुशिकनन्दनः -- ततस्ततः ।

जनकः -- इयं वीर्यपराक्रमशुल्का ।

कुशिकनन्दनः — ततस्ततः ।

जनक -- अस्मिन् विषये धनुर्ग्रहणमपि दुष्करं जातं वीर्यवताम् ।

**दर्शयिष्यामि रम्यंतत् । धनुर्भीमं महामुने ।**
**कुर्याद्यदि धनुर्भङ्गं । तस्मै सीता प्रदीयते ।।**

( इति उत्थाय धनुःदर्शयति, विश्वमित्ररामलक्ष्मणाः पश्यन्ति )

जनकः — श्वः धनुर्भंङ्गार्थं बहवः राजानः समागमिष्यन्ति । तत्र महासभा भविष्यति । यूयं अतीव श्रान्ताः विश्रान्तिसुखमनुभवत ।

कुशिकनन्दनः — वयं अतीव प्रहृष्टास्म ।

( उत्थाय नमस्कुर्वन्ति गच्छन्तिच )

( जनकशतानन्दौ उत्थायगच्छतः )

( यवनिका पतति )

* * *

## षष्ठं दृश्यम्

( वेदिकामध्ये जनक शतानन्द पुरोहिताःऽउपविशन्ति । एकत्र पार्श्वे सीता तस्या सख्यः पुष्पाक्षतसहित पुष्पहारनीराजनपात्रैः उपविष्ठाः सन्ति । अन्यत्र पार्श्वे विश्वामित्ररामलक्ष्मणाः उपविष्ठाः । जनकस्य पुरस्तात् किंचित् दूरे धनुष्पेटिका स्थापिता विद्यते । वाचकः रङ्गस्थलस्य एकस्यां दिशायां स्थित्वा नामानिवाचयति )

वाचकः -- आन्ध्रदेशात् चतुरङ्ग बलसम्राट् चन्द्रचूडमहाराजाः ।

( महाराज शनैः धनुरुन्नमितुं अशक्तः भूमौ पतति, उत्थाय गच्छति )
महाराष्टदेशीयः दुर्गाधिपः रमाकान्तमहाराजाः । ( आगत्य धनुरुद्यम्य अशक्तः भूमौपतति, उत्थाय गच्छति )

राजस्थानीयाः महाराजाः संग्रामकेसराः । ( उत्थाय धनुरुद्यम्य भूमौपतति)

जनकः -- ( चिन्ताकुलः ) बत नकोऽपिशक्तः धनुरुन्निमितुं ।

शतानन्दनः -- इदं महदाश्चर्यं विद्यते ।

जनकः -- अबला सीता धनुष्पेटिकां अचालयत् नकेवलं धनुः । सीतापेक्ष्या लोकै दुर्बलाः पुरुषेषु विद्यन्ते इति ज्ञात मधुना ।

**मन्ये तस्मात् वीरहीनं । भारतं भाति सर्वथा ।**
**यतोऽत्र वीरपुत्रस्य । नाविर्भावः कृतः प्रियः ॥**

कुशिनन्दनः -- ( रामलक्ष्मणौ पश्यति )

लक्ष्मणः -- ( उत्थाय ) अयि महाराज रघुवंशे जीवति सति तथा-कथनं योग्यं न भवति ।

रामः — ( उत्थाय ) सोदर लक्ष्मण उपविश शान्तिं भज ।

लक्ष्मणः — महाराज !

**विशाले रघुवंशेऽस्मिन् । भ्राजति प्रियभारते ।**
**वीरहीनं कथं भाति । भारतं वद भूपते ॥**

कुशिकनन्दनः — कुमार रामचन्द्र ।

रामः — ( उत्तिष्ठति )

वाचकः — अयोध्याधिपतेः दशरथस्य पुत्रः श्रीरामचन्द्रः ।

रामः -- ( कुशिकनन्दनं नमस्करोति । )

कुशिकनन्दनः — कल्याणमस्तु ।

रामः — (धनुस्सकाशंगत्वा प्रदक्षिणीकृत्य धनुःनमस्करोति)

जनकः — ( शतानन्देन सार्थं ) इयं विनयान्वितानां तेजस्विनां परम्परागतप्रवृत्तिः । एतादृशी पद्धतिः नावलोकिता इतःपूर्वमस्माभिः

रामः— ( वामहस्तेन धनुरुद्यम्य दक्षिणहस्तेन ज्यावल्लीं आकर्णान्तं आकृष्य धनुर्भङ्गं करोति )

( सर्वे सहर्षं करतलध्वनिं कुर्वन्ति पुष्पवृष्टिः पतति )

जनकः — ( सहर्षं उत्थाय ) अयिभोः विश्वामित्र महर्षे वयं भवता उपकृतास्मः । मे कन्यायाः अनुरूपोऽयंवरः । साक्षात् अयं विष्णोः अवतारः । इयं लक्ष्मीसमाना श्रीरामचन्द्रस्य सहधर्मचारिणी भविष्यति ।

कुशिकनन्दनः — जनक महाराज! अयं दैव निर्णीतः विवाहः । यतः ।

तेजस्येवहि संजातं । मेलनं तेजसा भुवि ।
प्रदानादान कार्येषु । भ्राजते पात्रता भृशम् ।

जनकः — वयं प्रसन्नात्मानः एवं आशास्महे ।

दरहसितविलासैर्जानकी क्ष्मातनूजा ।
करतलगतरम्यां रागकल्हारमालां ।
विसृजतु रतिभावा रामभद्रस्यकण्ठे ।
विलसतु भुविनित्यं चन्द्रिका चन्द्रसाम्या ॥

सीता — ( त्रपया रामभद्रस्यकण्ठे पुष्पमालां निक्षिपति )

( सर्वे विविधपुष्पाणि अक्षतान्श्च विकिरन्ति )

( भैरवी रागे मङ्गलवाद्यानि श्रूयन्ते )

( यवनिका पतति )

* * *

## ॥ भीष्म-प्रतिज्ञा ॥

ब्रह्मज्ञान नितान्त चिन्तनरतं स्तौमीह विद्यामलं।
ध्यानात्त प्रणवादि वेदपठने स्वान्तं परं तोषितम्।
संध्यावन्दन वीतिहोत्रसवन प्राप्ताधिकश्रीयुतं।
नित्यं सत्क्रमवर्तनावळिरतं श्रीब्रह्मचर्याश्रमम्॥

नान्द्यन्ते

**सूत्रधार** — हञ्जे! हञ्जे! त्वरस्व त्वरस्व (अनागच्छतीं विलोक्य) बत विलम्बनं भवति। लोके विद्यमान जनश्रुतिः तथ्या भवति।

स्त्रियोहि नाम लोकेस्मिन्। प्रसिद्धाः मन्द वर्तने।
स्वयं ता नविजानन्ति। ज्ञातुं नेच्छन्ति जीवने॥

**नटी** — (प्रविश्य) किं भवान् स्त्रीलोकं टीकां करोति। स्त्रीलोकमुद्दिश्य टीकां कर्तुं ते अधिकारः नास्ति। ताः शक्ति स्वरूपिण्यः। सर्वं कर्तुं समर्थाः। पुरुषेभ्यः ते न्यूनाः न भवन्ति। (इति सक्रोधं वदति)

**सूत्रधारः** — अहो न भणामि। शान्ता भवतु भवती। अहं किं कथयामि तत् श्रृणु।

**नटी** — हां श्रावय।

**सूत्रधारः** — हञ्जे! अद्य भीष्म-प्रतिज्ञा नाम नाटकं प्रयोक्तुं उद्युक्तास्मः।

**नटी** — भोः! भवान् कालपरिवर्तनां विलोक्यापि सर्वदा प्राचीन नाटकानि प्रदर्शयति, न मे रोचते तत्।

**सूत्रधारः** — सर्वकर्मणः मूलकारणं भवति।

**नटी** — किमत्र कारणं विद्यते इति मे प्रश्नः।

**सूत्रधारः** — आधुनिक नाटकानि तत्कालीन विषयेण सहितानि कतिपय दिवसेषु रङ्गमञ्चेषु प्रदर्शयन्ते नटनासक्त सामाजिकैः। किन्तु तानि नाटकानि कदापि शाश्वतत्वं न भजन्ते। तानि सर्वाणि मघानक्षत्रे जनित्वा पूर्वायां म्रियन्ते। प्राचीन नाटकानि सत्यधर्मं प्रतिष्ठितानि सर्वदा रसेन नवनवोन्मेषतां भजन्ते। तस्मात् कारणात् प्राचीन नाटकानि प्रदर्शयितुं समुत्सुकोऽस्मि।

**प्राचीनं सुस्थिरं लोके। नवीनं चञ्चलं सदा।**
**तत्वान्वेषण लोकस्य। प्राचीनं शाश्वतं भवेत्॥**

**नटी** — केचन प्राचीन भावुकान् विमर्शयन्ति निन्दन्ति च।

**सूत्रधारः** — भवतु नाम, भिन्न रुचिर्हि लोकः। मह्यं यत् रोचते, योग्यं भासते तदहं करिष्यामि।

**निन्दन्तु मां प्रजा नित्यं। प्राचीने लग्नमानसं।**
**प्राचीनं दर्शयाम्यत्र। प्राचीने रचयामि च॥**

**नटी** — भवान् नव समाजे वर्तमानोऽपि, प्राचीन साम्प्रदायवादी भवति।

**सूत्रधारः** — अहं प्राचीनवादी। लोके सामाजिकानां यत् नवीनं नवीनमिव भासते, तत् सर्वं मम प्राचीनमिव भासते यतः।

**बालानां प्रकृतिस्सर्वा। नवीना भासते प्रिया।**
**प्राचीना सा विभात्येव। तत्वज्ञानां विशेषतः॥**

**नटी** — सम्यक् समर्थनेन प्रतियादितः भवदीय आशयः। कोऽयं कविः।

**सूत्रधारः** — गीर्वाणान्ध्र भाषाप्रवीणः महाकविः संस्कृत भाषा प्रचारकः पण्डित् परीक्षित् शर्मा।

**नटी** — किमयं गीर्वाणसाहित्ये प्रथितयशाः।

**सूत्रधारः** — सत्यमेवायं प्रथितयशाः। अयं ललित गीतालहरीं यशोधरा महाकाव्यं (विंशति सर्गात्मकं) अक्षय गीत रामायणं (सप्तपदी) इत्यादिकं श्रव्य काव्यचयं अपिच सप्तविंशति नाटकात्मकं परीक्षिन्नाटकचक्रं नाम दृश्य काव्यं च विलिख्य विंशतितम शताब्दे गीर्वाणवाणीं अवाकिरत् भूमण्डले।

**नटी** — अहं पर्युत्सुका भवामि पात्रग्रहणे।

**सूत्रधारः** — (आकर्ण्य) स्यन्दनस्य स्निग्ध गम्भीर निर्घोषः श्रूयते। (इतस्ततः पश्यन्) सत्यमेव राजा शन्तनुः यमुनातीरे विहर्तुं समायाति सारथिद्वितीयः। एहि गच्छावः। (इति निष्क्रान्तौ)

(रथादवतीर्य, ततः प्रविशति शन्तनुः)

(यमुना नद्याः तीरे विचरन् शन्तनुः पुलकितगात्रः एवं मनुते)

**शन्तनुः** — (दृष्ट्वा) इयं यमुना। अस्याः जलं कामिनी लोचन कज्जलमिव श्यामलं भवति। अयं भगवतः श्रीकृष्णस्य रहः केळीनां अनुकूलः प्रदेशः अभवत्। राधा-माधवयोः रस स्यन्दिनीभिः केलीकथाभिः इयं परिपूर्णा। अस्याः नद्याः तीरे सर्वोऽपि जन्तुः शृङ्गार रसेन परिप्लावितान्तरङ्गः भवति। इयं नदी प्रेमवाहिनी। सर्वेषां पापक्षाळनेन इयं श्यामलतां प्राप्तवती। अत्र सर्वत्र भूरुहाः वल्लर्यश्च पुष्पभारै रवनताः। ताः पुष्पवत्यः संजाताः इति मत्वा त्रपाभरेण नितान्त नामिताः भवन्ति।

अहो एतेषां पुष्पाणां गन्धः प्राक्तन संस्कारदीन् उद्बोधयन् परिमलेन नासापुटं परम सुखदं करोति। चेतः अमन्दानन्द संभरितं वर्तते। अत्र कलकण्ठमदकीर कलकलध्वनय श्रुतिपुटं सुखावहं कुर्वन्ति। अयं मन्दसमीरः विचित्र गतिभिः भावनापूर्णं चेतः शरीरंच पुलकितं करोति। चित्रमेतत् हरिणाः विश्रम्भयुताः व्यवहरन्ति। इदं स्थानं आनन्दानां आयतनं भवति।

**अचेतनं यदुद्भूतं। भ्राजते रसनिस्तुलं।**
**चैतन्य विषये वक्तुं। नैव शब्दा भवन्ति मे॥**

(अन्यत्र दृष्ट्वा) इतः आलिकुलसंकुलाकलित सरोजकुडमलानां पङ्क्तयः सरस्सु विराजन्ते। इयं भूमिः शरच्चन्द्र चन्द्रिकासु पर्वतायित सिकतेषु सर्वदा स्वच्छन्दाच्छ समीरणमालिकाभिः समलंकृतः पवित्रतायाः स्थानं भवति। भवतु अहं अस्यां नद्यां पाणिपादं प्रक्षाळय पानीयं पिबेयम्। (इति नमति)

(सत्यवती यानपत्रे उपविश्य गायन्ती आस्ते)

गीतम् (पीलु रागे)

मदन नव मदन ।। ध्रु. ।।

नवयौवन हृदयविमोहन । यौवत हृदय प्रशासन ।
सततं सरस विचालन । सुन्दर दर्शन मन्जुल भावन ।। १

मधुरं मधुरं ते हसनं । मधुरं मधुरं ते भणनं ।
मधुरं विरहे तपनं । मधुरं ते संस्मरणम् ।। २

तव भावन जनित सुखोऽयं । जनयति शतवर्षसुखं ।
कोऽपि न पश्यति तव वदनं । यौवतहृदय बहुतुदनम् ।। ३

**शन्तनु** — (आकर्ण्य, पानीयं पीत्वा) कुतोऽत्र गीत समुत्पत्तिः (समन्ततः विलोक्य) अहो अत्रायं परिसरः मधुरः गन्धावृतः चेतः उन्मादयति। अयं पुष्पवत्याः लतायाः गन्धः भवति। अयं गन्धः अयं गानविशेषः नाशा पुढं श्रवणेन्द्रियं च उन्मादीकृत्य मनः सन्तोष पारवश्यतां प्रापयति। भवतु गत्वा पश्यामि। (इति कतिचित् पदानि गत्वा, आत्मगतम्) अहो कैषा सौन्दर्यमयमूर्तिः। एषा मम एवं भासते।

किमेषा गलिता नाकात्। रम्भा काञ्ची गुणाकृता।
उतस्रस्ता जलेजानां। मन्दाकिन्याश्च मालिका।।

अस्याः दर्शनानुपदमेव लैङ्गिकसुखः मां प्रेरयति तया भाषितुं। (इति कतिचित् पदानिगत्वा) यानपात्रे आसीना एषा मम एवं प्रतिभाति।

जलेऽस्मिन् यान पात्रे सा। तन्वीनीलोत्पलाक्षिणी।
उपविष्टाऽस्ति तूणीरे। मारबाण इव स्वयम्।।

एषा मां स्वीय सौन्दर्येण शनैः शनैः निकटं समाकर्षति। भवतु पृच्छामि तां किञ्चित्। (समीपं गत्वा) तरुणि! काऽसि? किमर्थं एकाकिनी अत्रोऽपविष्ठाऽसि।

**सत्यवती** — (ससंभ्रमं उत्थाय) कोऽसि त्वं एकान्त वासिनीं युवतीं विलोक्य पृच्छसि!

**शन्तनुः** — युवती ! अहं राजा। मम नाम शन्तनुः।

**सत्यवती** — ( उत्थाय ) भवान् राजा इति मया श्रुतं। नमांसि महाराज।

**शन्तनुः** — किं त्वया अधुना गीतम् ?

**सत्यवती** — हां अधुना मया गीतम्। गानं सम्यक् न जानाम्यहम्।

**शन्तनुः** — त्वं गानं सम्यक् जानासि। ते गानं अतीव सुन्दरं अस्ति। तव गीतेन समाकृष्टोऽहं अत्रागच्छम्।

**सत्यवती** — ( लज्जिता ) गानं सर्वं प्राणिभ्यः अत्यन्तं रोचते।

**शन्तनुः** — गानं सर्व प्राणिभ्यः न रोचकं भवति, किन्तु अल्पसंख्याकेभ्यः रोचकं भवति।

**सत्यवती** — सत्यमेव। किन्तु गानं देवदत्तं भवति।

**शन्तनुः** — भवत्या सम्यगुक्तं। त्वं एकाकिनी अत्र किमर्थं उपविष्टाऽसि।

**सत्यवती** — अयं मे तात विनियोगः।

**शन्तनुः** — तव पितुः नाम किम् ?

**सत्यवती** — मम पितुः नाम दाशराजः।

**शन्तनुः** — त्वया अत्र किं क्रियते ?

**सत्यवती** — याताऽयात जनसौकर्यार्थं धर्मेण तरीं चालयामि। अयं मम पितुः आदेशः।

**शन्तनुः** — तव पिता त्वां अस्मिन् कर्मणि नियोजितः।

**सत्यवती** — हां मां अस्मिन् कर्मणि नियोजितवान् मे पिता।

**शन्तनुः** — शिरीषमृद्वङ्गी भवती क्व तरीतारणं क्व। शृणु तन्वि।

**मुग्धे सरस तन्वङ्गि। जले लसित पद्मिनि।**
**व्याकिरन्त्यसि गन्धंते। भावनारूप शालिनि॥**

युवति। ते यौवन मादकता ते रूप लावण्यं तव विलासादिकं ते शरीर धर्म गन्धानिलश्च मां बहुधा उन्मादयन्ति। अहं त्वां चकमे त्वं मे भार्या भवितुमर्हसि।

**सत्यवती** — महाराज मे पिता दाशकुलानां राजा। तस्य आज्ञयाविना अत्र पत्रचालनमपि न भवति। तस्या आज्ञा अस्माकं सर्वेषां शिरोधार्या भवति।

**शन्तनुः** — सुन्दरि ! अहमस्य लोकस्य राजा। अहं किं ब्रवीमि तत् त्वं शृणु। इदं कर्म तवानुचितं। त्वं त्वदीय रूपलावण्यादिभिः राज्ञी भविता। शृणु मद्वाक्यं, त्वं मे जीवन सहभागिनी भव। स्वर्गसुखमनुभव।

**सत्यवती** — राज ! नाहमस्मिन् विषये वक्तुं शक्ताऽस्मि। (इति लज्जां अभिनयति)

**शन्तनुः** — अहो त्वं लज्जावती जाता। त्वं परमरमणीया भाससे लज्जायां।

**लज्जा भूषित तन्वङ्गी। भ्राजते हृदयङ्गमा।**
**कुडमलैः पल्लवैर्युक्ता। पुष्पवल्लीव मञ्जुला ॥**

अहं तव सौन्दर्येण स्वात्मानं विस्मृत्य तव नामापि प्रष्टुं विस्मृतः। अधुना त्वं कथय ते नाम किम्।

**सत्यवती** — मम नाम सत्यवती।

**शन्तनुः** — अहो परम रमणीयं भवति सर्वं।

**त्वयाऽकृष्ट मनोभावः। शरीरेणास्मि साम्प्रतम्।**
**भ्रान्तिर्भवति तन्वङ्गि। पाणिग्रहणमस्तुनौ।**

त्वदीयं सर्वमपि मे सुन्दरं भवति तत् मे चित्तं च तुदति। ते पिता कुत्र वसति।

**सत्यवती** — अत्रैव अस्याः नद्याः तटे पक्कणे वसति।

**शन्तनुः** — रमणि ! त्वं सर्वशः मे कामोन्माद कारयित्री भासि।

**मधुरं बहु पुष्पेषु। भ्रमरोऽयं निपीय च।**
**मधुं पातुं समायातलः। सहकारं प्रियं प्रिये ॥**

सुन्दरि, मया लोके बह्व्यः तरुण्यः दृष्टपूर्वाः आसन् किन्तु त्वत्समानां नाहमपश्यं अद्यावधि।

**सत्यवती** — महाराज !

**भाषितं ते प्रभो जाने । नाहं किमपि लज्जया ।**
**किन्तु जानामि कंदर्पं । मदधीनं मदालसा ।।**

**शन्तनुः** — अहो अमृततुल्यं ते भाषणम् । सत्यवति त्वं तव गृहस्य मार्गमादेशय ।

**सत्यवती** — ( उत्तिष्ठति ) एहि प्रभो इतः इतः । ( इति मार्गमादिशति )

**शन्तनुः** — तामनुसरन् ( आत्मगतम् )

**कान्ता प्रिया मन्मथराज्य राज्ञी । प्रशास्ति मां भूतलराज्य भूपं ।**
**कामान्धकारेण परीतचित्तः । भजामि तां मोहन मन्त्रमुग्धः ।।**

( इति गच्छति )

( यवनिका पतति )

* * *

# द्वितीयं दृश्यम्

( दाशराज गृहं । दाशराजः मित्रैस्सार्धं गायन् गायन् जालं संयोजयति )

**गीतम् (मालकौंस रागे)**

**दाशराजः** — **आयाहिरे ! आयाहिरे ! आयाहिरे !**
**विहायसे सराग रश्मि चन्द्रमाः**
**तनोति सान्द्र रोचि मंजु चन्द्रिकाः**
**सिन्धुराव घोषिता रोदसी कन्दराः**
**यान्तु यानपात्र चालकास्सधीवराः ।।**

अनुचराः — याहिरे याहिरे याहिरे याहि ।।

दाशराजः — चन्द्रहास मज्जिता तामसी प्रिया
सर्वदेह कान्ति पुंज मन्जुवल्गुना
निश्चला विभासते तारालोचना
यान्तु यानपात्र चालकास्सधीवराः ।।

अनुचराः — याहिरे याहिरे याहिरे याहि ।।

दाशराजः — तन्तुजाल जाल वेत्रयष्टि वेल्लिताः
कामिनी विलास रासकेलि लोलुपाः
वीरपान घूर्णमान मानसोर्मिकाः
यान्तु यानपात्र चालकास्सधीवराः ।।

अनुचराः — याहिरे याहिरे याहिरे याहि ।।

दाशराजः — आयाहिरे आयाहिरे आयाहिरे ।।

**मीनग्राहकः** — महाराज श्रुतोस्म्यहं यत् भवतां कन्यायाः विवाहः अस्मिन् वसन्ततौ कर्तुमिच्छतिः भवान् इति।

**दाशराजः** — प्रयत्नाः विधीयन्ते वसन्ततौ कर्तुं। किन्तु अनुरूप वरप्राप्तिः एतावत्पर्यन्तं न जाता।

**नौचालकः** — वरान्वेषणं कुतः भोः। अनुरुपोवरः कन्यायाः पादसन्निधिं समागमिष्यति। मा ते चिन्ता भवतु।

**दाशराजः** — सम्यक् भणितं त्वया। किन्तु मानत्र प्रयत्नः कर्तव्य खलुः।

**मीनग्राहकः** — वयं निमित्त मात्राः। सर्वं दैवनिर्णयानुसारेण भविष्यति। कुत्र लिखितं अस्यै न कोपि जानाति।

**नौचालकः** — यदि समयः अनुरूपः भवति सर्वं विनायासेन भविष्यति।

**दाशराजः** — हां वयं समय निरीक्षकाः। यदा वमनस्य कल्याणस्य च समयाविर्भावः भवति तदा विनावरोधं द्वयं भवति।

**नौचालकः** — अधुना भवतः पुत्री नौचालने तज्ञा अस्ति।

**दाशराजः** — अयं अस्मदीय साम्प्रदायः यत् बालिका-बालकौ नावं चालयितुं समर्थौ भवतः तौ कुटुम्बचालने योग्य तज्ञौ भवतः इति।

**मीनग्राहकः** — अर्थात् भवतः कन्या सत्यवती अधुना कुटुम्बमपि सौख्येन चालयितुं शक्ता भविष्यति।

**दाशराजः** — हां ! सत्यमेव। सा कुटुम्बं चालयितुं शक्ता भविष्यति।

**नौचालकः** — राजवंशजानां अनुरूपेण गान्धर्वविवाहेन विवाहः कर्तव्यः।

**दाशराजः** — वयं राजानः। तथैव करिष्यामः। तस्मात् तां नौचालने याता-यातजननदीतारणे नियुक्तावानस्मि। यदि यः कोऽपि सुन्दरः युवा तस्याः दृष्टिपथं गमिष्यति तर्हि तयोः प्रेमविर्भावः भविष्यति तदा अस्मदीयः प्रयत्नः सुलभतमः भवि-ष्यति इति बुद्ध्या सर्वं समालोच्य मया कृतम्।

**नौचालकः** — राजवंशजानां राजवंशजाः योग्याः भवन्ति न चान्ये। यदि प्रेम अन्य वर्गैः भविष्यति चेत् तत् प्रेम जीवनसौख्ये अन्तराय कारकं भविष्यति, तस्मात् विवाहे समानधर्मः भवितव्यः।

**मीनग्राहकः** — अन्नपानविषये यदि समानता स्यात् तर्हि विवाहः येनकेनापि योग्यः भवति। असमानता अन्नपान विहारेषु भवति।

**दाशराजः** — मया निश्चितं यदि कन्यायाः विवाहः राजवंशजैः निश्चितः भवति तर्हि विवाहः कर्तव्यः नोचेत् नहि।

**मीनग्राहकः** — यदि कन्यायाः प्रेम अन्यैर्भवति चेत् विवाहः न भवति किम् ?

**दाशराजः** — तं विवाहं नाहमङ्गी करोमि। अहं साम्प्रदायानुवादी। लोकाः मां निन्दन्तु। नाहं अस्मात् पथः एकंपदं अपि चलामि।

( ततः प्रविशति शन्तनुद्वितीया सत्यवती )

**सत्यवती** — पितः नमांसि। अहं आगतास्मि।

**दाशराजः** — ( शिरः उन्नमय्य शन्तनु द्वितीयां तां विलोक्य ) बाले कोऽयं पुरुषः।

**सत्यवती —** ( लज्जिता निर्गच्छति गृहस्यान्तः )

**शन्तनुः —** दाशराजा अहं कथयामि कोऽहं श्रृणु। अहं राजा शन्तनुः।

**दाशराजः —** अयि सुहृदौ यूवां गच्छतात्। ( इति आदिशति, तौ गच्छतः ) ( ससंभ्रमं उत्थाय विनीतः बद्धाञ्जलिः ) अहो भवन्तः महाराजानः। दरिद्रस्य मम गेहं समागताः। धन्योऽस्मि महाराज। इदं मे भाग्यम्। उपविष्टुंमपि मम गृहे आसनादिकं पीठादिकमपिनास्ति। ( इति संभ्रमेण एकं दारुफलकं आनीय उपविष्टुं स्थापयति )

**शन्तनुः** — ( दारु फलकोपरि उपविशति )

**दाशराजः** – ( तिष्ठन् ) महाराज। यद्यहं काकेन सन्दिष्टोऽस्मि तर्हि भवतः चरणसन्निधिमागत्य निवासितोऽस्मि। किमर्थं भवन्तः बहु कष्टेन आगतवन्तः। मत्तः कः सहायमपेक्ष्यते।

**शन्तनुः —** दाशराज ! त्वमपि उपविश।

**दाशराजः —** ( उपविशति एकस्मिन् दारुफलके )

**शन्तनुः —** इदं मम कर्म। तस्मात् स्वयं अहं आगतोऽस्मि।

**दाशराजः —** कर्म भवदीयं उत ममाकीनं भवतु नाम अहमेव तव सन्निधिमाहूतव्यः।

**शन्तनुः** — एतत् मम कार्यं तस्मात् ममागमनं योग्यं भवति।

**दाशराजः —** अनुगृहीतोऽस्मि। मया किं कर्तव्यं विद्यते आज्ञापयन्तु भवन्तः।

**शन्तनुः —** दाशराज अहं त्वां एकं प्रष्टुं समागतोऽस्मि।

**दाशराजः —** भवन्तः राजानः देशपालकाः महापुरुषाः वयं अल्पाः दरिद्राः। अस्मत्तः भवद्भयः किमपेक्षणीयं विद्यते कथयन्तु भवन्तः।

**शन्तनुः —** अहं भवतः कन्यां परिणेतुं इच्छामि।

**दाशराजः —** ( ससंभ्रमम् ) अहो भवद्भिः किमुदीर्यते।

**शन्तनुः —** अहं सत्यं मनसा कथयामि।

**दाशराजः —** महाराज एतत् सर्वं मे स्वाप्निकं भाति।

**शन्तनुः** — एतत् सर्वं सत्यं तथ्यं भवति न स्वाप्निकम्।

**दाशराजः** — महाराज ! आवयोः समागमः न योग्यः सः असाम्प्रदायकः।

**शन्तनुः** — कथं भवान् ब्रवीति।

**दाशराजः** । अयं तु साम्प्रदायः।

**शन्तनुः** — जानाम्यहं तथापि पृच्छामि।

**दाशराजः** — महाराज त्रिदशालयः क शृगालः क। द्वयोर्मध्ये महदन्तरं विद्यते।

**शन्तनुः** — यदि त्वं मम कामनां पूरयसिचेत् अन्तरं नैव भवति।

**दाशराजः** — एषा वरवर्णिनी जातमात्रैव योग्य वराय दातव्या इति।

**शन्तनुः** — का ते भावना।

**दाशराजः** — "समानशील व्यसनेषु सख्यं।" कलहस्य सम्बन्धस्य, स्नेहस्य च अर्हता समानता च आवश्यके नोचेत् ते न शोभन्ते।

**शन्तनुः** — दाशराज ! समानता असमानता च निर्धारकाः वयं मानवाः एव। यत्र रत्नं विद्यते तत् धराधिपानां ग्राह्यं भवति। अयं साम्प्रदायः अहमपि साम्प्रदायमनुसृत्य कन्यारत्नमिदं ग्रहीतुमिच्छामि।

**दाशराजः** — कन्यारत्न विषये परम्परा एवं न विद्यतेऽति मे भावना।

**शन्तनुः** — रत्नहारितु पार्थिवः। तस्मात् कन्या रत्नहारिनः मम प्रार्थनां भवान् अङ्गिकरोतु।

**दाशराजः** — महाराज ! स्वार्थाय व्यक्तिशः शतशः नियमाः मा भवन्तु।

**शन्तनुः** — आहां राजानौ। आवयोः समानशीलता विद्यते।

**दाशराजः** — राजन्। भवान् स्वार्थाय कथयसि धर्मतः नहि। अहं मत्स्य राजा। भवान् मर्त्य राजा। अत्र महदन्तरं विद्यते। अत्र समानता नास्ति।

**शन्तनुः** — भगवतः सृष्ट्यां तस्य दृष्ट्यां वयं सर्वे मानवाः समानाः।

**दाशराजः** — महाराज ! राजानः बहुपत्नीकाः कथमहं कन्यां तुभ्यं दास्यामि।

**शन्तनुः** — भवान् जानाति यत् राज्ञां बहुपत्नीकत्वं शास्त्रसम्मतमिति।

**दाशराजः** — बहु पत्नीकस्य राज्ञः का धर्मपत्नी भवितुमर्हति।

**शन्तनुः** — आदौ परिणीता धर्मपत्नी भवति।

**दाशराजः** — तस्मात् अहं मम कन्यां तुभ्यं न दातुमिच्छामि।

**शन्तनुः** — धर्मपत्नी विनियोगेन भवितुमर्हति।

**दाशराजः** — तथा यदि स्यात् भवान् एनां धर्मपत्नीं, मत्तः प्रार्थितः सत्येन समयं करोतु मम।

**शन्तनुः** — अहं कर्तुं व्यवसितः। किमिति।

**दाशराजः** — महाराज। कन्यां इमां ते प्रदद्यां त्वत्समः मे वरः जातु न भविष्यति।

**शन्तनुः** — किमपेक्ष्यते भवता पृच्छतु।

**दाशराजः** — महाराज धर्मपत्नीव एनां स्वीकृत्य अस्यां यः पुत्रः जायते सः राजा भविता। तवानन्तरं नान्यः कश्चन अभिषेक्तव्यः भवति। तथा यदि विधीयते अहं दित्सामि कन्यामेनाम्।

**शन्तनुः** — दाशराज ! अवाञ्छनीयं याचितं भवता।

**दाशराजः** — महाराज ! अहं पक्कण निवासी। भवान् स्वयं मत्सकाशं कन्यार्थं समागतः अस्ति। मयाचोक्तं समान शीलता नास्तीति। अनंतरं यदि कन्यायाः द्रोहः भविष्यति चेत् कथम्? तस्मात् दीर्घ दृष्ट्या एवं मया पृष्टोस्ति भवान्।

**शन्तनुः** — ( निर्विण्णः, व्यथया ) अहो दाशराज ! अयाच्यं याचितं भवता। दाशराज मे शिरोवेदना भवति गृहं गन्तुं मे मनः इच्छति। ( इत्युत्थाय गच्छति )

**दाशराजः** — अहो किं कृतं मया। ( इति मस्तकन्यस्तहस्तः चिन्ताक्रान्तः भवति।

( यवनिका पतति )

* * *

# तृतीयं दृश्यम्

( ततः प्रविशतिः देवव्रतः वृद्धामात्यश्च, देवव्रतः एकस्मिन् पीठे उपविशति, वृद्धामात्यः तस्य पुरतः बद्धहस्तः तिष्ठति )

**देवव्रतः** — अमात्यवर्य ! मे पिता ह्यः प्रभृति एकान्ते निवसन् चिन्तयन् आस्ते तत्र कारणं किमिति मे प्रश्नः ।

**अमात्यः** — देव ! अहमपि तदेव चिन्तयामि । किन्तु महाराजानां स्थितिमुद्दिश्य प्रष्टुं अहं अशक्तः अभवम् ।

**देवव्रतः** — पिता न केनापि सबंधं विना मौनेन कालं यापयति ।

**अमात्यः** — ममापि कारणं दृष्टिपथं नायाति ।

**देवव्रतः** — इतः पूर्वं अर्थात् दिनद्वयात्प्राक् पिता सन्तोषेण यमुनातीर संचारार्थं जगाम ।

**अमात्यः** — जानाम्यहम् ।

**देवव्रतः** — तदा ते अत्युत्साहिनः अदृश्यन्त ।

**अमात्यः** — अधुना यमुनातीरसंचारेण बहु परिश्रान्ताः जाताः इति ममाभिप्रायः ।

**देवव्रतः** — परिश्रान्ताः उत्साहिनः दृश्यन्ते । ततः एषा चिन्ता यमुनातीर संचारेण संजाता नहि ।

**अमात्यः** — तर्हि कस्मात् कारणात् उत्पन्ना इयं स्थितिः ( इति चिन्तयति )

**देवव्रतः** — अमात्यवर्य ! भवन्तः अनुभवज्ञाः सर्वमपि जानन्ति किन्तु हृद्गताभिप्रायं सत्वरं न प्रकटयन्ति ।

**अमात्यः** — तथामावद युवराज । इयं परिश्रान्तेन समुद्भूता वेदना भवति न त्वन्या ।

**देवव्रतः** — पितृपादानामवस्था मे समक्षं दृश्यते ।

**परिश्रान्तेन जाता न । मन्ये पितृ विचारणा ।**
**पिण्डीकृत्यास्य चित्तंतु । दहतीवाऽस्ति वेदना ।।**

**अमात्यः** — तनय त्वमेव पितुः समीपं गत्वा तद्वेदनायाः कारणं पृच्छ।

**देवव्रतः** — अमात्यवर्य ! अहं तस्य पुरतः बालः। ते कदापि वैयक्तिक विषयं मे न कथयन्ति तस्मात् अमात्यवर्याः अनुभवज्ञाः भवन्तः पितरं पृच्छन्तु।

**अमात्यः** — वयं तेषां समक्षं गत्वा प्रष्टुं संकोचमनस्काः भवामः। तस्मात्

**मूर्धाभिषिक्तं गत्वा त्वं। आपृच्छस्व परं सुत।**
**नान्यः शक्तो तथा गन्तुं। प्रजानां पितरं स्वयम्॥**

**देवव्रतः** — अमात्यवर्य मया सार्धं भवानप्यागच्छतु।

**अमात्यः** — तत्र मे प्रवेशः अनुचितः तनय।

**देवव्रतः** — कथं भवतां प्रवेशः अनुचितः कथयन्तु भवन्तः।

**अमात्यः** — तनय ! यदि कौटुम्बिक विषयः स्यात् सः विषयः युवयोर्मध्ये योग्यः भवति। कौटुम्बिक जीवनं रहस्यमयं राजते। लोकोक्तिः विद्यते खलु कौटुम्बिक जीवनं रहस्यमयं भवितव्यम् इति। तस्मात् भवता एकाकिना तत्रगमने औचित्यं विद्यते।

**देवव्रतः** — भवन्तः अनुभवज्ञाः। भवदुक्तिमनुसृत्य अहमेवगच्छेयम्।

**अमात्यः** — भवान् अधुना गच्छतु।

**देवव्रतः** — भवतां वचनेन अहं प्रफुल्लितः अभवम्। अहं अधुनैव गच्छामि। (इति गच्छति)

**अमात्यः** — (निश्वस्य गच्छति)

(यवनिका पतति)

* * *

## चतुर्थं दृश्यम्

(शय्यायां उपविश्य राजा शन्तनुः चिन्तयति)

**शन्तनुः** — (आत्मगतम्) अहो किं तस्याः सौन्दर्यम्। एक दृष्टिपातेन

मदनः मां विवशं चकार। कथमहं बाधामिमां सहिष्यामि। दाशराजः हिरण्याक्षवरान् पप्रच्छ। अहं कथं दातुं शक्तः। विद्यते खलु मे पुत्रः देवव्रतः।

तं विहाय सत्यवत्याः पुत्रं कथमहं कुर्यां राजानं। अहो मे हृदयं कामेन तप्तं भवति। बुद्धिस्तु चिन्तास्पदा विचेष्टते। अहं मे मनोगताभिप्रायं कस्मै वक्ष्यामि। लोकः मां पितरं विरहेन दूयमानमानसं विलोक्य विनिन्दिष्यति। चोरस्य वृश्चिका दंशनमिव सर्वं सोढवा प्रवर्तितव्यम्। अहो मे राज्ञः स्थितिः एवं संजाता। सानितान्तं मे दृष्टिपथं समायाति। मां प्रेरयति परिरम्भसुखाय। यदि वृद्धामात्यादयः ज्ञास्यन्ति मे स्थितिं मां शतथा मनसि निंदिष्यन्ति। अहं लोके हास्यस्पदस्थानं भजिष्यामि। मे पुत्रः देवव्रतः विवाहयोग्यकालपन्नः राजते। तं विहाय अहं सत्यवत्या विवाहं कर्तुं प्रयते। केयं मम स्थितिः। कथमेषा अघटना घटिता। किमत्र कारणम्। सर्वस्यापि कारणं भवत्येव। विना च कारणं अपिच ईश्वरेच्छां न पत्रमपि चलति। मे हृदयं प्रतिक्षणं सत्यवती सौन्दर्यदर्शनजन्य कामभावनायां अपूर्वजनित वासनायां प्रति क्षणं संलग्नं परिदूयते। अहं तां कथं विस्मरिष्यामि। सा प्रतिक्षणं मां हावभाव पराकष्टतां प्रापर्यति। परं शतथा दग्धोऽहं अनया कामनया। विरहानलसंदग्धमानसं तदा तदा तदीय रूपाविष्कारेण आनन्दे क्रीडते च।

**स्मारं स्मारं चपलनयनां तां तपत्यन्तरात्मा।**
**वारं वारं त्यजति मदनो निष्ठुरं पञ्चबाणान्।**
**दर्शं दर्शं हिमकरमुखीं कस्त्र वक्षोज तन्वीं।**
**श्रावं श्रावं सरस वचनं मे मनः क्रीडते हि॥**

हा अहो वत। (इति शय्यायां परिदूयमान मानसः आस्ते। ततः प्रविशति द्वारपालकः लम्बकर्णः)

**लम्बकर्णः** — (प्रविश्य नमस्कृत्य) महाराज राजकुमारः देवव्रतः द्वारि तिष्ठति भवतः द्रष्टुम्।

**शन्तनुः** — (आत्मगतम्) देवव्रतः मां द्रष्टुं द्वारि तिष्ठति। लम्बकर्ण तं प्रवेशय। (इति आज्ञापयति)

**लम्बकर्णः** --- यथाज्ञापयति देवः। (इति गच्छति)

( ततः प्रविशति देवव्रतः )

**देवव्रतः** — नमांसि पितः। ( इति नमस्करोति )

**शन्तनुः** — चिरंजीव कुमार। किमत्र कारणं विद्यते तव प्रवेशस्य।

**देवव्रतः** — पितः महत् कारणं विद्यते।

**शन्तनुः** — एहि उपविश अस्मिन् पीठे ( इति पीठं दर्शयति )

**देवव्रतः** — ( पीठे उपविशति )

**शन्तनुः** — किं कारणं विद्यते कथय अधुना।

**देवव्रतः** — अयि पितृ चरणाः भवन्तः दिनद्वयात्प्रभृति अतीव दूयमान मानसाः दृश्यन्ते। को हेतुः विद्यते इति सकल राजस्थानं मनसि दूयते।

**शन्तनुः** — सकल राजस्थानं चिन्तयति मामुद्दिश्य ?

**देवव्रतः** — हां सकल राजस्थानं चिन्तयति अपि च भवतः कारणं प्रष्टुं त्रस्ता भवति। तस्मात् भवतः परितापस्य कारणं ज्ञातुं। वृद्धामात्याः मां पेषितवन्तः।

**शन्तनुः** — न कोऽपि विशेषः विद्यते तनय। शरीर धर्मः परिवर्तते। नात्र चिन्ताकार्या।

**देवव्रतः** — भवतां तापः शरीर धर्मात् जातः- नहि। किन्तु बौद्धिकमिति समस्त कर्मचराणां अनुमेयः।

**शन्तनुः** — अनुमेयः निराधारः।

**देवव्रतः** — भवन्तः दिनद्वयात् प्राक् यमुनातीर संचारार्थं गतवन्तः। तदा अतिशय संन्तोष भरिताः अदृश्यन्त। यमुनातीर संचार समाप्त्यनन्तरं गृहमागतानां भवतां वदनमण्डलं चिन्ता राहुग्रस्तमिव जातं इति सर्वेषां अभिप्रायः।

**शन्तनुः** — तनय यमुनातीर संचारेण बहुपरिश्रान्तः अभवम्। सर्वमपि शरीरं सिमसिमायते व्यथया।

**देवव्रतः** — भवन्तः अपहुत्यलङ्कारं कथयन्ति।

**शन्तनुः** — तनय तवपुरतः मम अपहुत्यलाङ्कारेण प्रयोजनम् किम्।

**देवव्रतः** — सः एव ममापि प्रश्नः।

**शन्तनुः** — त्वं मम पुत्रोऽसि अत्र गोपनीयं न किमपि विद्यते गच्छ।

**देवव्रतः** — जनक ! भवतां क्षेमकारिणः परिचर्यां कर्तुं बहवः परिचारिकाः वर्तन्ते, किमर्थमेकान्ते चिन्तनम्।

**शन्तनुः** — वत्स त्वं सर्व राजास्थान मुखात् मां प्रष्टुं समागतोऽसि तस्मात् अहं कथयामि श्रृणु।

**देवव्रतः** — अवहितोऽस्मि पितः।

**शन्तनुः** — त्वं एक एव ममापत्यम्। महति कुले शतपुत्रापेक्ष्या एकः सुपुत्रः अलं। नाहं भूयः दारान् विवाहितुमुत्सहे। वत्स त्वं च शूरः। युद्धे ते निधनं मा भूयात्। यदि भविष्यति। (कर्णेपिधाय) शान्तं पापं शान्तं पापम्। अहं सर्वदा संशयात्मा भवामि। अयमेव व्यथयाः हेतुः। एकपुत्रत्वं अनपत्यता इति धर्मवादिनः कथयन्ति। तस्मादहं संशयमापन्नः त्वां चिन्तयामि। एतदेव कारणं नान्यत् विद्यते तात।

**देवव्रतः** — पितः : विदितं मया भवतः व्यथायाः हेतुः।

**शन्तनुः** — त्वं न चिन्ताधीनो भव। त्वं योद्धा वीरोऽसि।

**देवव्रतः** — अहं चिन्ताधीनो न भवेयम्। किन्तु भवन्तः शान्त चित्तेन स्वपन्तु। विश्रान्तिसुखमनुभवन्तु सर्व साधु भविष्यति। मां गन्तुमाज्ञापयन्तु भवन्तः।

**शन्तनुः** — कुमार त्वं ससुखं निश्चिन्तया व्यवहर। मा ते चिन्ता मां प्रति। त्वं गच्छ।

**देवव्रतः** — नमस्ते पितः। (इति नमस्कृत्य गच्छति)

**शन्तनुः** — अयं विदित वृतान्तः इति मन्ये। अयं यदि सत्यं जानाति तर्हि अवश्यं मे मनोरथ पूरणाय प्रयतिष्यति। अयं कार्यसाधकः। योद्धा। त्यागी च। अधुना किं कुर्यां। विवाहयोग्य कुमारेण सहितोऽपि नैकवनिता परिवेष्टितोऽपि राजा पुनर्विवाहाय प्रयतते इति यदि लोकः जानाति मां अवश्यं परोक्षे टीकां करिष्यति। यदि एतत् योग्यं मम ? उत न योग्यम्। किन्तु विना सत्यवतीचिन्तां अहं मूकीभावं प्राप्तुं अशक्तः। एकत्र लोकापवादः अन्यत्र मनस्तापः। मे स्थितिः अधुना सर्वतः प्राण हारिणी भवति। पुरतः वापी पश्चात् पल्वलम्। कुत्र गच्छेयं कथं गच्छेयम् किं

कुर्याम्। अहं शतथा चिन्ताक्रान्तः। भवतु सर्वस्य मूलकारकः कर्ता च सर्वेश्वरः। तस्याज्ञयाविना पिपीलिकापि न दंशति। सर्वत्र कार्यस्य सर्वथा कारणं वर्तते। नहि विचारणीयं सर्वं सुखान्तं भविष्यति। निद्रा मां वृणोति। निद्रया व्यपगतचिन्तः भविष्यामि। यतः।

**निद्रापरं स्थावर जंगमानां। सौख्याय हेतुर्भवतीहलोके।**
**योऽयं प्रयासं भजते च निद्रां। विनैव शान्तस्ससुखी प्रबुद्धः॥**

(इति शय्यायां लुटति)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

(देवव्रतः विचारयन् हस्तौपृष्ठतः बद्ध्वा इतस्ततः चरन् किञ्चित्कालानन्तरं उपविश्य वैद्युतभावनया सुप्रकाशित बुद्धिविशेषः करतलध्वनिं कृत्वा) कः कोऽत्र भोः। (इति आह्वयति।

**प्रतीहारी** — (प्रविश्य) अहमस्मि देवः। (इति नमस्करोति)

**देवव्रतः** — पितुः रथसारथिं प्रवेशय।

**प्रतीहारी** — यथाज्ञापयति देवः। (इति नमस्कृत्य गच्छति)

(ततः प्रविशति सूतः)

**सूतः** — (नमस्कृत्य) देव देवव्रत किमर्थमहमाहूतः)

**देवव्रतः** — सूत भवान् पितृसमानः अत्रोपविशतु।

**सूतः** — (नमस्कृत्य उपविशति)

**देवव्रतः** — सूत, त्वं, मे पिता शन्तनुमहाराजा च दिनद्वयात्प्राक् कुत्र गतवन्तौ।

**सूतः** — आवां यमुनातीरं गतवन्तौ।

**देवव्रतः** — यमुनातीरे कुत्र।

**सूतः** — यमुनातीरे पक्कण समीपम्।

**देवव्रतः** — यमुनातीरः सुन्दरः खलु।

**सूतः** — यमुनातीरः सुन्दरः।

**देवव्रतः** — पक्कण प्रदेशः अति सुन्दरः इति मन्ये।

**सूतः** — हां सत्यमेव सः प्रदेशः सुन्दरः। तत्र सर्वेपि वृक्षाः पुष्पफल संभारिताः वर्तन्ते। कोकिलादीनां आलापाः श्रवणपुटं तर्पयिष्यन्ति।

**देवव्रतः** — तस्य पक्कणस्य समीपे किं दृष्टं पित्रा।

**सूतः** — देव तत्र पित्रा सकलं वनं दृष्टं। अपि च तत्र यमुनानद्यां याताऽयातान् तारयितुं विद्यमाना यानपात्रसहिता एका युवतिः दृष्टा आसीत्।

**देवव्रतः** — (आत्मगतम्) एका युवतिः दृष्टा सा का? (सूतेन सार्थं) सूत दृष्टा युवतिः का?

**सूतः** — सा दाशराजस्य पुत्री।

**देवव्रतः** — दाशराजा कः?

**सूतः** — सः तस्य पक्कणस्य राजा।

**देवव्रतः** — सा कन्या तस्य दुहिता किम्?

**सूतः** — हां तस्य दुहिता।

**देवव्रतः** — सा कीदृशी।

**सूतः** — सा अतीव सुन्दरी।

**देवव्रतः** — त्वया यथा दृष्टं तथा वर्णय।

**सूतः** — तां वर्णयितुमहं अशक्तः।

**देवव्रतः** — स्वल्पवचनैः तां वर्णय।

**सूतः** — सा त्रिलोकसुन्दरी। तादृश सौन्दर्यवती पक्कणालये कथं जाता

इति मम शङ्का भवति। तथापि स्वभावोक्त्या प्रकटी करिष्यामि।

**अस्ति काञ्चन समान वल्गुना। बर्हिबर्ह निभ चारुकेशिका।**
**मन्दचालन विलोलनितम्बा। बाहुमूलरुचि दीपितस्तनी ।।**

**देवव्रतः** — सा मम समक्षं त्वया साकारिता। विदितोऽस्मि सर्वं। अपिच तत्र किं कृतं किं किं वृत्तम्। सर्वं निवेदय।

**सूतः** — देव, राजा तां दृष्ट्वा तयासाकं भाषितवान्।

**देवव्रतः** — किं भाषितवान्।

**सूतः** — मया तत् सर्वं न श्रुतम्।

**देवव्रतः** — ततः।

**सूतः** — किंतु राजा तां तेन सार्थं परिणेतुं चकमे।

**देवव्रतः** — ततः।

**सूतः** — तदा सा नाहं स्वच्छन्दवृत्तिमवलम्बामि। अहं अधुनापि पितुः संरक्षणे अस्मि इत्युक्तवती।

**देवव्रतः** — साधूक्तं। ततस्ततः।

**सूतः** — तां पदे पदे स्वजाया भवितुं इयेष।

**देवव्रतः** — ततः।

**सूतः** — सा अन्ततः राज्ञासार्थं गृहं गतवती।

**देवव्रतः** — किं त्वमपि तया सार्थं तस्याः गृहं गतोऽसि ?

**सूतः** — अहमपि तावनुसरम्।

**देवव्रतः** — ततस्ततः।

**सूतः** — शन्तनुमहाराजा स्वीय भावं दाशराजाय प्रकटी चकार।

**देवव्रतः** — साधूक्तं तेन।

**सूतः** — दाशराजा एकं वरं याचितवान्।

**देवव्रतः** — किमिति।

**सूतः** — महाराज भवान् पुत्रवानस्ति। ते पुत्रः राज्यस्य उत्तराधिकारी भविष्यति। तस्मात् अहं भवन्तं एवं याचे यत् भवान् सत्यवत्याः आत्मजाय राज्यं दास्यति तर्हि सत्यवती विवाहः भवता साकं भविष्यतीति। नोचेत् नहि। इत्युक्तवान्।

**देवव्रतः** — अतीव सुन्दरम्। ततस्ततः।

**सूतः** — महाराजा तदीय कामनां नाङ्गीचकार।

**देवव्रतः** — तदा प्रभृति पिता एवं आस्ते किम्।

**सूतः** — अहमपि एवं मन्ये।

**देवव्रतः** — सारथे त्वं मे समादरणीयोऽसि यतः सविस्तरं यथावृत्तं उक्तवानसि। साधुकृतं बहु उपकृतं च भवता।

**सूतः** — न किञ्चिदपि विद्यतेऽत्र दोषः मम कथने। यथावृत्तं भवता पृष्टः अवोचम्। मा भूयात् कष्टं मे इति इयन्तं भवन्तं याचे। (इति नमस्करोति)

**देवव्रतः** — सूत त्वं मे पितृ समानः। अहं त्वयि बद्धानुकम्पः तव न किमपि कष्टं भवति। त्वं निश्चिन्तया कालं यापय।

**सूतः** — अनुगृहीतोऽस्मि देव!

**देवव्रतः** — सूत त्वं सत्वरं अधुनैव वृद्धपुरोहितैः मया सार्धं दाशराजागृहमागच्छ। तत्र किं करणीयं मया आज्ञाप्यते।

**सूतः** — अवहितोऽस्मि देव। (इति नमस्कृत्य गच्छति)

**देवव्रतः** — (ईषत् चिन्ताक्रान्तः विचार्य) अहं स्वयमेव पितृकामनां पूरयेयम्। (इति गच्छति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

( देवव्रतः वृद्धैः क्षत्रियैः सहितः दाशराजसमीपं आगच्छति )

**दाशराजः** — ( आगतान् सर्वान् विलोक्य, उत्थाय ) तत्र भवन्तः के। कस्मात् प्रदेशात् किमर्थं आगताः निवेदयन्तु।

**देवव्रतः** — अयि दाशराज अहं शन्तनुमहाराजस्य पुत्रः। मम नाम देवव्रतः।

**दाशराजः** — युवराज इदं आसनं उपविशतु। ( इति दारुफलकं ददाति )

**देवव्रतः** — दाशराज अहं स्थित्वा भणिष्यामि। मास्तुते प्रयासः आसनदाने।

**दाशराजः** — कथं भवन्तः हठात् आगतवन्तः अत्र।

**देवव्रतः** — दाशराज ! अहं ते पुत्रिकां सत्यवतीं मातरं विधाय नेतुं समागतोऽस्मि।

**दाशराजः** — सर्वमेतत् आश्चर्यं प्रतिभाति मे युवराज। भवतः पिता धर्मज्ञः तां वोढुं शक्तः भवति। पुरा मया बहवः राजानः प्रत्याख्याताः। अहं च कन्यायाः पिता। तस्मात् वचनीयं इदं वच्मि। ममात्र कोऽपि संशयः न विद्यते, किन्तु लोकव्यवहार मनुसृत्य प्रवर्तितव्यं। अत्र बलवत् सपत्नता दोषं पश्यामि। यदि त्वयि क्रुद्धे सति जातु कोऽपि चिरं नजीवेत्। दानाऽदाने एतत् जानीहि त्वम्।

**देवव्रतः** — दाशराज ! अहं सर्वेषां भूमिपालानां समक्षं ब्रवीमि श्रृणु।

**दाशराजः** — मया यत् पृष्टं तत् विषयमुद्दिश्य प्रस्तावनां करोतु भवान्।

**देवव्रतः** — श्रृणु दाशराज। पुत्रः यः अस्यां जनिष्यति सः वः राजा भविष्यति। अयि भोः नराधिपाः राज्यं पूर्वमेव मया त्यक्तं। अपत्यहेतोः अद्य विनिश्चयं करिष्ये। दाशराज अद्य प्रभृति मे ब्रह्मचर्यं भविष्यति। दाशराज ! श्रृणु।

**अस्याः पुत्रस्तु राज्यार्हः। भविता नास्ति कश्चन।**
**ब्रह्मचारी सदैवस्यां। प्रतिज्ञेयं श्रृणु प्रियम्॥**

**दाशराजः** — ( श्रुत्वा तस्य ब्रह्मचर्य प्रतिज्ञां ) देव अहं तव पित्रे कन्यां ददामि। ( इति ददाति )

**देवव्रतः** — दाशराज त्वदीयं कर्मणा अहं संतुष्टोऽस्मि। अहं मे मातरं नमामि (इति नमस्करोति) मातः एहि अस्मिन् रथे उपविश। (इति सत्यवत्या पुरोहितैश्च सहितः गच्छति)

**दाशराजः** — (आत्मगतम्) अहो किमेतत् आश्चर्यम्। युवा देवव्रतः पित्रे स्वीय सौख्यं विहाय भीकर प्रतिज्ञया भीष्मः जातः। अयं महापुरुषः चरित्र प्रसिद्धः भविष्यति। (इति आनन्देन गच्छति)

(यवनिका पतति)

* * *

## सप्तमं दृश्यम्

(शन्तनुः शय्यायां उपविश्य चिन्तयति)

**शन्तनुः** — हा सत्यवती खलु अपरूप सौन्दर्यवती। एक दृष्टिपातेन सा मम हृदयराज्ञी संजाता।

**इयमास्ते प्रिया लोके। सौन्दर्य वरवर्णिनी।**
**संलग्ना सततं चित्ते। मदीये कामवागुरे॥**

(ततः प्रविशति प्रतीहारी)

**प्रतीहारी** — (नमस्कृत्य) अयि महाराज द्वारि कुमारः देवव्रतः मन्त्रि पुरोहितैः भवन्तं द्रष्टुं तिष्ठति।

**शन्तनुः** — प्रवेशय सर्वान्।

**प्रतीहारी** — यथाज्ञापयति देवः। (इति नमस्कृत्य गच्छति)

**देवव्रतः** — (प्रविश्य) पितः नमांसि।

**शन्तनुः** — चिरंजीव कुमार। किमत्र कारणं विद्यते तव प्रवेशस्य।

**देवव्रतः** — (करतल ध्वनिं ददाति) ततः प्रविशन्ति सत्यवती वृद्ध पुरोहितामात्याः।

**शन्तनुः** — किमेतत् सर्वं सुत।

**देवव्रतः** — पितः, इयं भवतः पत्नी मे माता सत्यवती। (इति दर्शयति)

**शन्तनुः** — (आश्चर्येण) तनय किमेतत् कृतम्। (इति शय्यायाः उत्थाय देवव्रतस्य हस्तौ गृहणाति)

**देवव्रतः** — जनक भवद्भः यत् रोचते तत् मया सभक्तिकं कृतम्।

**शन्तनुः** — कथंकृतं सर्वमेतत् भवता।

**देवव्रतः** — अहं भवतः चिन्ताजडं वदनं प्रवीक्ष्य तदनुसारं सर्व विषयं समालोच्य भवतः कामना प्रकारं सर्वमन्त्रिपुरोहितानां समक्षं अहं ब्रह्मचारी भवेयं इति दाशराजाय प्रतिज्ञावचनं दत्वा मातरं सत्यवतीमानयम्। (इति नमस्करोति)

**शन्तनुः** — कुमार दुष्करं अपिच। भीषणं कर्म त्वया कृतं, तस्मात् त्वं अद्यप्रभृति लोके भीष्मः इति नाम्ना प्रख्यातः भविष्यसि। तव अस्य कर्मणः अहं ते स्वच्छन्द मरणाय वरं ददामि। तवेच्छानुसारं ते मरणं भवति न त्वन्यथा।

**अद्य प्रभृति लोकेऽस्मिन्। भविष्यसि परं सुत।**
**ब्रह्मचर्येण भीष्माख्यः। स्वच्छन्दमरणे रतः॥**

(इति सत्यवतीं स्वसकाशं नीत्वा तयासहितः तस्मै आशीः ददाति)

**देवव्रतः** — धन्योऽहं (इति नमस्करोति)

(सत्यवतीशन्तनुभीष्मादीनां उपरि पुष्पाक्षताः पतन्ति। शहनायी इत्यादि मङ्गलनिस्वनाः भवन्ति)

(यवनिका पतति)

* * *

## ॥ सावित्री ॥

सावित्री सूर्यसुषमा दद्याच्छक्ति धियं श्रियम्।
सततं शुष्यमाणेभ्यः जीवनं च महीतले ॥

नान्द्यन्ते

सूत्रधारः — प्रिये चारुशीले ! इतः समेहि।

नटी — एषाऽस्मि। को विशेषः।

सूत्रधारः — पश्य।

विभावरी शरच्चन्द्र-चन्द्रिका सागरे परम्।
स्नात्वाम्बराभूषितासौ शारदेव विराजते ॥

नटी — कल्पनाविलासनम् इदं प्रियं भाति।

सूत्रधारः — अद्य अस्मिन् शरदृतौ कार्तिक-पौर्णमास्यां भारतीय-स्त्रीणां कीदृशी शक्तिः विद्यते इति दर्शयितुम् अपि च स्त्रियः सर्व-शक्ति-संपन्नाः पुरुषेभ्यः समधिकतरं संमाननीयाः इति प्राचीन-परम्परागत भावनां प्रसन्नीकृत-मृत्युं सावित्री-नाटकरूपेण प्रदर्शयितुं समुत्सुकोऽस्मि। विषयेऽस्मिन् कस्ते अभिप्रायः।

नटी — अयं प्रपञ्चः पुरुष-प्रकृति-विलसितः। सहजतया स्त्री-पुरुषयोः समानता केवलं जन्मतः संक्रामति। स्त्रियः पुरुषाणाम् अपेक्षया अधिकतरं संमाननीयाः इत्येषा भावना सहजा नहि किंतु समानतया द्रष्टव्या इति मे मनीषा। अपि च, कोऽयं कविः? किं तस्याभिधानम्?

सूत्रधारः — अस्य कवेर्नाम परीक्षित् शर्मा। अयं गीर्वाणान्ध्रभाषा प्रवीणः कलाभिमानी महाकविश्च।

नटी — प्रशंसनीयः अस्य प्रयत्नः यतः भारत-जीवन-शक्ति-भूतां सुरभारतीं विस्मृत्य सर्वे भारतीयाः अर्थ-संग्रहणे सुखानुभवे च निरंतर लोलुपाः भान्ति। किंतु अयं कविः कालप्रवाहस्य प्रतिकूलो भूत्वा सुखार्थी-

भावनां संत्यज्य साधारण-जीवनं कुर्वन् सुरभारत्यां विलिखति। किमेतद् आश्चर्यम् ? अयं भारत-सांप्रदायाभिलाषी देशभक्तः इव आभाति।

**सूत्रधारः** — अयं ललित-गीता-लहरी इति गेय-काव्यं यशोधरा-महाकाव्यं च विरचितवान् सुरभारत्याम्।

**नटी** — अस्य भाषाभिमानः भाषाभिनिवेशश्च प्रशंसनीयौ।

**सूत्रधारः** — प्रिये देवतार्चन-घण्टारवः श्रूयते। सावित्री मृत्युंजयम् अर्चयन्ती आस्ते। एहि गच्छावः।

(इति निष्क्रान्तौ)

(ततः सावित्री मृत्युंजयम् अर्चयन्ती मङ्गलारतिं विदधती गायति)

गीतम् (कानडा रागे)

जय जय जय गौरीरमण !
भक्तजनावलि-संकट-हरण ! जय जय ।।ध्रु.।।
पटुतर-भव-भय निरत-विदूरण !
उडुपति-रेखा पन्नग-भूषण !
सतत-भयंकर-मृत्युनिरासन !
कैलासाचल-शिखर-सुखासन ।। जय जय १
पतित-जनावलि-निरत-विरन्जन
अहित-जनावलि-सतत-विभन्जन
पापौघाखिल-जलद प्रभन्जन
सत्य-नयापार-सज्जन-रन्जन ।। जय जय २
संध्या-ताण्डव-मधु-भीकर-रूप
सकल-धरातल-नेत्रायुध-भूप
त्रिगुणात्मक-काल-नियन्ता
धर्मारक्षण-भीकर-कालं हन्ता ।। जय जय ३

(इति आरतिं नेत्राञ्जनं करोति। अन्ततः नमस्करोति। )

**सावित्री** — (सविषादम्) प्रभो पशुपते। अद्य सत्यवतः सः दिवसः समायातः। त्वमेव रक्षकोऽसि। मृत्युंजयोऽसि। मया सभक्तिकं यद् आचर-

णीयं तत् सर्वं यथाविधि कृतम् । अन्यथा शरणं नास्ति त्वमेव शरणं मम। (इति नमस्करोति)

(ततः प्रविशति सत्यवान्)

सत्यवान् — (आगत्य आरतिं नेत्राञ्जनं कृत्वा नमस्करोति) प्रिये! सावित्रि अतित.व्रोऽयम् आरम्भः। इदं व्रतं त्रिसृणां वसतीनां परम-दुश्चरं भवति। विरम। न युक्तं ते।

सावित्री — प्रिय! मयि संतापः न कार्यः। अहम् इदं व्रतं पारयिष्यामि।

सत्यवान् — व्रतं भिन्धि इति वक्तुं न शक्तः। किंतु पारयस्वेति वक्तुं सुकरमेव।

सावित्री — (मनसि) अयं विचारणीयः दिवसः।

सत्यवान् — प्रिये व्रतं यथोपदिष्टं पारितं त्वया। संप्राप्तः आहार-कालः। भुज्यताम्।

सावित्री — प्रिय! आदित्ये अस्तंगते भोक्तव्यम् इति मम हृदि संकल्पः। एवमेव मया समयश्च कृतः।

सत्यवान् — यथा रोचते ते, तथैव कुरु।

सावित्री — भवत्कृते सर्वमहं विदधामि नाथ!

सत्यवान् — अधुना गन्तव्यं वनं समिदाहरणाय।

(इति पार्श्वस्थितं परशुम् आदाय सत्यवान् वनं प्रस्थितः भवति)

सावित्री — प्रिय! अद्याहं व्रतलग्नास्मि। त्वयाद्य वनं न नन्तव्यम्।

सत्यवान् — समिदाहरणार्थम् अद्यैव गन्तव्यम्।

सावित्री — प्रिय! एकाकी त्वं गन्तुं नार्हसि। त्वया सह आगमिष्याम्यहम्।

सत्यवान् — प्रिये! त्वमपि मया सह वनं जिगमिषसि। न कदापि त्वया वनं गतम्। पन्थाः दुःखः भवति। भवती व्रतोपवासक्षामासि। कथं पद्भ्यां गमिष्यसि? स्त्रियः पुष्पहाराः नहि, कण्ठे गृहीत्वा भ्रमितुम्। जगति स्त्रीभिः प्रयाणमालस्यं भवति। अहं इतो गत्वाऽनुपदमेव आगमिष्यामि।

**सावित्री** -- प्रिय ! सत्यं यदुक्तं भवता। एतावत्-पर्यन्तं नापश्यं वनम्। अद्यैव द्रष्टुं प्रारभे। उपवासात् मे ग्लानिर्न भवति। न परिश्रमः। अहं गमने कृतोत्साहा मां निषिध्य न गमिष्यसि। अहं त्वया सार्धं फलान्याहर्तुम् इच्छामि। अहं किंचिदून-संवत्सरात् आश्रमात् न निष्क्रान्तास्मि।

**सत्यवान्** — प्रिये ! सुव्रते ! त्वं व्रत-लग्नासि। अपि च वने क्रूरेभ्यः सत्त्वेभ्यः भीतिर्भवति। स्त्रियासार्धं प्रयाणम् अतिक्लेशदं दुःखदं भवति। नार्हसि तत्रागन्तुम् विरम तव निश्चयात्।

**सावित्री** — प्रिय ! जगत् सर्वं पुरुष-प्रकृति विलसितम्। तस्मात् यत्र यत्र पुरुषः तत्र तत्र स्त्री। सर्वदा पुरुष-प्रकृत्योः समागमः अनिष्टापत्ति नाशकः भवति। भवति कौतूहलं परं मे कुसुमितं वनं द्रष्टुम्। सर्वथा ते साहाय्यं करिष्यामि।

**सत्यवान्** — सावित्री यथाभिलाषितं भवतु। सज्जीभव गच्छावः।

**सावित्री** — प्रिय ! अनुगृहीतास्मि। (इति तेन सार्धं प्रस्थिता)

* * *

## द्वितीयं दृश्यम्

(सर्वमपि कान्तारं विविध-मृगैः निर्झर-परिवृत-पर्वतैः तटाकैः नदीभिः विहंगमैः चित्रितमिव भाति )

**सत्यवान्** — देवि सावित्रि ? शनैः शनैः पदविन्यासं कुरु। अत्र सर्वोऽपि मार्गः कण्टकाकीर्णः भवति।

**सावित्री** — प्रिय ? दृष्टैव विचारामि। तव सान्निद्ध्ये कण्टकावृतः मार्गः पुष्पाकीर्ण इव प्रतिभाति। सर्वमिदं काननं गन्धिलितं भाति।

**सत्यवान्** — देवि ? अयं मार्गः तरु-गुल्म-लता-परीतः वर्तते। मे हस्तम् अवलम्ब्य प्रविचल। (इति हस्तं ददाति)

सावित्री — प्रिय ! तव हस्तावलम्बनेन गहनं संसारं तरिष्यामि।

सत्यवान् — प्रिये ! अत्र पश्य !

**विचित्राणि वनान्यत्र रमणीयानि सर्वतः ।**
**मयूरगण-नृत्यानि पश्य त्वं विपुलेक्षणे ॥**

अस्मिन् वने कोकिलानां मधुरालापाः तव कण्ठस्वरोपमिताः श्रूयन्ते।

सावित्री — अत्र पश्यतु भवान् एताः निर्झरिण्यः।

**मधुर-सलिल-वाह्याः प्रांशु-शैलाग्र पाताः**
**तरल-हसित-फेनाः कङ्कणैः सज्जिताङ्गाः ॥**
**त्रिदिवमधरयन्त्यश्चारुरम्भादिरामाः ।**
**धरणिवसनभावैराविशन्तीव भान्ति ॥**

सत्यवान् — सावित्रि ! भवत्याः कल्पनेयम् असामान्या अन्येषाम् अनूह्या च। अत्र पश्य देवि,

**हरिणाः वायु-वेगेन धावमानाः परं भिया ।**
**प्लवन्ते मधुरं शून्ये पश्य त्वं हरिणेक्षणे ॥**

एते हरिणाः नयन-चाञ्चल्यमपहृत्य पलायमानाः इव दृश्यन्ते समीक्षस्व।

सावित्री — (विहस्य) प्रिय ! एते कोकनदाः सलिले सलीलम् अहिण्डमाना। प्रियाभिस्साकं नेत्रोत्सवं संजनयन्ति। मन्दवातेरितानि कुवलयदलानि आवां विलोक्य समुत्सुकानीव डोलायन्ते।

सत्यवान् — देवि ! सत्यमेव त्वदीया कल्पना। इतः पश्य। इदं सरोवरम्। अस्मिन् नव कल्हाराः नवारविन्दाः अभिनव-कुवलयानि विराजन्ते। मधुपानार्थं तव कुन्तलोपमिताः भ्रमराः मञ्जु गुजन्तः इतस्ततः धावन्ति मालिका-रूपेण। प्रिये इतः पश्य।

**नद्यः पुण्यप्रवाहश्च पुष्पितान् भूरुहोत्तमान् ।**
**मधुरं पश्य सावित्रि नेत्रोत्सवमिदं सरः ॥**

अपि च नद्यः सवेगं स्वप्रियं समुद्रम् आलिङ्गितुं कङ्कणस्वनैः धावन्ति। अयं नगेन्द्रः महोन्नतः महापुरुष इव तिष्ठति। विस्फारित-लोचना समालोकय।

**सावित्री** — प्रिय ! पश्यामि सर्वाणि नदी-जलानि सर्वतः यथोद्दिष्टानि अत्र भवता। सर्वाण्येतानि दर्शं दर्शं मे चेतः रसालवालं भवति।

**सत्यवान्** — प्रिये !

**विचित्र-शोभा तरु-वल्लरीणां तनोति सर्वत्र मनोज्ञवर्णैः।**
**शोभाम् अनिन्द्यां प्रविलोकितुं च पर्याप्तमासीन्नहि नेत्र-युग्मम् ॥**

अपि च रसालवालाः एते रसालाः काव्यात्मवत निगूढं विराजन्ते। इतः पश्य इदं दाडिमीफलं शून्ये योग-पुरुषवत् शीर्षासनं कुर्वत् सुफलता-प्राप्त्यर्थं तपति। (इति तर्जन्या दर्शयति)

**सावित्री** — नाथ, इदं शान्तम् अरण्यं विद्यते। सर्वमप्येतत् विधात्रा विचित्रितम्। :इदं सौन्दर्याणाम् आयतनम्। अनेन वनदेवता दर्शनेनैव मे मनोरथः फलति।

**सत्यवान्** — प्रिये ! सत्यमिदं वनं मनोरथान् साकारं करोति। यतः

**रम्यां विशालां प्रकृतिं विलोक्य रुग्णावृताश्शान्तिमवाप्नुवन्ति।**
**इयं सदा सर्व-कलाभिरामा रसार्द्र-चित्तं वितनोति नूनम् ॥**

अत्र पश्य कामैकरूपिणी मृगी प्रेम्णा मृगं शृङ्गेण कण्डूयते। सर्वत्र गहनं भावैः परं कामायते प्रिय। इतः कारण्डव-चक्रवाकाः तटाकसलिले मज्जनोन्मज्जनं कुर्वन्तः आरसन्ति। (सावित्रीं विलोक्य) देवि किमर्थं दूयमान मानसा विचारयसि ? उक्तं खलु मया कुसुम-कोमल-कोमलाङ्गीनां कण्टकवृत-पाषाण-प्रस्तर-निम्नोन्नत-प्रदेशेषु चलनम् अतीव दुःखदं भविष्यतीति। त्वया तत् न श्रुतम्।

**सावित्री** — न कोऽपि विचारः विद्यते नाथ। भवदीय-सन्तोषानन्द पारवश्यतां विलोक्य एतावत्कालं भवान् न किमपि उक्तवानासीत् मे। कथं भवतः हृदये रसात्मकतां गूढं निक्षिप्य मौनेन जोषमासीत् भवान् इति चिन्तयामि।

**सत्यवान्** — प्रिये ! मा विचारय । अत्र पश्य । अयं शमी वृक्षः । शमी शमयते पापम् इति लोकोक्तिः । अग्निरन्तर्हितोऽस्मिन् राजते । अस्य वृक्षस्य समिधः परमपवित्राः आहवनाय । ताः मत्परशुना खण्डयित्वा आनयेयम् । त्वम् अत्रैव तिष्ठः । (इति गत्वा पार्श्वे विद्यमानं शमीवृक्षं परशुना छिनत्ति । दक्षिण-हस्त-तर्जन्या ललाटोद्भूतं धर्मजालं संमार्जयन् बाधा-शब्दं करोति) प्रिये ! अनेन व्यायामेन मे शिरसि वेदना संजाता । (इति शनैश्शनैः चलितुम् अशक्य इव चलन् तत्रैव परशुं विसृज्य सावित्रीं गच्छति) देवि ! अनेन व्यायामेन शिरसि वेदना जाता । हृदयं दूयते । आत्मानम् अस्वस्थमिव लक्षये । शिरः शूलैः विद्धः इव भाति । अहं स्वप्तुम् इच्छामि । स्थातुं मे शक्तिर्नास्ति । सीदन्ति मम गात्राणि ।

**सावित्री** — प्रिय । एहि अत्र तव शिरः मे उत्सङ्गे निक्षिप्य स्वपस्व । (इति तस्य शिरः उत्सङ्गे निक्षिप्य उपविशति । चिन्ताक्रान्ता शून्ये पश्यति अश्रु स्रवन्ती)

(ततः प्रविशति पाशहस्तः आदित्य-समतेजः यमः)

**सावित्री** — प्रभो त्वां दैवतम् अभिजानामि । एतत् तव शरीरम् अमानुषम् । त्वं देवेशः इति मन्ये । ब्रूहि किं चिकीर्षसि ? कस्त्वम् ?

**यमः** — सावित्रि, त्वं पतिव्रताऽसि । तपसाऽन्वितासि । तस्मात् त्वयाभिभाषे । माम् आर्याः यमः इति ब्रुवन्ति ।

**भर्ता ते सत्यवान् एषः क्षीणायुः पुण्यजीवनः ।**
**नयामि तमहं बध्वा तदिदं मे चिकीर्षितम् ॥**

**सावित्री** — भगवम् ! तव दूताः मानवान् नेतुम् आगच्छन्ति इति लोके कथयन्ति । भवान् स्वयं कस्मात् समागतवान् अस्ति ? वदतु प्रभो ।

**यमः** — सावित्री । अयं सत्यवान् धर्मवान्, रूपवान्, सद्गुणसागरः मत्पुरुषैर्नेतुम् अयं नहि । तस्माद् एनं नेतुं स्वयमागतोऽस्मि (इति अङ्गुष्ठ-मात्रपुरुषं पाशैर्बध्नाति) गच्छाम्यहम् । (इति यमः गच्छति) (दुःखार्ता सावित्री यमम् अनुगच्छति)

* * *

# तृतीयं दृश्यम्

**सावित्री** — देवेश तिष्ठ। अत्र भवता प्रोक्तम् 'अयं सत्यवान् धर्मवान् रूपवान्' इति किमर्थं अस्य प्राणान् नयसि। (इति विलपति)

**यमः** — सावित्रि किमर्थं विलपसि। जयति मरणम् अवश्यमेव जन्तोः। किमिति मुधा कुरुषे विलम्बम्? कुरुष्वापरकर्म।

**सावित्री** — देवेश। किं प्रयोजनं सत्त्व-धर्म-रूपादिगुणैः।

**यमः** — (विहस्य) एते गुणाः केवलं महापुरुषगुणाः। महापुरुषा अपि पञ्चत्वं प्राप्नुवन्ति। सावित्रि। किं वृथालापैः प्रयोजनम्। निवर्तस्व और्ध्वदेहिकं कुरुष्व।

**सावित्री** — प्रभो, कुत्र गच्छेयम् अहम् एकाकिनी। कथं गच्छेयं विसृज्य पतिम् एनम्।

**नीयते यत्र मे भर्ता स्वयं यत्रैव गच्छति।**
**गन्तव्यं च मया तत्र धर्मोऽयं त्र सनातनः॥**

**यमः** — सावित्रि, आमरणमन्योन्यमनुगमनं सहवासश्च कर्तव्यः। इति लोकरीतिः। मरणानन्तरं शरीरधारिणाम् अनुगमनम् असंभवम्।

**सावित्री** — यमराट्। अहं ममात्मना तमनुगच्छेयम्। बन्धनम् एतत् अच्छेद्यं समवर्ति। अहं पतिव्रताऽस्मि।

**यमः** — अनेन शरीरेण त्वं नागन्तुमर्हसि। निवर्तस्व सावित्रि।

**सावित्री** — प्रभो परेतराट्। तपसा, भक्त्या, भर्तुः स्नेहात्, व्रतेन च तव प्रसादेन मे गतिः न प्रतिहता भवेत्।

**यमः** — सावित्रि। मेऽत्र स्थातुं समयो नास्ति। अतीव विलम्बः भवति। सत्वरं मया गन्तव्यं, निवर्तस्व। (इति गर्जति)

**सावित्री** — प्रभो, मैत्रं साप्तपदमाहुः बुधाः। मित्रतां पुरस्कृत्य किञ्चिद् वक्ष्यामि तत् शृणु। सर्वेषामपि धर्मः प्रधानः इति सन्तः कथयन्ति। तस्माद् धर्मम् आचार।

**यमः** — सावित्रि! तव अनया गिरा अतीव तुष्टोस्मि। निवर्तस्व।

ते वाणी स्वराक्षर-व्यञ्जन-करुण-रस-हेतु-युक्ता। वरं वृणीष्व। विनास्य जीवितं ददानि ते।

सावित्री — प्रभो! तव प्रसादात् मे श्वशुरः लब्ध-चक्षुः बलवान् भवेत्।

यमः — आनन्दिते! ददानि तेऽहं वरं यथाभिलषितम्। निवर्तस्व। न ते श्रमो भवेत्।

सावित्री — मे भर्तुसमीपतः श्रमः कुतः। यत्र पतिं नेष्यसि तत्र मे गतिः।

यमः — सावित्रि! यद् इदं बुध-बुद्धि-वर्धनं वचनं त्वयोक्तं तत् मनोऽनुकूलं हिताश्रयं पुनः सत्यव्रत-जीवितं विना, द्वितीयं वरं वरयस्व भामिनि।

सावित्री — मे श्वशुरः हृतं राज्यं लभतु द्वितीयं वरं वरयामि।

यमः — स्वयमेव नचिरात् राज्यं प्रतिपत्स्यते। निवर्तस्व ते श्रमो न भवेत्।

सावित्री — शमन! मे न कोऽपि श्रमः। मम पृथिवीपतिः अनपत्यः पिता भवेत्। पितुः पुत्रशतं तथौरसं भवेत्। कुलस्य संतानकरं च यद् भवेत् तत् तृतीयमेतत् वरयामि ते वरम्।

यमः — पतिव्रते! त्वं दूरं पथः समागतासि। ते पितुः कुलस्य संतानकरं सुवर्चसं सुतानां शतं भवतु। निवर्तस्व।

सावित्रीः — प्रभो न दूरमेतत्। मम भर्तुः सन्निधौ मे मनः अस्ति मयोच्यमानं भूयः शृणु।

**विश्वासो जायते तत्र सौहृदं यत्र विद्यते।**
**विश्वासं कुरुते तस्मात् जनः सत्सु विशेषतः॥**

यमः — अङ्गने! उदाहृतं ते वचनं मया न श्रुतं त्वदृते। तस्मात् तुष्टोऽस्मि। विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ।

**सावित्री** — समवर्ति ! ममात्मजस्य सत्यव्रतः औरसस्य बल-वीर्य-शालिनां कुलद्वहं सुताना शतं भवेत् इति चतुर्थं वरं वरयामि ।

**यमः** — अबले !

**शतं सुतानां बल-वीर्य-शालिनां तवाबले प्रीतिकरं भविष्यति ।**
**नृपात्मजे ते न परिश्रमोऽस्तु दूरं निवर्तस्व पथस्त्वमागता ।।**

**सावित्री** — यम ! सन्तः सूर्यं सत्येन नयन्ति । भूमिं तपसा धारयन्ति । भूत-भव्यस्य ते गतिकारकाः भवन्ति ।

**यमः** — सर्व-मङ्गले !

सुपदं महर्थवन्तं मनोनुकूलं धर्म-सहितं यथा भाषसे तथा त्वयि मे भक्तिः उत्तमा भाति । तस्मात् पतिव्रते अप्रतिमं वरं वृणीष्व ।

**सावित्री** — प्रभो !

भर्तारं विना सुखं, दिवं, श्रियं च न कामये । भर्तृहीना जीवितुं न व्यवसामि । दयान्तरङ्ग ! शतपुत्रता मम त्वयैव दत्ता । मे पतिः ह्रीयते । तस्मात् सत्यवान् अयं जीवतु इति वरं वृणे । तव वचनं सत्यं भविष्यति ।

**यमः** — भद्रे !

**भर्ता तेऽयं मया मुक्तः यास्यतामिह शोभने ।**
**वाक्यैर्धर्मार्थ-संभूतैस् तोषितोऽहं त्वया भुवि ।।**

ते सर्व-मङ्गलानि भवन्तु । (इति यमः प्रतिनिवृत्तः)

(यवनिका पतति)

* * *

# चतुर्थं दृश्यम्

(सावित्री प्रतिनिवृत्य भर्तारम् उपसृत्य उपगृह्य च उत्सङ्गे शिरः आरोप्य भूमावुपशति)

सावित्री — प्रिय, उत्तिष्ठ। किं चिरं स्वपिसि। अपगत-श्रमः न भूतोऽसि ? (इति हस्तेन शिरः स्पृशति)

सत्यवान् — प्रिये सुप्तोऽस्म्यहो। सुचिरं नावबोधितः। किमर्थं पुरुषोऽसौ शयानं मां चकर्ष।

सावित्री — प्रिय। कि त्वं स्वप्नं दृष्टवानसि ? उत सत्यं ब्रवीषि ?

सत्यवान् — देवि। मम नाम सत्यवान्। सत्यं ब्रवीमि। एषः स्वप्नः नहि। अतिभीकरं स्पृहणीय-रूपिणं पुरुषं सूर्य-प्रभा-भास्करं श्यामाकृतिं समक्षम् अपश्यम्।

सावित्री — पुरुषर्षभ, ममाङ्के सुचिरं त्वं प्रसुप्तोऽसि। सः प्रजासंयमनः यमः देवः। सः महाभागः गतः। विगाढां शर्वरीं पश्य।

सत्यवान् — दवि, सुमध्यमे। त्वया सह फलाहारार्थं निष्क्रान्तः। काष्ठं पाटयतः मे शिरसः रुजाऽभवत्। शिरोभिताप संतप्तः चिरमशक्नुवन् तवोत्सङ्गे प्रसुप्तोऽस्मि। जानाम्यहं सर्वम्। त्वया उपगूढस्य मे मनः निद्रापहृतम्। ततः अपश्यं तमोघोरं पुरुषं महौजसम्। देवि यदि त्वं जानासि, किं तद् ब्रूहि मे। दृष्टः यदि स्वप्नः ? नोचेत् सत्यमेव तत्।

सावित्री — अनघ। श्वः ते सर्वं यथावृत्तम् आख्यास्यामि। उत्तिष्ठ। भद्रं पितरौ ते पश्य। रजनी विगाढा। दिवाकरः निवृत्तः। नक्तंचराः चरन्ति। मृगाः विचरन्ति। दक्षिणस्यां दिशि उग्राः शिवाः घोरं विरुवन्ति। मे मनः कम्पते।

सत्यवान् — देवि। इदं वनं घनेन तमसावृतम्। पन्थानं न विज्ञास्यावः। न शक्ष्यावः गन्तुम्।

सावित्री — नाथ। श्वः प्रभाते गच्छावः। इह वसावः। यदि रुचितं वनमिदं ते, क्षपाम् एकां यापयावः।

**सत्यवान्** — सावित्रि । मे शिरोबाधा निवृत्ता । मेऽङ्गानि स्वस्थानि लक्ष्यन्ते । अधुना माता पितृभ्यां मिलितुमिच्छामि अत्रैकं क्षणम् अपि न स्थास्यामि । माता वृद्धा । पिता वृद्धः । अहमेव तयोः यष्टिः । यदि तौ माम पश्यन्तौ कामवस्थां गमिष्यतः । मातापितृभ्यां विना नाहं जीवितुमुत्सहे । तौ द्वौ मया भर्तव्यौ । तयोः प्रियं कर्तव्यमिति जानामि सावित्रि । पित्रोः दर्शनं कामये । गच्छावः आश्रमान्तिकम् ।

**सावित्री** — (उत्थाय केशान् संयम्य पति बाहुभ्याम् उत्थापयति । सत्यवान् उत्थाय पाणिना अङ्गानि प्रमृज्य सर्वाः दिशः समलोकयाति ) प्रिय । श्वः फलानि आहारिष्यसि ? ते योगक्षेमार्थम् । एतं ते परशुम् अहं नेष्यामि । (इति परशुं गृहीत्वा पुनः भर्तुः सकाशमागत्य वामस्कन्धे भर्तुः बाहुं निक्षिप्य दक्षिणेन तं परिष्वज्य प्रस्थिता)

**सत्यवान्** — देवि । अहं स्वस्थोऽस्मि । बलवानस्मि । उभौ पितरौ दिदृक्षुः अस्मि । (इति प्रस्थितौ)

(यवनिका पतति)



# ।। काव्यावतरणम् ।।

यस्तं पुरा नारददर्शनेन । निर्मुक्तपापस्तपसा पुनीतः ।
वाल्मीकिनाम्ना प्रथितोलिलेख । रामायणं विश्वकविं नमामि ।।

नान्द्यन्ते

**सूत्रधारः** — ( नेपथ्याभिमुखं विलोक्य ) आर्ये इतस्तावत् ।

**नटी** — ( प्रविश्य ) आर्य, इयमस्मि । निवेद्यतां किं करणीयं विद्यते मम ।

**सूत्रधारः** — हञ्जे ! अत्र परिषदियं गुणग्राहिणी विभाति । अयंतु शरत्कालः । किञ्चित् गीयतां रसिकमनोरञ्जनाय ।

**नटी** — गायनस्य निदानमिदानीं किं विद्यते ।

**सूत्रधारः** — हञ्जे, कारणं विना नाहं कथयामि किमपि । श्रृणु, वयं काव्यावतरणं नाम नाटकं प्रयोक्तुं अभिलाषामः ।

**नटी** — आर्य, प्रथमतः कविपरिचयं विधाय अनन्तरं नाटकप्रयोगः कर्तव्यः ।

**सूत्रधारः** — जानाम्यहं सर्वं । श्रृणु । अयं कविः गीर्वाणान्ध्रभाषा प्रवीणः । ललित गीतालहर्याः, यशोधरा महाकाव्यस्य अपिच अक्षयगीत रामायणस्य प्रणेता । तस्याभिधानं परीक्षित् शर्मा ।

**नटी** — सर्वमपि श्रोतुं परमानन्ददायकं प्रतिभाति मे । कस्मिन् रागे, कं विषयमुद्दिश्य गातव्यं अदिशतु भवान् ।

**सूत्रधारः** — प्रिये, पूर्णचन्द्रिकारागे शारदामुद्दिश्य गीयतामिति मे आदेशः ।

**नटी** — श्रूयतां पूर्णचन्द्रिका शारदम् ।

**शारदा भाति विश्वेऽस्मिन् । प्रसन्नगुण माधुरी ।**
**यथाऽदिकवि छन्देषु । दृश्यमानेव दिव्यता ।।**

**सूत्रधारः** — ( करतल ध्वनिं कृत्वा ) यथासंदर्भं सम्यक् गींतं भवत्या। ( मुखमुन्नमय्य श्रवणमभिनीय ) आर्ये पश्य, अत्र छात्राणां वेदघोषः संश्रूयते। अस्मदीय गानेन, सल्लापेन च तेषां मनोविकारः मा भूयात्। एहि निश्शब्दगत्या आवां गच्छावः। ( इति निश्शब्दगत्या शनैः शनैः गच्छतः )

( मध्ये गुरुः, अर्धचन्द्राकारेण शिष्याश्च उपविष्टाः सन्ति। ते सर्वे गुरुणा प्रोक्तं मन्त्रं द्विवारं उच्चरन्ति। गुरुः नेत्रे निमील्य कथयति )

**गुरुः** — अग्निमीळे पुरोहितं ( इति कथयति )

**सर्वेबालाः** — ( एक स्वरेण तन्मत्रं अनुवदन्ति )

**गुरुः** — यज्ञस्य देवमृत्विजम्।

**सर्वेबालाः** — ( एक स्वरेण अनुवदन्ति )

**गुरुः** — होतारं रत्नधातमम्।

**सर्वेबालाः** — ( अनुवदन्ति )

( रत्नाकरः तदर्धचन्द्राकारमण्डलात् शनैः शनैः चोरः इव निश्शब्दगत्या निर्गच्छति )

**गुरुः** — ( नेत्रे उद्घाट्य ) अरे छात्राः मन्त्रमेनं कण्ठपाठं कृत्वा श्वः पुनः मां निवेदयन्तु। ( इत्युक्त्वा सर्वान् निर्निमेष दृष्ट्या विलोक्य ) अयि बालाः रत्नाकरः कुत्र गतः ?

**बालाः** — ( परस्परं अन्योन्यावलोकनं कृत्वा निश्शब्दं मूकीभावेन आसन् )

**गुरुः** — रत्नाकरः कुत्र गतः कथयन्तु। ( इति तान् वेत्रेण भर्त्सयति )

**बालाः** — ( भीताः ) वयं न जानीमहे।

**गुरुः** — यूयं जानीथ किन्तु न कथयथ। ( इत्युक्त्वा तान् दण्डेन ताडयितुं नाटयति )

**बालाः** — अयि भोः तत्र भवान् मा ताडयतु अस्मान्। वयं कथयिष्यामः। (इति अन्योन्यं पश्यन्ति)

**कनिष्ठः** — (भीत्या) गुरो अयं रत्नाकरः। (इति अर्धोक्त्या विरमति)

**गुरुः** — किमर्थं विरमसि कथय पूर्णं।

**कनिष्ठः** — (सर्वान् बालान् विलोक्य भीत भीतः) गुरो अयं रत्नाकारः अधुना अस्मान्मार्गात् मार्जाल इव दुद्राव। (इति हस्तेन दर्शयति)

**गुरुः** — बत अयं संस्कारवतां पुत्रः। अयं शिक्षणाचोरः जातः। बुद्धिः कर्मानुसारिणी। गुरुं मां तृणीकृत्य ममनेत्रयोः मिरीचिकाचूर्णं विकीर्य मार्जाल इव पलायितः। अयं साधुमार्गगामी न कदापि भविष्यति। अयं दुर्जन इव परिणतः। प्रायेण बाल्ये केवलं गुणाः प्रफुल्लन्ति जगति प्राणिनां। अयं दुष्ट सहवासं करोति। मद्य मांसादिकं भुङ्क्ते। दीव्यति अक्षशालासु। पिबति पानशालासु। अयं वैदिक साम्प्रदायस्य धूमकेतुरिव जातः। (इति पृष्ठभागे वेत्रहस्तः हस्तौ बद्ध्वा इतस्ततः द्विवारं चलन् छीं छीं शब्दं करोति)

**कनिष्ठः** — गुरो अयं भिल्लवर्गैः सह निवसन् अकार्यं करोति इति जनाः कथयन्ति।

**गुरुः** — किं कथयसि रे त्वं? (कर्णौ पिधाय) अश्रवणीयं श्रुतं मया। यूयं सर्वे गच्छथ गेहं। (इति तान् हस्त संज्ञया निदिशति, सर्वे छात्राः उत्थाय) नमांसि भोः। (इति नमस्कृत्य गच्छन्ति)

(गुरुः चिन्ताक्रान्तः वृक्षमूले उपविश्य एवं स्वगतं वदति)

अयं सोमयाजिपुत्रः। तौ दम्पती मे सकाशं बालं संस्कारार्थं, वेद पठनार्थं प्रेषितवन्तौ। तौ दम्पती न जानीतः अयं दुष्टमार्गगामी इति। अयं मत्सकाशात् निर्गतः। अहं ताभ्यां किं निवेदयेयं। अहं अवश्यं अप्रतिष्ठां भजामि। अहो बत (इति विचारयन् आस्ते।

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

( तमसा नदीतीरः : तत्र पौराः आगत्य पानीयादिकं नयन्ति )

**गिरिजनः** — ( स्नात्वा ललाटे भस्म धारणं विधाय एकत्रोऽपविष्य सूर्यनमस्कारान् कुर्वन् सूर्यं प्रार्थयति )

**हरिजनः** — ( स्नात्वा शुचिर्भूत्वा ) भो लोकबान्धव अंशुमालिन् त्वमेव प्रत्यक्षं ब्रह्मासि। ( इति अर्घ्यं दत्वा नमस्करोति )

**क्षेत्रपालकौ** — ( परस्परं भाषमाणौ प्रविशतः )

**समीरः** — अरे सुहृद्, सोमयाजिपुत्रः रत्नाकरः ह्यः पान्थान् भर्त्सयित्वा, तेभ्यः वस्तुचयं अपकृष्य तान् ताडयित्वा पलायितः इति सर्वं ग्रामः मुक्तकण्ठं घोषयति।

**प्रभाकरः** — अरे समीर त्वं किं वदसि सोमयाजि वैदिकः, अग्नि इव पवित्रः। तस्य वंशः सर्वः वेदमार्गदर्शितजीवने रतः। तस्य पुत्रः एवं करोति किं? श्रुत्वैतत् मे परमाश्चर्यं भवति। बत किं कष्टमापतितं सोमयाजिकुटुम्बस्य।

**समीरः** — मित्रं, बाल्ये सहवासः उत्तमः यदि भवेत् सर्वोऽपि उत्तमः भविष्यति। सहवासेन गुणाः दोषाश्च संजयन्ते। किन्तु न जन्मना। तव कथनं मे अङ्गीकार्यं भवति। मयापि श्रुतं किन्तु इदमित्थं इति वक्तुं अशक्तः भवामि। यदि सोमयाजी श्रोष्यति पुत्रकस्य वक्रमार्गगमनं सः लोकमिमं संत्यक्षति।

**प्रभाकरः** — तत् सत्यमेव। सः निष्ठावान् ब्राह्मणः ब्राह्मणः लौकिक व्यवहाराय प्राधान्यं न ददाति। यदि ब्राह्मणः लौकिक व्यवहाराय प्राधान्यं दत्वा जीवति, सः ब्राह्मणः नहि, किंतु पशुप्रायः भवति।

**समीरः** — सत्यं, यः लौकिकव्यवहाराय प्राधान्यं न ददाति स एव ब्राह्मणः। अब्राह्मणाः सर्वेऽपि लौकिक व्यवहारकर्दमे निमग्नाः जगत् शाश्वतमिति मत्वा कृत्याकृत्यं स्वार्थाय कुर्वन्ति।

**प्रभाकरः** — अयं विप्रः केवलं वैदिकः। लौकिक व्यवहारं गर्हति। तस्मात् मे हृदयं तस्मिन् विप्रे अत्यन्तं स्निह्यति।

**समीरः** — सः वेदपुरुषः। ब्राह्मीमय मूर्तिः। मूर्तीभूत भारतीय संस्कृतिः। यदि सः पुत्रस्य कथां श्रोष्यति तर्हि सुवर्ण शलाक इव तापेन द्रविष्यति। अयमेव अस्मदीय ग्राम रक्षकः। अयं अनवरत वैदिक मन्त्रोच्चारणैः ईतिबाधाभ्यः सर्वान् रक्षयति। अयं सत्यं पुरोहितः। तस्य सर्वं शुभं भूयात् इति मदीया भावना। बत मानवः कथं जगति परिवर्तते। ( इति चिन्ताक्रान्तः अधोमुखः भवति )

**प्रभाकरः** — अरे समीर पश्य सोमयाजी स्नानार्थं इतः एव आगच्छति। तस्मै, पुत्रकस्य दशां कथयिष्यावः। एहि आवां अत्र तिष्ठावः। ( इति तस्य हस्तमवलम्ब्य एकस्मिन् मूले तिष्ठतः।

( नेपथ्ये मन्त्रोच्चारणं भवति )

**सोमयाजी** — यच्चकिञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणास्थितः।

**प्रभाकरः** — समीर, सोमयाजी समायाति, आवां गत्वा तस्य पुत्रस्य वर्तनादिकं तस्मै निवेदयावः यदि आवां तथा न कुर्वः तस्य द्रोहकारिणौ भवेव।

( ततः प्रविशति सोमयाजी )

**प्रभाकर-समीरौ** — आवां भोः अभिवादयावहे। ( इति नमस्कुरुतः )

**सोमयाजी** — शुभं भूयात्। ( इति आशीर्वादान् प्रयच्छति ) किं मित्रे अपि कुशलिनौ भवन्तौ ?

**प्रभाकरः** — भवतां सत्कामनया परमेश्वरकृपया आवां नहिकेवलं, किन्तु सर्वे जनाःससुखं सन्ति। किन्तु........ ( इत्यर्धोक्त्या )

**सोमयाजी** — कथयतु भवान्।

**प्रभाकरः** — श्रुत्वा तत्र भवान् कृत्यो माभूयात् इति आवयोः प्रार्थना।

**सोमयाजी** — कथयतु निश्शङ्कम्।

**समीरः** — तत्र भवतां सुतः रत्नाकरः दुष्टवर्गैः सहवासं कुर्वन् गर्हितं शिष्टजननिन्दितं कर्म करोति।

**प्रभाकरः** — अयि वेदमण्डित। ह्यः रत्नाकरः पथिकान् ताडयित्वा तेभ्यः

वस्तुचयं चोरयित्वा दुधाव। सः सुतरां असन्मार्गगामी बभूव। तत्र भवान् बालकं योग्य पद्धत्यां सन्मार्ग गामिनं करोतु इति आवयोः विज्ञप्तिः।

**सोमयाजी** — ( निर्विण्णः पाण्डुतांगत-वदनमण्डलः ) अयि भोः मित्रोत्तमौ अहं अतीव कृतज्ञः भवतोः। तथैव करिष्यामि। भवन्तौ देशक्षेमकल्याणार्थं प्रयतवन्तौ पौरौ। अवश्यमहं भवदुदीरितं यथायोग्यं अनुवर्तिष्ये। ( इति गच्छति )

**समीरः** — आवां सदिच्छया अकरवाव। तत्र न कापि स्वार्थभावना विद्यते कस्यापि। एहि गच्छावः। ( इति गच्छतः )

( यवनिका पतति )

* * *

# तृतीयं दृश्यम्

( सोमयाजिगृहम् : सोमयाजी यज्ञोपवीतेन शरीरं कण्डूयमानः पत्न्यासाकं भाषते, तस्य पत्नी गुणवती तण्डुलान् विचन्वन्ती उपविशति )

**सोमयाजी** — हञ्जे गुणवति तव पुत्रः रत्नाकरः यथाविधि उपनीतः।

**गुणवती** — हां उपनीतः अधुना सा प्रसक्तिः कुतः।

**सोमयाजी** — कुतः ? तव नेत्रोन्मीलनाय करोमि।

**गुणवती** — मम नेत्रोन्मीलनाय उत आवयोः नेत्रोन्मीलनाय। कथयतु भवान्।

**सोमयाजी** — सः गुरुकुलं प्रेषितः शिक्षणाय।

**गुणवती** — हां प्रेषितः। ततः।

**सोमयाजी** — किन्तु सः गुरुं तिरस्कृत्य भिल्ल वर्गैस्सह शबरालयेषु आहिण्डमानः मत्स्यमांसादिकं भक्षयन् सुरापानं कुर्वन् आरण्यको भूत्वा कितवो भूत्वा दीव्यन् भ्रष्टः संजातः।

**गुणवती** — अपिच।

**सोमयाजी** — बहु श्रुतं मया। शृणु। सः निर्दयं पान्थान् व्यापाद्य तेभ्यः धनादिकं अपहृत्य अकृत्यानि विधास्यन् वंशगौरवं नाशयति।

**गुणवती** — इति भवान् कथयति।

**सोमयाजी** — नाहं कथयामि लोकः कुक्कुटो भूत्वा विरौति मुक्तकण्ठं, तत् श्रोतुं मे दुर्भरं भवति।

**गुणवती** — केनोक्तं, कथं, कदा, कुत्र श्रुतम्।

**सोमयाजी** — अद्य तमसातीरे मयि गच्छतिसति ग्रामीणाः सज्जनाः परस्परं भाषमाणाः मां विलोक्य मत्सकाशं समेत्य सविस्तरं अकथयन्।

**गुशवती** — तदा किं कृतं भवता ?

**सोमयाजी** — तदा शान्तमत्या श्रुतं मया।

**गुणवती** — ततः।

**सीमयाजी** — तच्छ्रवणेन मम शिरः अधोमुखं बभूव।

**गुणवती** — ततः।

**सोमयाजी** — सर्वमपि मे शरीरं रक्तौष्णिक्येन अग्नौ पतित समिदोपमं बभूव।

**गुणवती** — लोकः काकोभूत्वा यत्किमपि रटति तत् अस्माभिः न श्रेतव्यम्।

**सोमयाजी** — लोकापवादः विना च कारणं न भवति। सर्वस्यापि कारणं आस्ते।

**गुणवती** — अयि भोः। केषांचन जगति न किमपि कार्यं भवति, विना च परगृह छिद्रान्वेषणं, सज्जन-जनजीवन कज्जलीकरणं च।

**सोमयाजी** — तथामावद जनालिमुद्दिश्य यतः।

**वेदोपबृंहित नितान्त पवित्र धर्मं।**
**धर्मोपजीवित लसत्तर देशभावं।**
**भावानुवर्धित जनालि सुवाक्य जालं।**
**श्रुत्वा मदीय हृदयं विशदं विभाति॥**

(तस्याः सकाशं आगत्य) कथं न श्रोतव्यं। त्वं कुमार जीवित नाशनं करोषि पुत्रप्रेम्ना। पुष्यरागखचित सुवर्णाङ्गुलीयकं मदीयगृहे अन्तर्हितं बभूव। तत् गृहे कथं अन्तर्हितं भविष्यति।

**गुणवती** -- भवता तत्र पीठोपरि न्यसितं मूषकैः मुष्णीतं इतिमन्ये। नोचेत् कः ग्रहिंष्यति स्वगृहे।

**सोमयाजी** — कः ग्रहिष्यति? विद्यते खलु राहुग्रहः गृहे स एव मूषकः नतु मूषकः।

**गुणवती** — तथा मा वदत। लोकः नखमात्रं विद्यमानं शिखरीकृत्य कथयति यत् किमपि तत् न श्रोतव्यम्। श्रुत्वाऽपि अपश्रुतिरिव अश्रुतमिव नटितव्यम्।

**सोमयाजी** — हञ्जे त्वं सुतप्रेम्ना कुमारोपरि मक्षिकापातनमपि न सहसे, तस्मात् अस्तव्यस्तं भाषसे। तत् सर्वं तव शोभते। नतु मम।

**गुणवती** — अहं किं कुर्यां। अहं अनेकधा सुतं अनार्यसङ्गमात् निवारयितुं प्रायतम्। किन्तु सः दिने दिने अधमः संजातः। सः कालक्रमेण साधुमार्गगामी भविष्यतीति अनेक स्वप्नान् अपश्यम्। किन्तु सर्वे दिवास्वप्नाः जाताः। (इति रोदिति)

**सोमयाजी** — रोदि उच्चैः रोदि। स्त्रियः रोदनेन जयन्ति लोकम् (हस्तचालन क्षेपैः अभिनयन्।

**मञ्जुवाग्विभव भावचयेन। हावभाव दरहास भरेण।**
**लोकमेवहि सदा वनिताश्च। रोदनायुध बलेन जयन्ति॥**

अपेहि मम सम्मुखात्। "अनार्यसङ्गमात् वरं विरोधोऽपि समं महात्मभिः"। कुलगौरवः भस्मचये पतितः। देशगौरवः कर्दमितः। एवं न कदापि समालोचितम्।

**गुणवती** — (चिन्ताक्रान्त मनसा) एषा मन्द भागिनी नवमासायासखेदं अनुभूय असूत पुत्रम्। भवद्भिः साम्प्रदायानुसारं नामकरणादिकं वैदिकपद्धत्या विधत्तम्। अन्ततः सर्वं एवं परिणतम्। अत्र आवयोः द्रोषः न विद्यते। "विनाशकाले विपरीत बुद्धिः" इति आर्योक्ति सत्यं प्रतिभाति।

**सोमयाजी** — भुवि सकल जन्तवः पूर्वजन्म कर्मानुसारं विचारयन्ति। पितरः जन्महेतवः न तु धिषणा दातारः।

**गुणवती** — ज्ञानदातारं गुरुं तिरस्कृत्य भिल्लवर्गैः साकं पलायितः । किं दारुण-मध्यवसितं कुमारेण ।

**सोमयाजी** — तस्मात् शास्त्राणि कथयन्ति एकः पुत्रः मास्तु किन्तु पितरौ बहुपुत्रकौ भवितव्यौ इति । यदि एकः पुत्रः सः वक्रमार्गगामी भवेत् तर्हि वंशगौरवः देशगौरवश्च नष्टौ भविष्यतः । यदि अनेक पुत्राः भविष्यन्ति तेषु एकः वंशगौरवकारः देशौन्नत्य कारकश्च भविष्यति । तस्मात् सर्वं साधु विचिन्त्य पूर्वजैः कथितम् । ते पर-मार्थ दर्शकाः । तेभ्यः नमोवाकं प्रशंशास्महे । ( इति हस्ताबुद्यम्य नमस्करोति )

**गुणवती** — एकः रत्नाकरः वंशोन्नतिं देशोन्नतिं च कल्पयिष्यतीति वैद्युतायमाना विचारधारा तिरोहिता जाता । वयं कर्तुमेकं उद्यताः दैवमन्यत् विदधाति । अपत्यान्तरमपि नास्त्यावयोः । आवां सर्वथा अपत्यहीनौ जातौ ।

**सोमयाजी** — तस्मात् धर्मवादिनः एक पुत्रत्वं अनपत्यत्वं इति आहुः । चक्षुरेकस्य पुत्रैकस्य अस्तित्वेऽपि नास्तित्वमिति प्राहुः । चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः इति । अपि च अग्निहोत्रं त्रयीविद्या संतानमपिचाक्षयम् इति धर्मशास्त्रं । बलीयसी केवलमीश्वरेच्छा । ( इति मञ्चे उपविशति )

**गुणवती** — ( तस्य सकाशमागत्य ) मा कुरुत विचारं । यत् भवितव्यं तत् भविष्यति ।

**सोमयाजी** — हञ्जे किमस्ति ते मातृभावना ? यदि मातृभावना तवास्ति त्वं एवं न भाषसे ।

**गुणवती** — स्त्रीषु दोषमारोपयन्ति पुरुषाः । ते बाधां व्यक्तीकरिष्यन्ति पद-जालैः । जगति सर्वासां मातॄणां वात्सल्यं भवत्येव । संस्कृतज्ञैः वेदवेदाङगविद्भिः भवद्भिः न श्रुतं किं ? कुपुत्रो जायेत क्वचिदपि कुमाता न भवति । ( इति अन्तः गच्छति )

**सोमयाजी** — ( शान्तभावेन पठति )

भद्रं कर्णेभिः शृणु यामदेवाः
भद्रं पश्येमाक्षभिर्यजत्राः
स्थिरं रङ्गै स्तुष्टु वागुं स्वस्तनूभिः
( इति पठन् आस्ते )

( यवनिका पतति ) * * *

# तृतीयं दृश्यम्

( भिल्लाः मद्यं पीत्वा नृत्यन्ति। तेषां दक्षिणहस्तेषु पानपात्राणि विद्यन्ते। वामहस्तेषु आयुधाः विद्यन्ते। ते किञ्चित् सुरां निपीय गायन्ति नृत्यन्ति च )

**सुधीरः** — पहाडी रागे गीतं गायते।

**चन्द्रिका सुहासिनी चचार यौवने**
**चन्द्रमाश्चिरं जहासपुष्करे** ध्रु.

**चित्तमेव मद्यपान रागरञ्जितं रे**
**सर्वमेव घूर्णितं विभाति साम्प्रतं रे** १

**गच्च गच्छ जहि जहि मार्ग गामिनम्**
**विचर प्रहर निर्दयं पान्थ मण्डलम्** २

**विहर कुरुरे सर्वदा सौख्य जीवनम्**
**जहाहि रे दयार्द्र मानसं च निर्दयम्** ३

( रत्नाकरः बहिरागत्य मण्डलात् इतस्ततः दत्तदृष्टिः एकत्र एकत्रित दृष्टिः वदनानिल वेणुना शब्दं करोति। तत् श्रुत्वा सर्वे तेन सार्थं धावन्ति )

( द्वौ भिल्लौ तत्रैवस्थित्वा पिबन्तौः भाषन्तौस्थः )

**रक्तगन्धः** — अरे वसागन्ध ( इति तस्य समीपं गत्वा ) अयं रत्नाकारः अस्मात् भिल्लवर्गात् अपेक्षया स्वयं हनन कर्मणि, घातुककृत्य करणे सिद्धहस्तः। अयं अतीव कठोरः निर्दयश्च। हननकर्मणि यत् संपाद्यते तत् सर्वं स एव गृहणाति। अन्येभ्यः न किञ्चिदपि ददाति।

**वसागन्धः** — अरे रक्तगन्ध। तदेवाहमपि चिन्तयामि। एनं अस्मात् वर्गात् निष्कास्य सर्वमपि वयमेव अनुभोक्ष्यामः इति अस्मदीय यूधकानां संभवना।

**रक्तगन्धः** — सर्वस्यापिकर्मणः समयः भवति। समयं प्रतीक्ष्य प्रवर्तनीयं भवति। तं अस्मात् प्रदेशात् निष्कास्यामः समयं निरीक्ष्य।

**वसागन्धः** — अरे वक्तुं सुकरमिदं, कर्तुं दुष्करं भवति। अयं अतीव बल-

संपन्नः क्रूरः यदि सः ज्ञास्यति अस्मदीयभावनां तर्हि अस्मान्सर्वान् मत्कुणान् इव पादाङ्गुष्ठेन नाशयिष्यति ।

**रक्तगन्धः** — एतत् कर्म अन्य वस्यैः विचार्य सावधानतया करिष्यावः ।

**वसागन्धः** — अन्येवयस्याः अशने अग्रेसराः किन्तु न हनने । इदानीं रक्ता-करस्य करुणया द्विवारं उदरपूरं खादावः । यदि सः गमिष्यति तर्हि क्षुद्बाधया आवां अत्रैव मरिष्यावः । एतादृशी विचारणा अयोग्या आवयोः ।

**रक्तगन्धः** — जानामि सर्वं । किन्तु प्रसङ्गवशात् तदा तदा अप्रस्तुत प्रशंशापि करणीया भवति ।

**वसागन्धः** — अरे अयं विषयः अधरमवतीर्य न गन्तव्यः । यदि विषयः अधरमवतरति तर्हि पृथिवीं उल्लन्ङ्घयिष्यति । आवां निन्दापात्रौ भविष्यावः । अनन्तरं तेन यमसदनं प्रापितवन्तौ भवेव ।

**रक्तगन्धः** — अरे अयं आवयोः स्वविषयः । सर्वः सर्वथा स्वार्थं समीहते ।

**वसागन्धः** — अरे सर्वेऽपि तमनुसरन् । एहि आवामपि गच्छावः । भाषणेन किं प्रयोजनं भवति । भाषणेन क्षुधोपशान्तिः भवति किं ? विरम भाषणं तमनुसरावः एहि ।

**रक्तगन्धः** — ते सर्वे बहुदूरं गताः अधुना आवां तान् अनुसर्तुं अशक्ताः भवेव ।

**वसागन्धः** — यदि तान् नानुसरावः अद्य उपवासः भविष्यति आवयोः ।

**रक्तगन्धः** — आवां उच्छिष्ठ खादकौ । यदि आवां न गच्छावः उत गच्छावः सर्वदा अस्माकं उच्छिष्ट एव लभिष्यति तस्मात् गमने नार्थः ।

**वसागन्धः** — न गम्यते आवाभ्यां तर्हि उच्छिष्ठमपि लब्धुं दुष्करं भविष्यति । तदुच्छिष्टं वायसमशकादिभिः भुज्यते नावशेषम् ।

**रक्तगन्धः** — अरे त्वं लौकिकोसि । अत्यन्त व्यवहारी असि । तवोक्तिमनु-सृत्य गमनं वरं भवति मे । गच्छ तानेव अनुसरिष्यावः । ( इति गच्छतः )

( यवनिका पतति )

* * *

# चतुर्थं दृश्यम्

( अरण्ये दुर्गमस्थानं तत्र पार्श्वतः पादमार्गः बिद्यते तस्मात् मार्गात् उत्तरेण न्यग्रोधतरुः विद्यते तत्र हस्ते दृढं लगुडं गृहीत्वा रत्नाकरः न्यग्रोधतरोः मूले अन्तर्हितः उपविशति )

( ततः प्रविशति नारदः )

( नारदः दक्षिण हस्तेनालंकृत वीणादण्डः वामहस्तेनालङ्कृत तालबन्धः पीताम्बरधारी नारायण नारायण इति कथयन् प्रविशति )

**नारदः** — हरिनारायण हरिनारायण हरिनारायण।

**रत्नाकरः** — ( नारदस्य पुरतः आगत्य दण्डहस्तौ उद्यम्य तं प्रहर्तुं उद्युक्तो भवति।

**नारदः** — ( तं दृष्ट्वा ) नारायण नारायण इति कथयति )

( रत्नाकरस्य हस्ताभ्यां स्त्रस्तः दण्डः भूमौ पतति )

**नारदः** — अयि बाल, कोऽसि त्वं। किमर्थमेवं करोषि ?

**रत्नाकरः** — अरे सन्यासिन् कोऽसि त्वं प्रष्टुं अपिच मां निरोध्दुं। समर्पय त्वत्सकाशे विद्यमानं सर्वं मम हस्ते, नोचेत् तव मरणमेव भविष्यति मम हस्ते।

**नारदः** — नारायण, बाल किमर्थमेवं करोषि ?

**रत्नाकरः** — अरे कोऽसि त्वं मा प्रष्टुं पदे पदे ?

**नारदः** — बाल श्रृणु, मम वचनं अनंतरं मत्समीपे विद्यमानं सर्वं वस्तुचयं गृहाण।

**रत्नाकरः** — किं ते वचनं श्रावय।

**नारदः** — बाल नरहिंसा किमर्थं करोषि ? को हेतुः विद्यते तथा कर्तुं।

**रत्नाकरः** — अरे गायक। मम उदरपोषणार्थं अपिच मम भार्यासंतोषार्थं अहं सर्वं करोमि, करिष्यामिच। त्वमपि गायको भूत्वा इतस्ततः भिक्षार्थं चरसि तव कुटुम्बपोषणार्थम्

**नारदः** — तव कुटुम्ब पोषणार्थं त्वमेवं करोषि ?

**रत्नाकरः** — हां मे पत्नी मे प्रियतमा। सर्वशः सा संरक्षणीया मया। तस्य कृते सर्वमहं करोमि।

**नारदः** — बाल श्रृणु। त्वं अत्यन्त घोरकृत्यं समाचरसि। तेन कृत्येन त्वं पापं भजसे।

**रत्नाकरः** — (विहस्य) पापः ? सः कः ? अहं कदापि न दृष्टवानस्मि तं। कथं विद्यते सः पापः मां कथय। तमपि मारयित्वा तस्य समीपात् सर्वं चोरयित्वा सानन्दं सुखमनुभविष्यामि।

**नारदः** — सः अनुभुज्यते। किन्तु नहि द्रक्ष्यते।

**रत्नाकरः** — सः मया नानुभूयते।

**नारदः** — सः अत्र नानुभूयते।

**रत्नाकरः** — सः कुत्र अनुभूयते।

**नारदः** — यमलोके।

**रत्नाकरः** — सः कुत्रास्ति।

**नारदः** — सः अन्धकारे निलीनः वर्तते। सः न कस्यापि दृष्टिपथमायाति।

**रत्नाकरः** — अरे सन्यासिन्। त्वं मम हस्तात् पलायितुं प्रयतसे। तत् त्वं कर्तुं नार्हसि। अदृश्यमान विषयमुद्दिश्य न विचारः कर्तव्यः। प्रयस्छ त्वत्सकाशे विद्यमानं संपच्चयम्। (इति सपरुषं सः वदति)

**नारदः** — अदृष्टविषयः सर्वेण न ज्ञायते।

**रत्नाकरः** — तव वचने किमपि सत्यं न विद्यते। त्वं सर्वमपि कल्पयसि।

**नारदः** — वयं सर्वमपि प्रत्यक्षं द्रष्टुं अशक्नुमः।

**रत्नाकरः** — यदि प्रत्यक्षं न दृश्यते तर्हि तत् असत्यं भवति।

**नारदः** — सर्वोऽपि अनुमानेन द्रष्टव्यः भवति।

**रत्नाकरः** — एतत् सर्वं मया नापेक्ष्यते। सौख्यमय जीवनमेव मयापेक्ष्यते।

**नारदः** — इदं सौख्यमय जीवनं नहि। नरकप्राय जीवनं भवति।

**रत्नाकरः** — कोऽयं नरकः (इति हसति)

**नारदः** — बाल तव नाम किं?

**रत्नाकरः** — मम नाम रत्नाकरः।

**नारदः** — बाल रत्नाकर। शृणु अहं अत्रैव तिष्ठामि त्वं सत्वरं तत्र गृहं गत्वा तत्र प्रियां पत्नीं पृच्छ, यथा सा त्वया दत्तवस्तुचयात् अर्धं गृहणाति, तथा त्वदीय पापसंचयात् अर्धं ग्रहिष्यति किं? विषयमेवं त्वं तव पत्न्या विचार्य प्रतिनिवृत्य मे निवेदय। तदा सर्वमहं मत्सकाशे विद्यमानं ते दास्यामि।

**रत्नाकरः** — अरे गायक त्वं कपट नाटकं करोषि। त्वं मत्तः पलायितु मिच्छसि। त्वं तथा कर्तुं नार्हसि। तव मे हस्ते मरणमिति लिखितमासीत्।

**नारदः** — त्वं मां मारय। किन्तु प्रथमतः तव पत्नीं विचार्य समागच्छ।

**रत्नाकरः** — (किञ्चित् विचार्य) त्वं अत्रैव तिष्ट। अहं अधुनैवाऽगच्छेयं मम पत्नीं विचार्य)

**नारदः** — (तत्रैवोपविशति)

**रत्नाकरः** — (तं पश्यन् पृष्ठतः चलति)

**नारदः** — (नारायण नारायण नारायण इति कथयति)

(यवनिका पततति)

* * *

## पंचमं दृश्यम्

(निशावसान समयः भिल्लिनी खट्वायां गुरु गुरुन्ती स्वपिति)

(नेपथ्ये कवाटं ताडयन्) हञ्जे हञ्जे कवाटं उद्घाटय, उत्तिष्ठ।

**भिल्लिनी** — (तनुं प्रसारयन्ती हस्ते उद्यम्य, मुखं विस्तृत्य जृम्भणं करोति)

**रत्नाकरः** — हञ्जे दयिते त्वया साकं किञ्चित् भाषणीयं विद्यते, कवाट-मुद्घाटय।

**भिल्लिनी** — अरे गच्छ गच्छ। मया साकं प्रभाते भाषणीयं किं विद्यते। सुप्तुं त्वं समयं न ददासि रे।

**रत्नाकरः** — प्रिये। अस्ति कश्चित् वाग्विशेषः।

**भिल्लिनी** — कोऽयं वाग्विशेषः।

**रत्नाकरः** — त्वं प्रथमतः कवाटं उद्घाटय। अनंतरं कथयिष्यामि।

**भिल्लिनी** — बत ! ( इत्युत्थाय गत्वा कवाटं उद्घाटयति )

**रत्नाकरः** — प्रिये त्वं मम प्रश्नस्य उत्तरं देहि। ( इति अन्तः प्रविशति )

**भिल्लिनी** — प्रातरेव प्रश्नानां उत्तरं, किमेतत् चित्रं। प्रातः किञ्चित् पल-लाशनं अनन्तरं कवोष्ण रुधिरपानं कर्तव्यं भवति। अद्य दिवसः प्रश्नोत्तर दिवसः किम्।

**रत्नाकरः** — दयिते अहं अद्य बहुपरिश्रान्तः जातः। ( इति मञ्चोऽपरि उपविशति ) किं मे प्रश्नस्य प्रत्युत्तरं दास्यसि।

**भिल्लिनी** — अरे एतावत्पर्यन्तं अद्यावधि न कोऽपि प्रश्नः पृष्टः। भवतुनाम विचारय कोऽयं ते प्रश्नः।

**रत्नाकरः** — प्रिये यत् मया खाद्यं आनीयते तस्मिन् अर्धं त्वं अनु-भुङक्ष्वे।

**भिल्लिनी** — अर्धं नहि सर्वमपि अहमेव भक्षयामि सुखमनुभवामि च।

**रत्नाकरः** — त्वं मदानीत वस्तुचयात् अर्धं उत तृतीयांशंवा अनुभवासि।

**भिल्लिनी** — हां अनुभवामि। आवयोः समानशीलता विद्यते। आवां सर्वं यथायोग्यं अर्धार्धं अनुभवामः। स एव पतिपत्नी भावः।

**रत्नाकरः** — तथा यदि स्यात्, मयाकृत पापे अपि अर्धभागं ग्रहिष्यसि किं त्वं।

**भिल्लिनी** — ( छ छ छ इति कथयति ) त्वत्कृत पापे अर्धभागः उत, लेशः अपि मया नानुभूयते। पापी पापं अनुभवति नत्वन्यः।

**रत्नाकरः** — मदानीतं खाद्यं त्वं अनुभवसि।

**भिल्लिनी** — हाँ अनुभवामि, ससुखं निवसामि।

**रत्नाकरः** — तस्मात् तत् कृते यः पापः कृतः तस्मिन् पापे अपि त्वया सहभागिनी भवितव्या।

**भिल्लिनी** — त्वं पथिकान् मारयित्वा तेभ्यः धनं अपहृत्य मह्यं ददासीति नाहं जाने। त्वं मां पोषयितुं तथा करोषि। त्वया आनीतं तत् अहं खादामि। मम नास्ति कोपि सम्बन्धः पाप विषये यथा तत्रास्ति।

**रत्नाकरः** — सुतरां नास्ति किं।

**भिल्लिनी** — सुतरां नास्ति। स्वयं कृत पापं स्वयमेव भुङ्क्ते जनः लोके तदन्यथा न भवति। सः पापः अन्यैः न कदापि भुज्यते।

**रत्नाकरः** — प्रिये दुष्कर्म कृतं मया। अहं प्रेम्ना आनीय सर्वं तुभ्यमेव ददामि। त्वं अधुनां वदसि मत्कृत पापे त्वं सहभागिनी न भविता। धिक् संसारं प्रति। ( इत्युत्थाय चिन्ताग्रस्तः नारदं प्रति धावति )

**भिल्लिनी** — अयं पापपुण्य विचक्षणां न जानाति। अयं सुतरां मूर्खः। एतत् सर्वं मम किमर्थं। सम्यक् भोजनं गाढनिद्रा मम अत्यन्त रोचकौ। ( इति गत्वा पुनः स्वपिति )

( यवनिका पततिः )

* * *

# षष्ठं दृश्यम्

**नारदः** — ( तत्रैवोपविशति )

( ततः प्रविशति रत्नाकरः )

**रत्नाकरः** — अयि भोः गायक मां रक्षस्व। ( इति नारद पादयोः पतति )

**नारद** — ( तं हस्ताभ्यां उन्नमय्य ) किं उक्तं तव पत्न्या ।

**रत्नाकरः** — अयि भोः गायक त्वं मे ज्ञानमादिशः । अधुना मे नयनद्वयं उन्मीलितं । अहं अधुना किं करवाणि । पत्नी जगाद पापात् अर्थं उत न किञ्चित् अपि तयानुभुज्यते इति । अहमेव संसार लम्पटो भूत्वा दृश्यमानं भुज्यमानं च सत्यमिति प्रमत्तः अकृत्यमकरवम् । मम पापपरिहारो नास्ति । अधुना अत्रगतोऽस्मि कः पापः । ( इति मुक्तकण्ठं रोदिति )

**नारदः** — बाल मारोदि । अस्ति पापपरिहारः ।

**रत्नाकरः** — कथं मे पापपरिहारः भविष्यति ।

**नारदः** — अस्ति मार्गविशेषः ।

**रत्नाकरः** — शाधि मां भगवन् ।

**नारदः** — एहि बाल मत्सकाशं ।

**रत्नाकरः** — स्वामिन् अहं पापी अस्पृश्यः वन्यजीवी च ।

**नारदः** — तथा मावद रत्नाकर । सर्वं जगत् विष्णुमयं । सर्वं तस्य विलसनमेव । वयं सर्वे तस्य कृतिनः । नात्र चिन्ता कार्या । सर्वं जगति स्पृश्यमेव भवति । अस्पृश्यं न किमपि विद्यते ।

**रत्नाकरः** — प्रभो त्वं कोऽसि । तव नाम किं ।

**नारदः** — अहं नारदः । अहं त्रिलोक संचारी । एहि मत्सकाशं, ते राम मन्त्रोपदेशं करिष्यामि ।

**रत्नाकरः** — ( तस्य सकाशं आयाति )

**नारदः** — ( कर्णे राम इति कथयति ) बाल त्वं अत्रैव वटवृक्षच्छायायां उपविश्य एकाग्रनिष्ठया मन्त्रोच्चारणं कुरु । ( इति स्थानं दर्शयति )

**रत्नाकरः** — ( तथैवोपविश्य रामः रामः इति जपन्नास्ते )

**नारदः** — ( नारायण इति कथयन् गच्छति )

( यवनिका पतति )

* * *

# सप्तमं दृश्यम्

( ततः प्रविशति काषायाम्बरधारी रुद्राक्षमालालंकृतः भस्मचर्चित शरीरः भारद्वाजः )

**भारद्वाजः** — ( आत्मगतम् ) बत बहु वर्षेभ्यः अहं अत्रैव आत्मज्ञानार्थं तपामि। किन्तु आत्मज्ञानं एतावत्पर्यन्तं अप्राप्तोऽहम्। मे जीवने आटविक जीवनं स्थिरमिव भासते। विना च आत्मज्ञानं जीवनं सत्यं आटविक जीवनमेव भवति। मम विद्यते कविहृदयेभावनाज्ञानं। तदनुसारेण शीघ्र लेखनमपि कर्तुं समर्थोस्मि। अहं उक्तलेखनं भावनापेक्षया शीघ्रतरं लिखिष्यामि। तत् मे जन्मतः संक्रामितम्। मानवः सर्वशक्ति संपन्नोऽपि ज्ञानी अपि विना च गुरूपदेशः, गुरोः सन्मार्गदिशः किमपि कर्तुं अशक्तो भवति। सर्वत्र गुरुबलमावश्यकं भवति। विना च गुरूपदेशः विद्या अपक्रमः भवति। आशैशवादहं अत्रैव तमसा नदीतीरे निवसामि। तमसा नदीतीरप्रभावेन मयि नकापि परिवर्तना जाता। मे अज्ञानं एतावत्पर्यन्तं अद्यावधि न तिरोभूतम्। यदि यः कश्चन् गुरुः सरस्वतीचरण चारणचक्रवर्ती मम उपलब्धः भवति तर्हि मे कामना सफला भविष्यति। अहं मे जीवितान्तं तस्य सेवां कुर्याम्। यदि सः कविः भविष्यति तर्हि तस्य कवितारसमास्वाद्य अहं परब्रह्माणं ज्ञास्यामि। अत्र अधुना सर्वे निशाचराः, रक्तंपचाः। पललाशनाः सन्ति। अहमेकः एव कन्दमूल पर्णाशिनीः। न कोऽपि धन्य-जीवि राजतेऽत्र। कर्णाकर्णिकया श्रुतंमया अत्र कोऽपि सज्जनः तपस्यन् आस्ते इति। तस्य सन्निधिं गत्वा आत्मज्ञानार्जन परः भविष्यामि। एकदा मां त्रिलोक संचारी नारदः अवादीत् यत् त्वं वाल्मीकेः शिष्यः भविता इति। एतावत्पर्यन्तं कुत्र विद्यते स वाल्मीकिः नाहं जाने। ( इति इतस्ततः तूष्णीं चरन् किञ्चित् आकर्ण्य ) किमेतत् अत्रैव न्यग्रोध वृक्षान् अधोऽधः किञ्चित् चञ्चत् चञ्चरीक झंकारतुलित नादरम्यः राम राम इति अव्यक्त मधुरः शब्दविशेषः श्रूयते। अहं तत्रैव गच्छेयं। एतादृश संदर्भ विशेषः मया न कदापि अनुभूतः। सत्यमेतत् यत् मङ्गलानि नानुमेयानि भवन्ति, किन्तु त्वक्षण फलद्योतकानि भवन्तीति। भवतु मां बुद्धिः प्रचोदयति तत् स्थानं गन्तुं। अधुना तत्रैव गच्छेयमहम्। ओं शनो मित्रस्यं वरुणः शनो भवत्वर्यमा। शंन इन्द्रो बृहस्पति। ( इति पठन् गच्छति )

( यवनिका पतति )

* * *

# अष्टमं दृश्यम्

( न्यग्रोध वृक्षं अधोधः स्थलं सर्वमपि पर्णाविलं वर्तते अपि च महान् वल्मीकः विराजते )

( ततः प्रविशति नारदः )

**नारदः** — ( वल्मीकं विलोक्य ) नारायण नारायण। ( इति जपति )

**वाल्मीकिः** — ( मनसि ) श्रुतपूर्वोयं वाग्विशेषः ध्वनि विशेषश्च। ( इति वल्मीकात् उत्थाय नमस्करोति नारदम् ) त्रिलोक संचारिन् नारद। महापुरुषाणां दर्शनेन असंभाव्यमपि संभाव्यं भवति। किमत्रागमन कारणं। महानुभावाः विना च कारणं गृहं ना गच्छन्ति। महात्मन् निवेदय किं कार्याणि ते।

**नारदः** — रत्नाकर श्रृणु किं करणीयं विद्यते ते। यतः तपस्यतः तवोपरि वल्मीकं संजातं ततः अद्य प्रभृति त्वं वाल्मीकिः इति नाम्ना आहूयसे। त्वया महापुरुष जीवित मुद्दिश्य महत् काव्यं विरचनीयं विद्यते। तच्चकाव्यं जगति अदिकाव्यं भविष्यति। तदा त्वदीय काव्यावतरणं विलोक्य तत् काव्यं पाठं पाठं सर्व जगत् मुग्धं भविष्यति। तस्मात् काव्यलेखने कृतप्रयत्नो भव।

**वाल्मीकिः** — अयि भो नारद। साम्प्रतं लोके गुणवान् वीर्यवान् कः अस्ति निवेद्यतां।

**नारदः** — श्रृणु वाल्मीके। इक्ष्वाकुवंश प्रभवः रामोनाम जनैश्रुतः। सर्व शास्त्रार्थ तत्वज्ञः स्मृतिमान् प्रतिभावान् सरामः सर्वलोकप्रियश्च। तं महापुरुषं उद्दिश्य काव्यं विलिख।

**वाल्मीकिः** — धन्योऽस्मि नारद धन्योस्मि। इति नमस्करोति )

**नारदः** — नारायण नारायण। ( इति गच्छति )

( ततः प्रविशति भरद्वाजः )

**भरद्वाजः** — गुरवे नमः। ( इति नमस्करोति )

**वाल्मीकिः** — कोऽसित्वम् !

**भरद्वाजः** — अयि मुने अहं भवतां शिष्यः ।

**वाल्मीकिः** — तव नाम किम् ?

**भरद्वाजः** — मम नाम भारद्वाजः ।

**वाल्मीकिः** — त्वं कुत्र निवससि ?

**भरद्वाजः** — अस्मिन् अरण्ये अहं निवसामि ।

**वाल्मीकिः** — त्वं मम सन्निधिं कथं आगतोऽसि ।

**भरद्वाजः** — भवतां समागमः मे भविष्यतीति त्रिलोक संचारी नारदः अवादीत् । तस्मात् अहं भवतां शिष्यः भवितुं समागतोस्मि ।

**वाल्मीकिः** — सर्वं शुभप्रदं संजातम् । अद्य प्रभृति त्वं मे शिष्यः ।

**भरद्वाज** — शाधि मां गुरो ।

**वाल्मीकिः** — भरद्वाज तमसातीरं स्नातुं गम्यते मामनुसर ।

**भरद्वाजः** — एषोस्मि देव ।

**वाल्मीकिः** — भरद्वाज पश्येहं अकर्दमं तीर्थं तमसातीरं रमणीयं, प्रसन्नाम्बु यथा सन्मनुष्यमनः ।

**भरद्वाजः** — अहो अतीव सुन्दरा प्रकृतिरामणीयकता ।

**वाल्मीकिः** — तात भरद्वाज, न्यश्यतां कलशः दीयतां वल्कलं मम, उत्तमं तमसा तीर्थमिदं अवगाहिष्ये ।

**भरद्वाजः** — गृह्यतां इदं वल्कलं ।

**वाल्मीकिः** — ( आदाय वल्कलं शिष्यहस्तात् आंसमन्तात् व्यांपृतं वनं पश्यति क्रौञ्चयोः चारु निश्वसनं श्रृणोति ) भरद्वाज श्रृणु । पतत्रिणः स्वैरं विहरन्तः कूजन्तः सर्वमपि तमसातीरं नादब्रह्मावृतं कुर्वन्ति ।

**भरद्वाजः** — गुरो प्रकृति सौन्दर्यानुभावः सर्वेषा जन्तूनां न भवति ।

**वाल्मीकिः** — ( अत्रान्तरे क्रौञ्चवधं विलोक्य भूमौ पतितं पतत्रिणं विलोक्य मृतं च गत्वा ) कोयं दुरात्मा मनुजपशुः यः पतत्रिणं मारितः धिक् तं । (इति चिन्तया )

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीस्समाः।**
**यत् क्रौञ्चमिथुनादेकं अवधीः काममोहितम् ॥**

(इति उच्चैः गात्वा स्तब्धः) भरद्वाज किं व्याहृतं मया शोकार्तेन विचिन्तय।

**भारद्वाजः** --गुरो सम्यगुदीरितं तत्र भवता।

**वाल्मीकिः — पादबद्धोक्षरसमः। तन्त्रीलय समन्वितः।**
**शोकार्तस्य प्रवृत्तो मे। श्लोको भवतु नान्यथा ॥**

एहि स्नानार्थं गच्छावः। (इति गच्छतः)

(यवनिका पतति)

* * *

# नवमं दृश्यम्

(वाल्मीकिः ध्यानेस्थितः स्वीय आश्रमे। भरद्वाजः तत्रैव पार्श्वे भूर्जपत्राणि गृहीत्वा उपविष्टः)

**वाल्मीकिः** — (नेत्रे उन्मील्य) तात भरद्वाज शृणु। श्वेत दुकूलधारी ब्रह्मा मे भावनायां समागतः।

**भरद्वाजः** — ततस्ततः।

**वाल्मीकिः** — अहं सहसोत्थाय प्राञ्जलिः ब्रह्मन् अभिवादये उपविशतु भवान् इति पीठमयच्छम्।

**भरद्वाजः** — तत्र भवन्तः धन्यजीविनः यतः ब्रह्माणं अपश्यन्। ततस्ततः।

**वाल्मीकिः** — सः पीठोपरि उपाविशत्। अहं अर्घ्य पाद्यैः तं अपूजयम्।

**भरद्वाजः** — साधुकृतं भवद्भिः ततस्ततः।

**वाल्मीकिः** — सः मां अवोचत् अयि मुने त्वमपि उपविश। इति आसनं दर्शयामास।

**भरद्वाजः** — ततस्ततः।

**वाल्मीकिः** — अहं तेन दर्शित आसने उपाविशम्।

**भरद्वाजः** — ततस्ततः।

**वाल्मीकिः** — तदा मया प्रोक्तं ब्रह्मन् तमसातीरे एकेन व्याधेन एकः क्रौञ्चः व्यापादितः।

**भरद्वाजः** — यत् वृत्तं तत् प्रोक्तं भवद्भिः। ततस्ततः।

**वाल्मीकिः** — ब्रह्मन्, करुणान्तरात्मना मया व्यथितेन।

**मानिषाद प्रतिष्ठां त्वमगमः शाश्वतीस्समाः।**
**यत् क्रौञ्चमिथुनादेकं अवधीः काममोहितम्॥**

इति।

**भरद्वाजः** — साधु समुदीरितं भवद्भिः।

**वाल्मीकिः** — ब्रह्मा श्रुत्वा विहस्य मुनिपुङ्गव श्लोकः एव त्वया बद्धः नात्र-कार्या विचारणा। भवान् रामायणं विलिखतु इति मां आशीः पूर्वकं जगाद।

**भरद्वाजः** — ततस्ततः।

**वाल्मीकिः** —तदाहं आनन्देन विनमित शिरः। नेत्रे निमील्य प्रणाम-माचरम्। अत्रान्तते तस्मिन् एव क्षणे सः। ब्रह्मा तिरोदधे॥

**भरद्वाजः** — गुरो चतुर्मुखस्य भावनां पूरयन्तु भवन्तः।

**वाल्मीकिः** — अहं अधुनैव कवितां कथयेयं। त्वं सावधानचित्तेन मदुक्ति अनुपदमेव विलिख।

**भरद्वाजः** — मे कामना अद्य सफली भविष्यति गुरो। अहं तथैव विलिखि-ष्यामि। कथयन्तु भवन्तः।

वाल्मीकिः — ( नेत्रे निमील्य )

तपस्वाध्याय निरतं। तपस्वी वाग्विदांवरम्।
नारदं परिपप्रच्छ। वाल्मीकिर्मुनिपुङ्गवम्॥

भरद्वाजः — ( एकाग्रचित्तेन लिखति )

वाल्मीकिः — यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति॥

भरद्वाजः — ( एकाग्रचित्तेन लिखति )

( यवनिका पतति )



# ।। परीक्षिन्नाटकचक्रम् ।।

## ३. ऐतिहासिक-नाटकानुक्रमणिका

१५) रक्षाबन्धनम्

१६) वराह-मिहिरम्

१७) बिल्हणीयम्

१८) राष्ट्रायेदम्

१९) आत्मार्पणम्

२०) परिवर्तनम्

# समर्पणम्

२. कैलासवासिभ्यां मे ज्येष्ठभ्रातृभ्यां ओगेटि देवहूती-हनुमच्छास्त्री दम्पतीभ्यां भक्त्या समर्पितमिदं षडैतिहासिकनाटकऋक्षमालाचक्रम् ।।

## ॥ रक्षाबन्धनम् ॥

श्रावणी पौर्णिमा दिव्या रक्षाबन्धन रूपिणी ।
देशे समैक्यता भावं जनयित्री विराजताम् ॥

(कुमुदिनी कुर्च्यां उपविश्य टेबलोपरि विद्यमान कर्गज पत्रेषु किमपि लिखन्ती आस्ते, टेबुलोपरि उभय पार्श्वतः अनेकानि पुस्तकानि शिखरी भूतानि राजन्ते)

(ततः प्रविशति कादम्बरी)

**कादम्बरी** — सखि कुमुदिनि सुप्रभातं ते। (इति नमस्करोति)

**कुमुदिनी** — (उन्नमित शिरस्का) अहो कादम्बरी! नमस्ते सुप्रभातं। सखि अन्तः प्रविश।

**कादम्बरी** — (अन्तः प्रविशति, तत्र पार्श्वे विद्यमान कुर्च्यां उपविशति)

**कुमुदिनी** — सखि! कादम्बरी प्रभाते कथं मे गृहं समागतासि।

**कादम्बरी** — हञ्जे, अस्ति कश्चित् वाग्विशेषः।

**कुमुदिनी** — कोऽयं वाग्विशेषः?

**कादम्बरी** — अद्याहं विद्यालयं नागच्छामि।

**कुमुदिनी** — तां वार्तां कथयितुं समागतासि किं?

**कादम्बरी** — हां तां वार्तां कथयितुं समागतास्मि।

**कुमुदिनी** — को हेतुः विद्यते।

**कादम्बरी** — अद्य अस्मद् गृहे वयं सर्वे नाटकं द्रष्टुं गच्छामः।

**कुमुदिनी** — सर्वं कुटुम्बं गच्छति किम्?

**कादम्बरी** — हां सर्वं कुटुम्बं गच्छति।

**कुमुदिनी** — कुत्र कस्मिन् नाटयगृहे नाटकं भविष्यति ?

**कादम्बरी** — अत्रैव सान्निध्ये विद्यमान नाट्यगृहे भविष्यति।

**कुमुदिनी** — नाटकस्य नाम किं ?

**कादम्बरी** — नाटकस्य नाम रक्षाबन्धनम्।

**कुमुदिनी** — श्रावण पौर्णिमायां रक्षाबन्धनमहोत्सवे, अपिच नारिकेळ पौर्णिमायां रक्षाबन्धनं नाम नाटकं प्रयोक्ष्यते। सर्वथा साधु औचित्य पूर्णं भासते।

**कादम्बरी** — अत्यन्त सुन्दरं नाटकं इति जनश्रुतिः।

**कुमुदिनी** — कस्यां भाषायां प्रयोक्ष्यते नाटकमेतत्।

**कादम्बरी** — संस्कृत भाषायाम्।

**कुमुदिनी** — संस्कृत भाषायां रक्षाबन्धनं नाम नाटकम्।

**कादम्बरी** — हां रक्षाबन्धनं नाम नाटकम्।

**कुमुदिनी** — कोऽयं कविः।

**कादम्बरी** — परीक्षित् शर्मा नाम कविः।

**कुमुदिनी** — अहो ! गीर्वाण भाषा प्रपञ्चे विख्यातोऽयं कविः।

**कादम्बरी** — अयं कविः विंशतितमे शताब्दे संस्कृत भाषायां ललित गीत लहरी नाम गेयकाव्यं, विंशति सर्गात्मकं यशोधरा नाम महाकाव्यं, अक्षय गीतरामायणं अपिच सप्तत्रिंशति संख्यापरिमित नाटकचक्रं च विलिखितवान। अस्य कवेः गीर्वाण गेयचक्रवर्तीति नामान्तरमपि विद्यते। परीक्षिन्नाटकचक्रात् गृहीतमेतत् रक्षाबन्धनं नाम नाटकं।

**कुमुदिनी** — एतान्नाटकं पौराणिकं किम् ?

**कादम्बरी** — पौराणिकं नहि, किन्तु चारित्र्यात्मकम् नाटकम्।

**कुमुदिनी** — ममापि द्रष्टुं नाटकमेतत् इच्छा भवति। भवत्या सार्धं अहमपि आगच्छेयम्।

**कादम्बरी** — मम अतीव परमानन्दः यतः त्वमपि शालां अगत्वा मया सार्थं नाटकं द्रष्टुं समागच्छसि इति। पाठशालागमनादपि नाटक प्रेक्षणमेव वरं भवति सर्वेषां, आधुनिकेषु दिवशेषु। एहि गच्छावः। (इति निष्क्रान्तौ)

(यवनिका पतति)

(एकस्मिन् उद्याने रजनी–सखीभिः गायन्ती नृत्यन्ती आस्ते)

**गीतम् (मालकौंस रागे)**

एहि एहि चन्द्र भोः माविभेही चन्द्र भोः
उदय शिखर हिण्डमान चारु चन्द्र भोः
यामिनी चुम्बनेन रागि चन्द्र भोः १

तारकलिकेलिलोल पाण्डु चन्द्र भोः
विभावरी कर्णकुण्डलायमान पूर्ण चन्द्र भोः
कुमुद कामिनी विलास लोलमत्त चन्द्र भोः
गगनसरसि क्रीडमान राजचन्द्र भोः २

तावकीन रश्मिरूप रूपकावयम्
मधुर भाव हास ललित लासिका वयम्
हावभाव मधुर नटन शिक्षित वयम्
चतुर वृत्त गान चरण पाटवा वयम् ३

सान्ध्यराग चित्रिताः कपोल पालिकाः
मधुर हसन कुसुन पुञ्ज चित्र भूषिताः
शारदाभ्र शुभ्र वयन चारु मण्डिताः
भूतले नितान्त ललित हसन जीविताः ४

अनङ्ग रङ्ग विविध चारु बन्ध पाटवाः
ईक्षणेन तरुण हृदय भावग्राहिकाः
मन्दयान चित्त जात भाव चालकाः
भावसून निचय दान पुत्र लविकाः ५

(गायन समये प्रविशति अलक्ष्येन्द्रः)

**अलक्ष्येन्द्रः** — (रजनीं दृष्ट्वा आत्मगतम्) कैषा भूलोक सुन्दरी? किमेषा स्वर्गादवततार उत नाकलोकात् अविर्भूता? गायन पद्धतिः गन्धर्व गानोपयिता। भवतुनाम तस्याः समीपं गत्वा तामेव पृच्छेयम्। (इति गत्वा) अयि सुन्दरि कासि त्वम्?

**रजनी** — (ससंभ्रमं) अहं पारसीया भारतवर्षे निवसामि। (सखीः विलोक्य) सख्यः यूयं गच्छथ। (सर्वाः सख्यः गच्छन्ति) अयि भोः भवान् कोऽस्ति?

**अलक्ष्येन्द्रः** — अहं ग्रीस् देशीयः। सर्वं भूतलयं जिगीषामि। ग्रीय देशादारभ्य मार्गमध्ये विद्यमान सर्व राज्य मण्डलानि विजित्य अधुना भारत वर्षे सिन्धु प्रान्तमागतोऽहम्।

**रजनी** — भवान् जगज्जेता भवितुमिच्छति।

**अलक्ष्येन्द्र** — हां सत्यमेव इच्छामि।

**रजनी** — तर्हि भारतवर्षं किमर्थमागतोऽसि।

**अलक्ष्येन्द्र** — अयं भारतवर्षः भूतलस्वर्गः। अत्र सर्वं शास्त्राणि वृद्धि गतानीति श्रावं श्रावं भारतवर्षं प्रयुध्य स्वायन्तं कर्तुं समागतोऽस्मि।

**रजनी** — (विहस्य) किं भारतवर्षं भवान् जिगीषति।

**अलक्ष्येन्द्र** — तरुणि अत्र हसितस्य कारणं किं विद्यते? हां सत्यमेवाहं भारतवर्षं जेतुमिच्छामि।

**रजनी** — तत् असाध्यं भवति ते इति हसामि।

**अलक्ष्येन्द्रः** — तरुणि मम अजेयं भूतले न किमपि विद्यते।

**रजनी** — त्वं अत्याशावान् मा भव। अयं देशः सर्वथा शक्तिसंपन्नः।

**अलक्ष्येन्द्रः** — अत्र कोऽयं राजा।

**रजनी** — भारतवर्षे बहवः राजानः सन्ति।

**अलक्ष्येन्द्र** — अत्र सिन्धुनदी प्रान्ते पंजाब प्रदेशे कोऽयं राजा इति मे प्रश्नः।

**रजनी** — अत्र पुरुषोत्तमः राजा अस्ति। सः सत्यमेव पुरुषोत्तमः। तं जेतुं हरिणापि हरेणापि न शक्यते।

**अलक्ष्येन्द्रः** — तरुणि, त्वं तथा मावद। त्वं न जानासि मम भुज पराक्रमं।

**रजनी** — अहं जानामि ते भुजपराक्रमं।

**अलक्ष्येन्द्रः** — भवती कथं जानाति मे भुजपराक्रमं।

**रजनी** — प्रथम दर्शनेनैव सर्वमपि अवगतं मे। ते रूपमेव तव महिमानं व्याचष्टे।

**अलक्ष्येन्द्रः** — (किंचित् तस्याः समीपं आगत्य) अहं सर्व धरित्रीं जेतुमिच्छामि। किन्तु भवती मां जेतुं इच्छति। प्रथमदर्शनेनैव मां अवगतासि भवति।

**रजनी** — हां सत्यमेव अहं त्वां जेष्यामि। अहं त्वां कामये।

**अलक्ष्येन्द्रः** — अहमपि त्वां कामये। भवती अयस्कान्तोऽस्ति। अहं अयोमयः।

**रजनी** — एहि मत्सकाशं देहि गाढालिङ्गनम्।

**अलक्ष्येन्द्रः** — मा त्वरस्व ते गाढालिङ्गनं दास्यामि। प्रथमतः त्वं कथय मम हस्ते अस्य राज्ञः पराजयः कथं भविष्यति।

**रजनी** — (किंचित् विचकिता) तत् कथयितुमहं असमर्थास्मि।

**अलक्ष्येन्द्र**—तथा यदि, अहमपि गाढालिङ्गनं दातुं असमर्थः। आवयोः प्रेम निष्फलं भविष्यति।

**रजनी** — तथा यदि भवति, अहं समालोच्य ते सहायं करिष्यामि।

**रजनी** — तथैव भवतु। भारत देश स्वाधीनानंतरं अहं भारतस्य राजा त्वं राज्ञीच भवितारौ।

**अलक्ष्येन्द्रः** — समयमनुसृत्य यथा योग्यं सर्वमहं करिष्ये।

**अलक्ष्येन्द्रः** — भारतवर्षे कति प्रदेशाः वर्तन्ते साकल्येन निवेदय। तत्र सर्वेऽपि राजानः पराक्रमिनः राजन्ते किम् ?

रजनी — भारतवर्षं प्रति त्वं किमपि मावद। तुभ्यं यद् रोचते तत् कुरुष्व। नाहं समर्था भारतमुद्दिश्य कथयितुं। इयं भूमिः षट्पञ्चति प्रदेशैः संकीर्णा सुबद्धा प्रतिभाति। इयं अष्टैश्वर्याणां आकरः। अत्र राजानः सहस्रभानु प्रतीकाः। अहं त्वां चकमे। तस्मात् त्वदर्थं यत् मया आचरणीयं विद्यते तदेव कर्तुं शक्ताऽस्मि।

अलक्ष्येन्द्रः — सत्यं त्वं मे जीवनदात्री प्रेयसी संजाता। (इति तस्या स्कन्धोपरि हस्तौनिक्षिप्य किंचित् स्वसमीपं गृहीत्वा) प्रेयसि सदेवालं। त्वं सर्वथा मम सहायं कुरु तदैव ते मम गाढालिङ्गनं उपायनमिव दास्यामि। पुनः समागमनाय, पुनः दर्शनाय शुभरजनी भूयात्। (इति निर्गच्छति)

रजनी — तवेयं रजनी शुभं कुर्यात्। (इति तं हस्तसंज्ञया प्रेषयति)

(इति द्वावपि गच्छतः)

(यवनिका पतति)

* * *

## द्वितीयं दृश्यम्

(आरस्तु सिंहासने उपविशति ततः प्रविशति अलक्ष्येन्द्रः)

अलक्ष्येन्द्रः — (प्रविश्य नमस्करोति ग्रीसदेशीय पद्धत्यां)

आरस्तु — विजयी भव। (इति हस्तमुद्यम्क आशिषः ददाति)

अलक्ष्येन्द्रः — गुरो, अहं अद्य प्रभृति पुनः जैत्रयात्रार्थं जिगमिषामि।

आरस्तु — त्वं जगज्जेता नूनं भविता।

अलक्ष्येन्द्रः—भवतां आशीर्वचनबलेन अहं अवश्यं जगज्जेता भविता।

आरस्तु — आशिषः सन्त्येव। किन्तु मानसिक निग्रहः अपेक्षितव्यः।

अलक्ष्येन्द्रः –– भवतां आशयः कः उपदिशन्तु।

आरस्तु — पुरुषः यदि जितेन्द्रियः भवति तर्हि सः सर्वशक्तिमान् भविष्यति।

अलक्ष्येन्द्रः — ततः।

आरस्तु — शृणु। पुरुषः अज्य घटोपमः।

अलक्ष्येन्द्र — ततः।

आरस्तु — अङ्गना अग्निः।

अलक्ष्येन्द्रः — ततः।

आरस्तु — द्वयोः सन्निहितसंबन्धः मा भूयात्।

अलक्ष्येन्द्रः — यदि भवेत्।

आरस्तु — सृष्टिकर्तापि स्वीय सृष्टयां पुत्रिकायामपि कामुकः इव प्रवर्तिष्यति।

अलक्ष्येन्द्रः — तथा भविष्यति किम् ?

आरस्तु — अरे वत्स त्वं न जानासि। स्त्रीशक्तिः पुरुषं बलहीनं करोति जगति।

अलक्ष्येन्द्रः — गुरो स्त्रीपुरुष संयोगादेव सृष्टिः भवति।

आरस्तु — तत् सत्यमेव। किन्तु जगज्जेतॄणां स्त्रीसहवासः अयोग्यः इतिं मे आदेशः।

अलक्ष्येन्द्रः — ततः।

आरस्तु — यदि पुरुषः स्त्रीलंपटो भवति तर्हि सः निर्बलः भविष्यति। तदा सः योद्धा भवितुं नार्हति। सः निर्वीर्यः भविष्यति। निर्वीर्ये सकल-व्याधयः तं परिवेष्टन्ति।

अलक्ष्येन्द्रः — किं कर्तव्यं मया आदिशन्तु भवन्तः।

आरस्तु — कुत्रापि स्त्रीसम्बन्धः मा भूयात् तव जैत्रयात्रायाम्।

अलक्ष्येन्द्रः — एतादृशी भावना असहजा भवति। यतः जगति सर्वं स्त्रीपुरुष शक्तिसमुद्भूतम्।

आरस्तु — निग्रहो, जेता, क्षणिक सुखासक्तः मा भूयात्। सः सर्वदा शाश्वत सुखाय प्रयतनीयः भवति।

अलक्ष्येन्द्रः — स्त्रीलोलुपत्वं अलक्ष्येन्द्राणां पतनकारणं भवतीति भवतां अभिप्रायः।

आरस्तु — हां सत्यमेव। जितेन्द्रियत्वेन जेता बलसम्पन्नः बुद्धिमान् भविष्यति। राज्य काङ्क्षिणां कान्तानुसरणं अयोग्यं भवति।

अलक्ष्येन्द्रः — राजकीयेषु कामिन्यः सहायभूताः भविष्यन्ति।

आरस्तु — ताः केवलं राज्यपतनस्यापि कारणं भवंति।

अलक्ष्येन्द्रः — अधुना मया किं कर्तव्यं आदिशन्तु भवन्तः।

आरस्तु — स्त्रीसम्बन्धः पुरुषस्य अनावश्यकः। सः संबन्धः असहजः।

अलक्ष्येन्द्रः — सर्व प्राणिनां कामना भवति खलु।

आरस्तु — भवति चेत् जातु केवलं संभोगः कर्तव्यः।

अलक्ष्येन्द्रः — यदि सः असंतृप्तः भवति तेन सम्भोगेन किं कर्तव्यम्?

आरस्तु — जगति ऋतुचक्रमनुसृत्य संभोगः कर्तव्यः।

अलक्ष्येन्द्रः — तदापि सः असंतृप्तः भवति चेत्।

आरस्तु — स्मशाने अग्नि परिकल्प्य रमणं योग्यं भवति।

अलक्ष्येन्द्रः — मरणमेव योग्यं इति भवतां अभिप्रायः किम्?

आरस्तु — हां अयमेव मे अभिप्रायः :

अलक्ष्येन्द्रः — शृङगार वीररसयोः अत्यन्त सन्निहित संबन्धः विद्यते खलु जगति।

आरस्तु — भवतु नाम। तस्यार्थः अयं। यावदपेक्ष्यते तावदेव अनुभोक्तव्यः। किंतु मा लोलुपत्वं लंपटत्वं च भूयात् इति मे निदेशः।

अलक्ष्येन्द्रः — प्रभो उन्मीलितं मे लोचनद्वयम्। अहं अधुना जैत्र यात्रार्थं गच्छामि। पुनः कदा प्रत्यागच्छेयं नाहं जाने। आशिषः दीयन्ताम्। (इति प्रत्यालीढ पादः भवति)

आरस्तु — वत्स निरामयः जैत्रयात्रां सफली कुरुष्व। (इति हस्त-मुद्यम्य आशीर्वादान् ददाति)

अलक्ष्येन्द्रः — (गच्छति)

(यवनिका पतति)

* * *

## तृतीयं दृश्यम्

(नेपथ्ये)

काश्मीर गीतम् (पहाडी रागे)

पुलकितगात्र भारतपुत्र शृणु रे। निर्मल पावन चरितं काश्मीरम्।
स्मर रे नित्यं शीर्षक भूतम्। भव्यं भारत नन्दनवन काश्मीरम्।। ध्रु.

कुङ्कुम चन्दन कुन्दन चम्पक। कुडमल मञ्जुल मन्दारं काश्मीरम्।
भारतयोषा शीर्षक सिन्दूरम्। विद्या केन्द्रं नन्दनवन काश्मीरम्।। १

श्यामल शाद्वल कोमल पल्लव। भासारञ्जित वासवचापं काश्मीरम्।
सुस्वर पाठन बहुविध संकुल। निर्गत पावन वेदालापं काश्मीरम्।। २

कोकिल कूजन केकी केका नर्तन। चञ्चल बम्भर झंकारं काश्मीरम्।
निर्झर शीतल शीकर सिञ्चित। मल्ली सूनस्मेरं काश्मीरम्।। ३

अम्बरचुम्बि हिमाचल शृङ्गक।
सन्ध्या नर्तन पशुपति ताण्डव घोषण पूतं काश्मीरम्।
निर्जरमण्डल भूतल कल्पित
ऋतुगण चित्रित सुखमय देशं काश्मीरम्॥ ४

(अम्भिराजस्य स्वसा तारा विचारयन्ती मञ्चे उपविष्टा अस्ति। ततः प्रविशति अम्भि राजा सहर्षम्)

**अम्भी** — स्वसः किं शृतं त्वया?

**तारा** — किं श्रवणीयं विद्यते?

**अम्भी** — विद्यते महत् श्रवणीयम्।

**तारा** — कथय।

**अम्भी** — ग्रीस्देशात् अलक्ष्येन्द्रोनाम महाप्रतापवान् योद्धा समागतः।

**तारा** — (आश्चर्येण) ग्रीस्देशात् योद्धा समागतः।

**अम्भी** — हां ग्रीस् देशात्। सः अतीव बल पराक्रमोपेतः।

**तारा** — सः किमर्थमागतः भारतवर्षम्।

**अम्भी** — योध्दुं समागतः।

**तारा** — केन सार्थम्।

**अम्भी** — पुरुषोत्तमचक्रवर्तीना सार्थम्।

**तारा** — (विचकिता) किमर्थम्)

**अम्भी** — भारतं जेतुम्।

**तारा** — भारतं जेतुम्?

**अम्भी** — हां सर्वभारतं जेतुं समागतः।

**तारा** — सः कथं भारतं जेष्यति।

**अम्भी** — युद्धेन।

**तारा** — तस्य भारतं अजय्यं भवति।

अम्भी — कथं तस्य अजय्यं भवति। सः योद्धा। ग्रीसदेशादारभ्य भारतपर्यन्तं विद्यमान सर्व देशान् विजित्य अधुना पेषावर्पर्यन्तं समागतः।

तारा — अहो (साशङ्कम्) सोऽयं वृत्तान्तः तव कर्णपथं कथं समागतः।

अम्भी — अहं स्वयं तेन सार्थं सल्लापमकरवम्।

तारा — तेन सार्थं त्वं किमर्थं भाषणमकरोः।

अम्भी — स्वसः त्वं न जानासि वर्तमान परिस्थितिमुद्दिश्य।

तारा — वर्तमान परिस्थितिमुद्दिश्य त्वं किं जानासि कथय।

अम्भी — भगिनि, अलक्ष्येन्द्रः महायोद्धा, अयं अवश्यं विनायासं पुरुषोत्तम चक्रवर्तिनं जेष्यति।

तारा — ततस्ततः।

अम्भी — सर्वं भारतं सः स्वीयं करिष्यति।

तारा — अहो ततस्ततः।

अम्भी — अस्य विशाल भारत देशस्य प्रशासनाय सः अलक्ष्येन्द्रः मां नियुज्य स्वदेश तिरोगमनं करिष्यति।

तारा — ततस्ततः।

अम्भी — तदाहं भारत चक्रवर्ती भवेयम्। त्वं मे स्वसा, तदा येन-केनापि महाराजेन विवाहिता सर्वभोगाननुभोक्ष्यसि इति मदीया भावना अस्ति।

तारा — त्वं शतृणासाकं हस्तमेलनं विधाय देशद्रोहं कर्तुमीहसे। तत् अयोग्यं अयुक्तं च भारतीयानां। त्वं यदि शत्रुव्यूहे पतिष्यसि तर्हि पुनः ते जीवनं असंभवं भविष्यति। तस्मात् स्वार्थाय त्वं तथा मा व्यवहर। राजा पुरुषोत्तमः सत्यं पुरुषोत्तमः। स एव भारत देशरक्षकः भवति, न अस्मादृशाः क्षुद्रजन्तवः भवितुमर्हन्ति। तस्मात् त्वं तादृशं वातहर्म्यं निर्माणं विसृज। यत् ते कर्तव्यं विद्यते तदेव त्वं कुरु।

अम्भी — स्वसः नाहं काङ्क्षे त्वदीय नीतयः। त्वं न जानासि राज-नीतिम्।

**तारा** — अरे सहोदर, त्वं अत्याशा पूरितोऽसि। त्वं न किमपि कर्तुं समर्थो भवसि। तस्मात् त्वं देशद्रोहं कर्तुं व्यवसितोऽसि। भ्रातः देशद्रोहापेक्षया आत्महत्या परमोत्तमा। तस्मात् त्वं उत्तमां स्थितिं भजस्व।

**अम्भी** — कासि त्वं मम निश्चयात् मां चालयितुं ?

**तारा** — अहं ते स्वसा, देशभक्ता, पुरुषोत्तमस्य पादरजोऽद्धाहिनी।

**अम्भी** — त्वं मे स्वसा भूत्वा मम विद्रोहं चिकीर्षसि।

**तारा** — अरे महान्तः योद्धारः गताः, महाराजानः निर्गताः, महाचक्रवर्तिनः पञ्चत्वं गताः किन्तु भारतं अखण्डितं भाति पूर्ववत्, देवतेयं भूमिः। इयं निर्जरा। एतस्य भारतस्य कदापि नाशनं न भवति। परदेशात् समागताः शत्रवः न किमपि करिष्यन्ति भारतम्। किन्तु स्वार्थपरायणाः त्वादृशाः अन्तश्शत्रवः मिलित्वा भारतं स्मशानं कर्तुं प्रयतन्ते। तस्मात् अहं त्वां नीतिमुपदिशामि।

**अम्भी** — न मे रोचते तव बोधना।

**तारा** — सोदर त्वं ऋग्णोऽस्मि। ऋग्ण बाधितऽनां औषधं हितकरं रुचिकरं न भवति। किन्तु वैद्यस्य आदेशेन स्वास्थ्यै अवश्यं ग्राह्यं भवति।

**अम्भी** — शृणु तारे। अहं योद्धा राजपुत्रः। नीतिज्ञः धर्मवेत्ता। जानाम्यहं सामदान भेद दण्डोपायान्। तस्मात् कारणात् अलक्ष्येन्द्रेण साकं मिलित्वा सर्वं भारतीय चरितं तस्मै निवेद्य तस्मै उपकारं विधाय भारते महाराजा भवितुमिच्छामि। अधुना विद्यमान पद्मव्यूहे त्वं अत्र स्थातुं नार्हसि। अपेहि त्वं अस्मात् गेहात्, इदं ते योग्यं न भवति। (इति तां भर्त्सयति)

**तारा** — एतावत्पर्यन्तं त्वं मे सहादरः असि। अधुना त्वं दुरोदरोऽसि त्व मां तव गृहात् निष्कासितुं समर्थोऽसि, न किन्तु भारत राष्ट्रात्। अहं स्पदं गत्वा पुरुषोत्तमचरण सान्निध्ये निवसिष्यामि। शृणु, यदि त्वं जेष्यसि अस्मिन् व्यूहे, उत अहं जेष्यामि पश्येयम्। (इति चरलं स्वीय वस्मादिकं ग्रन्थि विधाय स्त्रीय कक्षायां निक्षिप्य रोषेण निर्गच्छति)

**अम्भिः** — अधुना मम अन्तरायः निर्गतः। अवश्यं अलक्ष्येन्द्रेण साकं अहं निवसेयं । अहं भाविभारतचक्रवर्ती। (इति श्मश्रूसंमार्ज्यं अट्टहासं विधाय निर्गच्छति)

(यवनिका पतति)

* * *

## चतुर्थं दृश्यम्

(पुरुषोत्तमसभा, पुरुषोत्तमः सिंहासने उपविष्टः अस्ति, अमात्यः पार्श्वभागे उपविष्ठः भवति)

**पुरुषोत्तमः** — अयि अमात्य, किं हिमाचल प्रदेशीयाः काश्मीरीयाः पेषावरदेशीयाः राज्यपालने सुखं निवसन्ति ?

**अमात्यः**—हां महाराज। सर्वे ससुखं निवसन्तीति वार्ताः समायान्ति। पेषावरप्रान्तीयः राजा अम्भि प्रजाभ्यः सहकारं न ददातीति वार्ताहराः कथयन्ति।

**पुरुषोत्तमः** — अपि च शृतं मया भवतां वदनारविन्दात् यत् ग्रीस् देशात् अलक्ष्येन्द्रः इति कश्चन योद्धा वसुधातलं जेतुं समागतः इति तेन साकं हस्तमेलनं अम्भिना कृतमिति।

**अमात्यः** — देव तस्मात् अयं राजा अम्भिः अस्माभिः निगृहीतव्यः इति। मया एतदपि शृतं यत् तत्र अस्मदीय पालना भवितव्या इति च प्रजानां आग्रहः।

**पुरुषोत्तमः** — तेन साकं विरोधः अधुना युद्धाय कारणं भविष्यति। तस्मै पेषावरप्रान्तः अतीव रोचते इति कृत्वा अपिच अयं विश्वसनीयः इति च मत्वा तं तत्रैव प्राहिणम्।

अमात्यः — महाराज सः एषु दिवसेषु अविश्वासपात्रः भवति तस्मात् तं पदच्युतं कर्तव्यमिति मे विज्ञप्तिः।

पुरुषोत्तमः — अमात्यशेखर, जानामि ते अभिप्रायम्। किन्तु सर्वस्यापि समयसीमा विद्यते। समयं विलोक्य सर्वमपि साधु समाचरणीयं इति भवन्तः जानन्त्येव।

अमात्यः — अस्मिन् विषये विचारणीयः अंशः न कोऽपि विद्यते। यत् भवद्भ्यः रोचते तत् अनुपदमेव कुर्वन्तु भवन्तः।

(ततः प्रविशति वार्ताहरः)

वार्ताहरः — (नामित पूर्वकायः नमस्कृत्य) महाराज पेषावर प्रदेशीयराजा अम्भिः ग्रीस् देशादागतस्य अलक्ष्येन्द्रस्य सहायार्थं अकरणीयं अवचनीयं कथयतीति, तेन सार्धं भारतं जेतुं प्रयतते इति किंवदन्ती प्रचलति।

पुरुषोत्तमः — त्वं गच्छ।

वार्ताहरः — नमांसि (इति नामितपूर्वकायः अर्थवृतः निर्गच्छति)

पुरुषोत्तमः — अमात्यवर्यं शत्रुं महान्तोऽपि न शेषयन्ति। अयं एकदा मे आप्तमित्रं अभूत्। अधुना शत्रुः संजातः देशद्रोहार्थं। अयं मित्रद्रोही जातः। मित्रद्रोहः प्रथम सोपानः देशविनाशाय।

अमात्यः — महाराज, तत् सत्यं यदुदीरितम्। पदधराणां मित्रद्रोहेः देशद्रोहः इति तरतम भावना न विद्यते। ते स्वार्थाय अनाचरणीयमपि, स्ववंशनाशनं कर्तुमपि पूर्वापरसन्दर्भं न विचारयन्ति। ते पदधारणाय स्वीय पुत्रमपि घ्नन्ति।

पुरुषोत्तमः — मित्रद्रोहापेक्षया देशद्रोहापेक्षया च तादृशानां अनुपदं मरणमेव योग्यं भवति। शत्रुः जगज्जिगीषया समागतः। तमुद्दिश्य न किमपि निवेदयमास मह्यं, सराजा अम्भिः। तेन साकं मन्त्रयित्वा भारतं जिगीषति।

अमात्यः — अधुना यदि अलक्ष्येन्द्रः अम्भिसहायेन भारतं जेतुं अन्तः प्रविशेत् तदा किं कर्तव्यम्।

**पुरुषोत्तमः** — अमात्यवर्य भवानपि एवं वदति। भवतां भाषणं शृत्वा मम आश्चर्यं भवति।

**अमात्यः** — प्रभो, सः न किमपि करिष्यति, जानाम्यहम्। किन्तु जयापजयौ निर्णेतुं कष्टं भवति। सर्वं दैवाधीनं इति वदामि।

**पुरुषोत्तमः** — अमात्य "दैवं विहाय कुरु पौरुषमात्म शकत्या" शृणु महामात्य, अधुना अहं कथयामि। एकः अलक्ष्येन्द्रः नहि, अलक्ष्येन्द्राणां सहस्रमपि भारतं न किमपि करिष्यति, यावत्पर्यन्तं पुरुषोत्तमः जीवन्, आस्ते तावत्पर्यन्तं। ततः चिन्ता न कार्या। यदि सः मां जित्वा अन्तः प्रविशेत् अन्ये चक्रवर्तिनः तं जीवन्तं समाधिं करिष्यन्ति। भारतराष्ट्रं सुलभगृहीतं न भवति परेषाम्।

**अमात्यः** — महाराज प्रागेव युद्धाय सर्वसन्नाहान् कृत्वा यं यं यत्र स्थापनीयं, त तं तत्र संस्थाप्य, सर्वमपि सुव्यवस्थायां विराजमानं विलोक्य भवद्भ्यः निवेदयितुं समागतोऽस्मि।

**पुरुषोत्तमः** — सर्वं सैन्यं जागृदवस्थायां वर्तनीयमिति नदीप्रदेशाः, पर्वतप्रदेशाश्च सहस्राक्षित्वेन द्रष्टव्याः इति समादिशतु सर्वान् भवान्। गज रथतुरगपदातीनां चमूः जागृदवस्थायां स्थातव्या इतिआदिशतु भवान्।

(ततः प्रविशति वार्ताहरः)

**वार्ताहरः** — महाराज अलक्ष्येन्द्रस्य सेनानी भवतः द्रष्टुं द्वारि तिष्ठति। तेनेदं सन्देशपत्रं दत्तम्। (इति पत्रं अमात्याय ददाति)

**अमात्यः** — पत्रं गृह्णाति)

**पुरुषोत्तमः** — अमात्यवर्य पत्रं वाचयतु।

**अमात्यः** — (पत्रं प्रसार्य पठति)

परमपवित्र भारतवर्षे विराजमानाः गौरवनीय अपिच माननीय सिन्धु प्रान्तपालकाः पुरुषोत्तमराजानः भवतां समस्त सन्मङ्गलानि भवन्तु इत्यहं ग्रीस् देशादागतः अलक्ष्येन्द्रनामकः वार्तयामि। अहं भारतवर्षं द्रष्टुं समागतोऽस्मि : दुर्दैववशात् अहं भवतः द्रष्टुं अशक्तः अभवम्। अयं सेनानी

मम स्थानापन्नः भवति। अयं सेनानी मन्मुखेन भवतः दिदृक्षति। भवन्तः तस्मै यथा संदर्भं मार्गदर्शनं करिष्यन्तीति आशासे।

एवं

यौद्धा अलक्ष्येन्द्रः।

पुरुषोत्तमः — ओं विदितं सर्वं। अरे वार्ताहर, द्वारि विद्यमानं सेनापतिं अन्तः प्रवेशय।

वार्ताहरः — यथाज्ञापयति देवः। (इति अर्थवृतः निर्गच्छति)

(ततः प्रविशति सेपापतिरूपेण अलक्ष्येन्द्रः, ततः नमस्करोति राजानं ग्रीस् देशीयपद्धत्या)

पुरुषोत्तमः — अयि अलक्ष्येन्द्र सेनापते भवतामहं स्वागतं व्याहरामि।

सेनानी — महाराज धन्यवादान् वितरामि। (इति दक्षस्थित्यां कथयति)

पुरुषोत्तमः — सेनापते भवतः राजा, भारतवर्षं किमर्थमागतः।

सेनानी — राजन् अस्मदीय राजा अलक्ष्येन्द्रः भारतं द्रष्टुं समागतः।

पुरुषोत्तमः — भारतं द्रष्टुं समागतः उत जेतुं समागतः।

सेनानी — (चकितो भूत्वा) द्रष्टुमेव समागतः।

पुरुषोत्तमः — अयं मे महान् संतोषः यतः बहादूरात् भारतदेशं श्राव श्रावं द्रष्टुं समागतः इति। सर्वस्यापि सर्वं द्रष्टुं अधिकारः विद्यते जगति।

सेनानी — भवतां भारत दर्शनेन मे राज्ञः महान् आनन्दः संजातः।

पुरुषोत्तमः — अयं भारतवर्षः सर्वेषां वस्तु संग्रहालयः जातः। अयं देशः सर्वेषां धर्मशाला भवति।

सेनानी — भारतीयाः धर्मपरायणाः सौहार्दं काङ्क्षिणश्च इति सर्वेषां ज्ञातोऽयं वृत्तान्तः।

पुरुषोत्तमः — तथेति मत्वा सर्वे परदेशीयाः भारतीयान् स्वार्थाय समुपयुञ्जन्ति।

**सेनानी** — भारतीयाः वचनपरिपालनार्थं प्राणानपि त्यक्ष्यन्ति । तेषां एतादृशी परम्परा विद्यते ।

**पुरुषोत्तमः** — भारतीयाः अतिथिसत्कारे निरताः इति मत्वा परदेशीयाः अस्य देशस्य सुवर्णरजतरत्नादीन् स्वदेशं नेतुं प्रयतन्ते । भारतीय धर्मं नाशनं विधाय भारतीयान् निर्बलान् विदधातुं प्रयतन्ते परदेशीयाः ।

**सेनानी** — भारत चक्रवर्तिनां भाषणं अलक्ष्येन्द्राणां अवमानस्पदं भवति ।

**पुरुषोत्तमः** — वयं जानीमः अत्र समक्षं सेनापतिं नहि किन्तु स्वय सेनापतिरूपे विद्यमानान् अलक्ष्येन्द्रान् पश्यामः इति ।

**सेनानी** — (साश्चर्यं) महाराज कथं भवन्तः जानन्ति ।

**पुरुषोत्तमः** — (विहस्य) भारतीयाः सुनिशित प्रज्ञावन्तः । ते चारेक्षणाः सन्ति । अस्माकं क्रौर्यं नास्ति । किन्तु पराक्रमः विद्यते । भारतीयाः परेषां जृम्भणेन तेषां उदरस्थं सर्वं जानन्ति ।

**सेनानी** — भवतां कुशाग्र बुद्धिः अस्मान् आश्चर्य पारवश्यान् चक्रे । (इति कृत्रिम श्मशृं अपनयति)

**पुरुषोत्तमः** — भवन्तः अस्मान् न वञ्चयिष्यन्ति । अत्र युष्माकं न कापि भीतिः विद्यते, युष्मान् प्रापयितुं अस्मदीया सेना सहायं करिष्यति ।

**सेनानी** — भारतीयाः शत्रुमपि मित्रवत् पश्यन्ति ।

**पुरुषोत्तमः** — सः तेषां जन्मतः संक्रामित भावः । गच्छतु भवान् ।

**सेनानी** — महाराज आवयोः समागमः कदा कुत्र पुनः भविष्यति ।

**पुरुषोत्तमः** — आवयोः समागमः पुनः रणाङ्गणे भविष्यति ।

**सेनानी** — (ग्रीस् देशीय पद्धत्या प्रत्यालीढपादः नमस्कृत्य निर्गच्छति)

**पुरुषोत्तमः** — (घण्टां नादयति, ततः प्रविशतः भटौ, तौ कथयति राजा) सेनापतिरूपे समागतं अलक्ष्येन्द्र अतिथिं ओदकान्तं संप्रेष्य समागच्छताम् ।

भटौ — (नामितपूर्वकार्यौ अर्थवृतौ अलक्ष्येन्द्रेण साकं गच्छतः)

पुरुषोत्तमः — (निश्वस्य बिचारयन् इतस्ततः चरति हस्तौ पार्श्वं भागे बध्वा)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

(उद्यानवाटिकायां रजनी अलक्ष्येन्द्रश्च)

अलक्ष्येन्द्रः — रजनि त्वामेवाहं दिवारात्रं चिन्तयामि। भवती भुज लताभ्यां मां आलिङ्गनं करोतु।

रजनी — तमाल वृक्षोऽपमितं त्वां अहं मम भुजलताभ्यां: यथा सुखं अलिङ्गनं करिष्यामि। (इति तस्य सकाशं गच्छति)

अलक्ष्येन्द्रः — रजनि, स्तब्ध। किं त्वं मम सहायं करिष्यसि ?

रजनी — कीदृशोऽयं सहायः विद्यते।

अलक्ष्येन्द्रः — भवती पुरुषोत्तमस्य राजनीतिचतुरतां तस्य सक्षमाधिकारतां मे कथयतु, यस्मादहं सुखेन युद्धे जितः भविष्यामि।

रजनी — नाहं जाने तस्य सक्षमपालनत्वं, किंतु अहं तं एवं विचारयिष्यामि।

अलक्ष्येन्द्रः — (सकौतुकम्) कासा ते विचारधारा।

रजनी — अस्यां श्रावण पौर्णिमास्यां रक्षाबन्धन महोत्सवः भविष्यति।

अलक्ष्येन्द्रः — कोवा तस्य अर्थः।

रजनी — शृणु, यदा तस्यां पौर्णिमास्यां स्वसा सोदरस्य हस्ते रक्षाबन्धनं करोति तदा सोदरस्य कर्तव्यं भगिनी संरक्षणं, तस्याः अभिलाषा पूरणं च इति भारतीय साम्प्रदायः।

अलक्ष्येन्द्रः — तस्मात् त्वया किं क्रियते।

रजनी — अहं तस्मिन् दिवसे महाराजपुरुषोत्तमस्य समीपं गत्वा तस्य हस्ते रक्षाबन्धनं विधाय अहं तं विचारयेयं; अयि भोः अहं अधुना ते स्वसा, मम रक्षणा त्वया कर्तव्या इति।

अलक्ष्येन्द्रः — ततस्ततः।

रजनी — तदा महाराजः का ते कामना कथयस्व। अहं अनुपदं पूरयेयं इति मां विचारयिष्यति।

अलक्ष्येन्द्रः — ततस्ततः।

रजनी — तदाहं जलक्ष्येन्द्रं कामयामीति, तं भवान् युद्धे माजहि इति राजानं प्रक्ष्यामि। तदा सः भारतीय परम्परानुयायी अवश्यंअङ्गी करिष्यति मदीया कामनां। तदा त्वं तं विजेष्यसि।

अलक्ष्येन्द्रः — साधु भावितं त्वया एहि एकं चुम्बनं देहि। (इति शनैः शनैः द्वावपि सन्निहितौ भवतः)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(तारा-पुरुषोत्तमौ संलपन्तौ आस्तां, तारा वस्त्र ग्रन्थिनासह भूमौ उपविष्टा अस्ति। पुरुषोत्तमः इतस्ततः चलन् आलोचना परः आस्ते)

**पुरुषोत्तमः** — पुत्रि तारे त्वया साधु समुदीरितम्। अवश्यं ते भ्राता युद्धे मरणं प्राप्स्यति। त्वमेव जयशालिनी भविष्यसि। अम्भि सदृशानां अस्तित्वात् भारतं सर्वदा सङ्कटे पतितं भवति। देशद्रोहिणः अस्मदीय देशवासिनः एव। पराः यदा योध्दुं समायान्ति तदा ते अस्मद्देशीयानां ऐक्यताभावं प्रजनयन्ति। तस्मात् तदा तदा पराणां चमूध्राटी भारत हिताय हेतुः भवति।

**तारा** — महाराज अहमपि भवतां सेनायां प्रविश्य सैनिकानां हितोपदेशं कुर्यां, क्षत गात्राणां उपचारादिकं करिष्ये। तादृशि कर्मणि मां आदिशन्तु भवन्तः।

**पुरुषोत्तमः** — पुत्रि, अहं सुप्रीतः सुप्रसन्नोऽस्मि, त्वदीय भावनाया। त्वं कुत्रापि मा गच्छ। पुरुषोत्तमे जीवतिसति नारीणां युद्ध प्रवेशः न भवति। ये पुरुषाः वेषभूषादिभिः रथ्यांसु हिण्डमानाः सन्ति तान् सर्वान् अहं युद्धे आनेतुं इच्छामि। किन्तु भावदृशीनां भगिनीनां युद्ध भूमि प्रवेशः मा भवतु। पुरुषाणां अभावे स्त्रीणां युद्धभूमि प्रवेशः अनिवार्यः भवति, नत्वन्यथा। त्वं अत्रैव ससुखं अन्तःपुरे निवस। अपिच करणीयानि अनेकानि सन्ति तानि कुरुष्व। गच्छ पुत्रि अन्तः गच्छ। (तारा अन्तः गच्छति)

**दौवारिकः** — (प्रविश्य नमस्कृत्य) अयि महाराज कापि सुन्दरी रजनी नाम्नी भवन्तं द्रष्टुं द्वारि तिष्ठति।

**पुरुषोत्तमः** — तां अनुपदं प्रवेशय, गच्छ।

**दौवारिकः** — यथाज्ञापयति देवः। (इति नमस्कृत्य गच्छति)

(ततः प्रविशति रजनी)

**रजनी** — (महाराज प्रणमामि। (इति यूनानि पद्धत्या प्रणमिति)

**पुरुषोत्तमः** — सुस्वागतं भगिनी।

**रजनी** — (चकिता) धन्यास्मि महाराज।

**पुरुषोत्तमः** — काऽसि वासु।

**रजनी** — अहं पारसीका अस्मि।

**पुरुषोत्तमः** — तव नाम किम् ?

**रजनी** — मम नाम रजनी।

**पुरुषोत्तमः** — किमर्थमागतासि ?

**रजनी** — महाराजैस्साकं किंचित् भाषितुं समागतास्मि।

**पुरुषोत्तमः** — भाषस्व भगिनि।

**रजनी** — महाराज अद्य पौर्णिमायां रक्षाबन्धन सुमुहूर्तः भवति।

**पुरुषोत्तमः** — हां भवति।

**रजनी** — अस्मिन् दिव्य महोत्सवे अहं एकाकिनी निवसामि।

**पुरुषोत्तमः** — कथं त्वं एकाकिनी ?

**रजनी** — पितरौ स्तः। किन्तु भ्रातरः न सन्ति।

**पुरुषोत्तमः** — भारतवर्षे सर्वेपि ते भ्रातरः एव।

**रजनी** — सर्वे भ्रातरः कामनां पूरयितुं न शक्ताः।

**पुरुषोत्तमः** — का ते कामना।

**रजगी** — अहं वः रक्षाबन्धनं विदधातुं समुत्सुकास्मि।

**पुरुषोत्तमः** — अवश्यं अहं मम भारत राष्ट्रे भ्रातृहीनायाः एकस्याः युवत्याः भ्राता भविष्यामि।

**रजनी** — भवन्तः राजानः मे भ्राता भवितुं उद्युक्ताः, का भवतां विशाल भावना।

**पुरुषोत्तमः** — अहं प्रजारक्षकः। किं नाहं शक्तः भविष्यामि एकां युवतीं रक्षयितुं।

**रजनी** — भवन्तः नूनं पुरुषोत्तमाः। युष्मदीय नाम सत्यं सार्थकं भवति।

**पुरुषोत्तमः** — एहि भगिनि रक्षां बधान। (इति दक्षिण हस्तं प्रसारयति)

**रजनी** — (राज्ञः समीपमागत्य रक्षां बध्नाति)

**पुरुषोत्तमः** — भगिनि गृहाण इदं सुवर्ण कङ्कणम्। (इति हस्तात् सुवर्ण कङ्कणं अपनीय दित्सति)

**रजनी** — महाराज न मह्यं रोचते धनकनकवाहन वस्तुचयम्।

**पुरुषोत्तमः** — भगिनि किं ते रोचते।

**रजनी** — भवन्तः संग्रामे भीमसदृशाः वः न कोऽपि जेष्यति। भवतां समक्षं सर्वेऽपि मूषक प्रायाः भवन्ति।

**पुरुषोत्तमः** — कथनीयं किं विद्यते अनुपदं कथय।

**रजनी** — महाराज अहं प्रष्टुं भीताऽस्मि।

**पुरुषोत्तमः** — महाराजानां तव भ्रातृणां समक्षं भीतिः कुतः। अनुपदमेव निस्संशयं पृच्छ।

**रजनी** — महाराज, अलक्ष्येन्द्रः मे भवितव्यः पतिः। तं संग्रामे भवान् रक्षतु। इमां भगिनीं सौभाग्यवतीं करोतु इति मे अभ्यर्थना।

**पुरुषोत्तमः** — भगिनि, एतादृशी ते कामना इति नाहं जाने। अहं मम देश सुखाय स्नेहं, दयां, सौख्यं च लोकस्य आराधनाय संत्यक्ष्यामि। अधुना त्वदीया कामना देशस्य अहिता भविष्यति। सर्वं देशः अन्याक्रान्तः भविष्यति। अहं कथं देशं रक्षयिष्यामि।

**रजनी** — भवन्तः राजानः किमपि कर्तुं सक्षयाः, अहं इयन्तं याचे मे सौभाग्यं रक्षन्तु इति।

**पुरुषोत्तमः** — भगिनि मे मनः द्विधा विभक्तम्। इतः देशरक्षणं, अन्यतः भगिनी संरक्षणम्। देशरक्षणं बलवत्तरं भाति भगिनी रक्षणा पेक्षया।

**रजनी** — अद्य रक्षाबन्धन सुमहूर्तः। यदि एतस्य रक्षाबन्धन समयस्य मूल्यं नास्ति, तर्हि त्वां देशीयाः परम्परा नाशकं मन्वते। देशे रक्षाबन्धन महोत्सवः स्थगितः भविष्यति।

**पुरुषोत्तमः** — भगिनि, त्वं मा विचारय अस्मिन् समये अहं देशं अपि च भगिनीं त्वां रक्षिष्यामि। मा शुचः गच्छ त्वम्।

रजनी — महाराज भवन्तः पुरुषोत्तमाः, भवतां कीर्तिः आचन्द्र तारार्कं वर्तिष्यति सर्वं प्रपञ्चे। अहं धन्यास्मि। (इति नमस्कृत्य गच्छति)

पुरुषोत्तमः — अहो विपदि विपद् सुखे सुखं अनुसरतःइति लोकोवितः सत्यमेव अत्र मया दृष्टम्। धर्मो रक्षति रक्षितः। (इति अन्तः गच्छति)

(यवनिका पतति)

* * *

## सप्तमं दृश्यम्

(नेपथ्ये चमूचालनं भवति। सैनिकाः संग्राम गेयं गायन्ति)

गीतम् (भूपाली रागे)

जयत जयत जननीरक्षणदीक्षित भारतयोधाः
शात्रवभूमिजभञ्जन प्रलयप्रभञ्जन भारतवीराः ॥ध्रु.॥

परनगहृदयविदारण भीषणकुलिशाकृति योधाः
कुरुत कुरुत देशं स्वर्गसमानं भारतजननी पुत्राः १

अरिजनदहन विरुपाक्षेक्षणकुहर धनञ्जयरुपाः
समराङ्गण पावकतापन द्विगुणीकृतवर्णं सुवर्णाकाराः २

पुष्करावर्तक घनगर्जननिस्वन प्रतिरव बिभीषिकाः
प्रलयसन्ध्या निटलेक्षण ताण्डवपदघट्टन शब्दसमीराः ३

आशुगवैरि सदाशन वासुकिपन्नग भीषणफूत्कारकाराः
परजनपन्नगखण्डन काञ्चनपक्षोल्लसितोद्धत गारुत्मतरुपाः ४

महिषासुरमर्दिनि भयदकपर्दिनि करतल खरकरवालाकाराः
रणभुवि शत्रृध्वंसनयाम्य भयङ्कर निर्दयकिङ्कर तुल्याः ५

हरहर भंभं घोषण जननीरन्जन शात्रवभन्जन निरताः
स्मरहर पुरहर शङ्करकरतल राजित भव्यपिनाकाकाराः ६

परिपन्थिसुमस्तक कन्दुक रुधिरार्णवखेलन चन्चलविक्रान्ताः
आसेतुहिमाचल धरणीतल भावोद्वेगोद्वेल्लित कल्लोलाकाराः ७

(गीतान्ते नेंपथ्ये कल्लोलः समरदुन्दिभिनादाः भवन्ति, जहि, मारय, ताडय, पातय, शूलय इति शब्दाः श्रूयन्ते, बहुविध क्रन्दनैः आक्रोशाः श्रूयन्ते)

(पुरुषोत्तमः सिंहासने उपविशति। मन्त्रिवर्यः अन्ये राजानः तत्रोपविशन्ति । सायुध रक्षकाः शृङ्घलाबद्धं अलक्ष्येन्द्रं आनीय पुरुषोत्तमस्य समक्षं स्थापयन्ति)

**पुरुषोत्तमः** — अयि भटाः जगज्जेतारं अलक्ष्येन्द्रं निश्शृङ्घलं कुर्वन्तु। (भटाः तथा कुर्वन्ति) यूयं सर्वे गच्छथ। (सर्वे गच्छन्ति) बन्धो अलक्ष्येन्द्र उपविशतु भवान्। (इति आसनं दर्शयति, अलक्ष्येन्द्रः उपविशति)

अयि अलक्ष्येन्द्र भारतं जेतुं दुष्करमिति अधुना भवता अवगतं स्यात् इति मे प्रश्नः।

**अलक्ष्येन्द्रः** — महाराज पुरुषोत्तम, मे शक्तिः अनन्ता, अहं ग्रीस देशादारभ्य भारतपर्यन्तं सर्वत्र जयलक्ष्मी समालिङ्गितः अभवम्। किन्तु भारते तद् व्यतिरिक्तं जातम्।

**पुरुषोत्तमः** — अलक्ष्येन्द्र, भारतीयाः योद्धारः, वीराः, शूराः, दयान्तरङ्गाश्च। प्रथम कबळे मक्षिकापातः आसीत्। भवान् मया निगृहीतोऽसि न मारितोऽसि जानासि किं अत्र हेतुः कः।

**अलक्ष्येन्द्रः** — भवान् मां मारयितुं अशक्तो जातः।

**पुरुषोत्तमः** — भवान् निगृहीतोऽपि निरस्त गर्वीन जातः। अलक्ष्येन्द्र, त्वं न जानासि तव रक्षणाय कारणं किमिति।

अलक्ष्येन्द्रः — भवान् कारणं आरोपयति।

पुरुषोत्तमः — भवता अहंभावेन भण्यते, किन्तु न वीरोचित रूपेण।

अलक्ष्येन्द्रः — कारणं किमिति भवतां आरोपः।

पुरुषोत्तमः — भवतः प्रेमिका रजनीं मम सकाशं आगत्य मम हस्ते रक्षाबन्धनं विधाय, भवन्तं न हन्तुं वरमभिलषितवती आसीत्। अहं दत्त-वचनः अभवम्। पश्येदं रक्षाबन्धनम्। (इति हस्तमुद्यम्य रक्षाबन्धनं दर्शयति)

अलक्ष्येन्द्रः — एतस्मात् कारणात् भवान् मां न हतवानस्ति।

पुरुषोत्तमः — हा सत्यमेव। भवान् चिन्तयतु किमर्थं ग्रीस् देशात् अत्रागतवान् इति। वयं न कदापि भारतदेशं विहाय अन्यदेशाक्रमणे उद्यताः दत्तचित्ताः अभवाम। किमर्थं एतादृशी भावना भारतीयेतराणाम्? इदं भारतं जेतुं सुकरं न भवति। मया त्वं निर्जितोऽसि किंतु न मारितोऽसि। यदि त्वं पुनः मया सह योत्स्यसि, तव मरणमेव शरण्यं भवति। यदि अहं भवता निर्जितः भवेयम् तदा भारताक्रमणं ते असम्भवं भविष्यति। सर्वत्र देशे विक्रमसिंहाः राजानः बहवः सन्ति। ते सर्वेऽपि परवीर भयङ्कराः। यदि त्वं तैस्साकं योध्दुं प्रयतिष्यसे तर्हि तव अस्तित्वस्य संशयः भविता। तस्मात् भवान् अनुपदमेव भारतं संत्यज्य तव जन्मभूमिं प्रति निवर्तस्व प्रियया रजन्यासा-कम्। मा भवतु अत्याशावान्। अत्याशा विनाशाय कारणं भवति।

अलक्ष्येन्द्रः — महाराज पुरुषोत्तम भवतां स्नेहेन महापुरुष लक्षणं अद्य मया अवगतम्। भारतदेशः भूतलस्वर्गः। भवान् देवेन्द्रः। मे गर्वभङ्गः संजातः। मे कामना कुण्ठिता आसीत्। नाहं निवसेयमत्र। मे अनुचरः निहताः अत्र महति संपराये। किं अनया जैत्रयात्रया प्रयोजनम्। मम जीवने अद्यैव प्रथमतः एकं महापुरुषं अपश्यम्। भारतमिदं महापुरुषाणां आयतनम्। सत्यमेव एतादृश महापुरुषैः सर्वत्र भारते भवितव्यम्। मम भारते एकः सुहृत् विद्यते। एहि राजन् एहि, मे सौहार्दं पूर्णमालिङ्गनं ददातु भवान्।

(इति हस्तौ प्रसारयति)

पुरुषोत्तमः — (हस्तौ प्रसार्य आगत्य तमालिङ्गति) अलक्ष्येन्द्र भवान् अधुना मे आप्तमित्रं जातः।

**अलक्ष्येन्द्रः** — महाराज शत्रुः अपि भारतवर्षे स्वागतं प्राप्नोति, परमानन्दं च अनुभवति। अहं मे मातृभूमिं गत्वा भारत देशोत्कर्षं सर्वेभ्यः जनेभ्यः कथारूपेण प्रवक्ष्यामि नमोवः।

**पुरुषोत्तमः** — मे सुहृद् अलक्ष्येन्द्र, तव समस्त सन्मङ्गलानि भवन्तु। सुखेन ते बन्धुजनं समागच्छतु भवान्। (इति हस्तमुद्यम्य आशिषः ददाति)

**अलक्ष्येन्द्रः** — (तथैव हस्तमुद्यम्य प्रयाति)

(नेपथ्ये)

" सर्वेऽत्र सुखिनः सन्तु। सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु। माकश्चित् दुःखितो भवेत्॥ "

(यवनिका पतति)

* * *



# ॥ वराह-मिहिरम् ॥

**ज्ञानप्रभाभिः सततं ज्वलन्तं। प्रजाक्रियालोकन विश्वनेत्रम्।**
**प्रणोदिनं सुप्तजगत्समस्तं। ज्योतिष्पतिं तं मिहिरं नमामि ॥**

( नान्द्यन्ते )

**चंपा** — ( गेयमिदं अव्यक्त शब्दैः गुञ्जनं कुर्वन्ती, आदर्शे आत्मानं विलोक्य अलङ्कुर्वन्ती आस्ते )

**गीतम् (भैरवी रागे)**

रमते कैषा वर्षा तरुणी
वर्षा सिञ्चित गात्री श्यामा
मलयाशानिल ज्वालित कामा
तटिदिव पीता चञ्चल रामा ॥ ध्रु. ॥

( ततः प्रविशति मल्लिका )

( मल्लिकां विलोक्य ) सखि नमस्ते एहि उपविश। ( इति आसनं दर्शयति )

**मल्लिका** — ( आसने उपविशति )

**चंपा** — सखि मल्लिके अवसित मण्डनाऽस्मि। अनुपदमेवागच्छामि। किञ्चित्कालमुपविश। आवां मिलित्वा गच्छावः।

**मल्लिका** — सखि चम्पे, अतिक्रान्तवेला भवति। एतावत्पर्यन्तं त्वं किं करोषि ?

**चंपा** — सखि सर्वं समाप्तम्। हां कतिघण्टावादन समये नाटकप्रदर्शनं भवति।

**मल्लिका** — सप्त घण्टावादन समये भविष्यति।

**चंपा** — किं प्रवेशशुल्कपत्राणि लब्धानि ?

**मल्लिका** — हां अग्रिमत्वेन लब्धानि।

**चंपा** — हंसे मल्लिके, अहं विस्मृतवती, किं नाम नाटकस्य ?

**मल्लिका** — प्रयोक्ष्यमाणस्य नाटकस्य नाम वराहमिहिरम्।

**चंपा** — केन लिखितमिदम् ?

**मल्लिका** — प्रख्यात महाकविना पण्डित परीक्षित् शर्मणा विलिखितम्।

**चंपा** — गीर्वाणान्ध्र भाषा प्रवीणेन परीक्षित् शर्मणा विलिखितम्।

**मल्लिका** — हां, किं त्वं जानासि तं महाकविम्।

**चपा** — नाहं जानामि। किन्तु तमुद्दिश्य श्रुतं मया।

**मल्लिका** — किं श्रुतं त्वया कथय।

**चंपा** — अयं महाकविः। अयं संस्कृतभाषायां ललित गीतलहरी इति गेय काव्यं, विंशति सर्गात्मकं यशोधरा महाकाव्यं, अपि च अक्षय गीतरामायणं, सप्तविंशति नाटकचयेन भूषितं परीक्षिन्नाटकचक्रं, अपि च प्रतापराणायनमहाकाव्यं च विलिखितवान्। अयं गीर्वाणान्ध्रभाषा प्रवीणः।

**मल्लिका** — अयं सम्यक् गास्यति।

**चंपा** — विंशतितमे शताब्दे संच्कृतस्यकृते अयं महत्कार्यं करोति।

**मल्लिका** — वेला अतिक्राम्यति सत्वरं अवसित मण्डनाभव।

**चंपा** — समाप्तम्। इदं वराहमिहिरंनाम नाटकं चारित्रात्मकं किम् ?

**मल्लिका** — हां चारित्रात्मकम्। अस्मिन् नाटकचक्रे चतुर्दश पौराणिकानि, षट् चरित्रात्मकानि, सप्त सामाजिक नाटकानि सर्वाणि सप्तविंशति नक्षत्राणीव द्योतन्ते।

**चंपा** — अहो आश्चर्यं। अयं कविराक्षसः इव प्रतिभाति मम।

**मल्लिका** — मया पठितानि अस्य कवेः सर्वाणि काव्यानि।

**चंपा** — सखि, वराहमिहिर नाटकमुद्दिश्य किञ्चित् संग्रहेण श्रावय।

**मल्लिका** — सखि, कथां यदि प्रथमतः एव कथयेयं तर्हि ते सम्यक् आस्वाद

योग्यं न भवतीति त्वया एकदा उक्तम्। तस्मात् त्वं प्रत्यक्षं नाटकं विलोक्य रसास्वादस्य सुखमनुभव।

**चंपा** — हां मम तादशी स्थितिः वर्तते।

**मल्लिका** — सखि त्वं अतीव चिरयसि। आवयोः संभाषणमेव नाटकायते। सत्वरमेहि गच्छावः।

**चंपा** — सखि, समाप्तालङ्कारिणी अभवम्। त्वमपि किञ्चित् वदनमण्डलं आदर्शे विलोक्य विदलित लोलालकान् सम्यक् विरचय।

**मल्लिका** — भवतु नाम। नाहमिच्छुका लोलकान् सम्यक् विरचयितुम्। आधुनिकेषु दिवसेषु लोलालकत्वमेव मधुमण्डनं भवति।

**चंपा** — भवती अतीव रसिका। एहि गच्छावः। (इति हस्त गोणीं गृहीत्वा गच्छतः)

(नेपथ्ये वैदिक मन्त्रोच्चारणं भवति)

"शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति"

(ततः प्रविशति वेत्रहस्तः)

**वेत्रहस्तः** — सावधानम्। सावधानम्। अम्बरमणि तरणि किरण पुञ्ज समानाः, सकल विद्याप्रवीणाः, नवरत्न मण्डित महायशाः, संस्कृत कविमण्डल विनुत भूमण्डल महायशाः, विक्रमादित्य महाराजाः प्रविशन्ति। सावधानम्। सावधानम्।

(ततः प्रविशति राजा विक्रमादित्यः)

(विक्रमादित्यः सिंहासने उपविशति, एकस्मिन पार्श्वे अमात्यः, अन्यस्मिन् पार्श्वे पुरोहितः ज्योतिषाश्च स्वीयासनेषु उपविशन्ति)

**अमात्यः** — (उत्थाय) महाराज सर्वग्रहाणां अनुकूलार्थं शान्तिपाठः कर्तव्यः इति मया प्रकल्पितः।

**पुरोहितः** — महाराज, अहं स्वयं समीपे स्थित्वा सकल ब्राह्मण्यं दश शान्ति पाठार्थं आदिशम्। सर्वमपि यथा शास्त्रं निर्वर्तितम्।

**विक्रमादित्यः** — अरुण पाठं पठितुं समादिष्टं किम्?

**पुरोहितः** — महाराज, अरुण पाठं विना अन्य पाठाः निरर्थकाः भवन्ति। तस्मात् अरुण पाठार्थं निष्ठाव्रतः वेदपाठकान् न्ययुजम्।

**विक्रमादित्यः** — अयि विद्वद्वरेण्याः, मन्त्रिवर्याः, भवतां आशीर्वाद बलेन, वेदमन्त्रोच्चारणेन, सकल नवग्रह पूजया च मे पन्थानः निष्कण्टकाः भवन्तु इति अशास्महे।

**पुरोहितः** — महाराज सर्वमपि सुखान्ते यथाभीष्टं अवश्यं साधु भविता इति अहमपि भावयित्वा अनवरत वेदघोषार्थं घन जटा पदक्रमान्त वेदाध्यायिनः आदिशम्।

**अमात्यः** — महाराज मा विचारयन्तु सर्वमपि अस्माकं अनुकूलं भविष्यति। अवश्यं पुत्रोदयवार्ता श्रोष्यन्ति!

**विक्रमादित्यः** — अयि विप्रोत्तमाः अस्मदीय वंशीयः रघोः पुत्रः श्रीराम-चन्द्रस्य पिता राजा दशरथः पुत्रसंतानार्थं पुत्रकामेष्टिं कारयामास। अन्ततः वीतिहोत्र करुणया पुत्रकामेष्टिमाहात्म्येन पुत्ररत्नैः समलङ्कृतः आसीत्।

**अमात्यः** — तद्वत् भवन्तः अपि सर्वं यथा शास्त्रं कर्तव्यं अनुष्ठितवन्तः आसन्। मा विचारयन्तु।

**पुरोहितः** — वेदविहितंकर्म भवद्भिः अनुष्ठितम्। सर्वं साधु भविष्यति। अवश्यं पुत्रोदयः भविष्यति। अत्र अस्मिन् विषये संशयलेशोपि नास्ति।

( सवेगं चन्द्रिका प्रविशति )

**चन्द्रिका** — ( नमस्कृत्य ) महाराज राज्ञी छाया पुत्ररत्नमसूत। मातापुत्रौ सक्षेमं स्तः। (इति विनम्रा तिष्ठति)

**सर्वे** — ( एककण्ठेन ) परमानन्दः भवति अस्माकम्।

**अमात्यः** — महाराज अधुना अस्य राजस्य वारसः अस्ति।

**पुरोहितः** — भवन्तः पुंनाम नरकात् तारिताः।

**ज्योतिषाचार्याः** — अस्मिन् राज्ये समस्त मङ्गलानि भवन्ति।

**विक्रमादित्यः** — ( आनन्देन ) चन्द्रिका, साधु समुदीरितं भवत्या। अनया वार्तया सकल राज्यमपि पुलकितं, पल्लवितं च। अस्मदीय आनन्दस्य नावधिः विद्यते। इदं हारं गृहाण। ( इति स्वकण्ठात् हारं विनीय तस्यै क्षिपति )

**चन्द्रिका** — ( हारं गृहीत्वा ) धन्यास्मि महाराज। ( इति सानन्दं गच्छति )

**विक्रमादित्यः** — अमात्यवर्य, सर्वेभ्यः कर्मचरिभ्यः सकल उपायनानि, वस्त्रखण्डानि दुकूलानि, खाद्यपदार्थान्श्च यथेच्छं वितरतु। भवान् गच्छतु।

**अमात्यः** — यथाऽज्ञापयति देवः। ( इति गच्छति )

**विक्रमादित्यः** — अयि भोः पुरोहिताः भवन्तः, वेदपण्डितान्, संस्कृतज्ञान् पर्याप्त दक्षिणाभिः प्रतर्पयन्तु।

**पुरोहितः** — भवदीय आज्ञां अवश्यं परिपालयिष्ये। ( इति गच्छति )

**विक्रमादित्यः** — ( आनन्देन ) कः कोऽत्र भोः।

**वेत्रहस्तः** — अयमस्मि भोः।

**विक्रमादित्यः** — मार्गमादिश।

**वेत्रहस्तः** — इतोइतः महाराज। ( इति द्वावपि गच्छतः )

( यवनिका पतति )

* * *

# द्वितीयं दृश्यम्

( मञ्जरी गृहं अलंकुर्वन्ती गानगुञ्जनं कुर्वन्ती, बालं डोलायन्ती आस्ते )

**गीतम् (चक्रवाक रागे)**

पश्य पश्य गगनयान बालचन्द्र भोः
मा पिधेहि शीतकिरण नीरदान्तरे ॥घृ.॥

मञ्जुवक्त्र स्यन्दमान फेनपुञ्ज शोभिनम्
खेलनेन निर्जितं राजनीति राजकम्

लोकनेन सर्व हृदय भावहरण पाटवम्
पश्य पश्य चन्द्र भोः बालभाव चञ्चलम् १

आनने नितान्त चलन काकपक्षकम्
पौरुषे धिक्कृतं सकल राजवर्गकम्
मन्द हास शोभमान भारतीय गौरवम्
बालभाव निर्जितं बालचन्द्र कीर्तनम् २

डोलिका मृदुलपवन सौख्यशायिनम्
स्तन्यपान सक्तचित्त मधुर क्रन्दनम्
मातृहृदय भावशान्ति मलयचन्दनम्
गानमधुर भावमत्त सुप्तनन्दनम् ३

भूमिभस्म लसितदेह शैवबालकम्
हसित पुष्पराग लिप्त मृदुल रम्यदेहिनम्
मातृहृदय गहनभावनोर्मि राजहंसकम्
नयनकुमुद सत्वदान शीतकिरण भासुरम् ४

शिवप्रताप कृष्णराय पादचारिणम्
ईक्षणे नितान्तदीप्त भारतीय दृक्पथम्
आग्रहे कुमारभाव दर्शिनं कुमारकम्
पश्य भो भावि भरतराज्य शासकम् ५

**पल्लवी** — (गानं शृण्वन्ती शिरः कम्पनं कुर्वन्ती प्रविशति, गीतावसाने) साधु गीतं मञ्जरि। (इति करतल ध्वनिं करोति)

**मंजरी** — हञ्जे पल्लवि! कथं भवति हठात् आगतासि?

**पल्लवी** — त्वमेव भावय कथं आगतास्मीति।

**मंजरी** — (पल्लवी नखशिखपर्यन्तं विलोक्य) पल्लवकुडमलपुष्पफलसहित पूजाभाजनेन कुत्रापि गच्छन्ती त्वं कथं अत्र अधुना समागतासि?

**पल्लवी** —- भवती सर्वदा अन्येषां कर्मणि दत्तदृष्टिः भवसि। किन्तु स्वकीय विषयमुद्दिश्य न किमपि भणासि।

**मंजरी** — पल्लवि, मया कतिवारं उक्तं, अन्यान् उत अन्याः न किमपि पृछ, विषय स्वीकरणे प्रयत्नशीली मा भवेति।

**पल्लवी** — हञ्जे, अधुना किं जातम्। एवं विचारणे कोऽयं अपराधः मया कृतः।

**मंजरी** — अपराधः कृतः इति नाहं भणामि। किन्तु अन्ये किं कुर्वन्तीति ज्ञातुं यः प्रयत्नः क्रियते सः अयोग्यः, इति मे अभिप्रायः।

**पल्लवी** — भवतु। किमर्थं त्वं सम्यक् स्वात्मानं अलङ्कृत्य फलपुष्प संभार-वाहिनी असि।

**मंजरी** — ( विहस्य ) जगति स्त्रीणां अन्य स्त्रीणां सौन्दर्यादिकं अलङ्करणादिकं विलोक्य सहनं न भवति।

**पल्लवी** — सखि, कथं संभाषणं कर्तव्यं त्वमेव मां शाधि।

**मंजरी** — अधुना समयाभावात् नाहं वक्तुं समर्थास्मि यत्किमपि।

**पल्लवी** — किं भवती अतीव कार्यलग्नासि।

**मंजरी** — हां कार्यमग्नास्मि शृणु। विक्रमादित्य महाराजस्य पत्नी छाया पुत्रम सूतोति वार्ता सर्व लोक श्रवणेन्द्रियं गता। सर्वेऽपि सानंदं सोत्साहं नगरीं अलंचक्रुः। नाहं जाने भवती कस्मिन् प्रपञ्चे वससीति।

**पल्लवी** — किं कुर्यां गृहं विसृज्य अहं कुत्रापि नागच्छामि। कयापि न भाषयामि। तस्मात् किं वृत्तं कथं वृत्तं इति विषय जिज्ञासा अधिका भवति।

**मंजरी** — जानामि ते चित्तवृत्तिम्। त्वं मयि कृत्था माभव।

**पल्लवी** — अधुना त्वं भण, किं भणितव्यम्।

**मंजरी** — तस्मात् बालकस्य नामकरणाख्यं कर्म अद्य भविता। तस्मात् तत् वैभवं द्रष्टुं प्रस्थितास्मि।

**पल्लवी** — अतीव परमानन्दो जातः पौराणाम्। सर्वोऽपि पौरः विक्रमादित्य राजामुद्दिस्यैव चिन्तयन् आस्ते तदनन्तरं कोवा अस्य राजस्य राजा भविष्यतीति।

**मंजरी** — बहु कालानन्तरं सुवार्ता श्रुता सर्वैरपि।

**पल्लवी** — अहमपि त्वया साकं नामकरणाख्यं कर्म द्रष्टुं समागच्छेयम्।

**मंजरी** — त्वं एतावत्पर्यन्तं स्नानमपि न कृतासि। त्वया साकं गमनं मे विलम्बस्य हेतुः भविष्यति।

**पल्लवी** — त्वं यथार्थं कथिताऽसि। त्वं प्रथमतः गच्छ, अहं सावकाशं आगच्छेयम्।

**मंजरी** — त्वमपि फलपुष्प उपायनैस्सहिता एहि।

**पल्लवी** — हां अवश्यं अहं स्नात्वा सज्जितवेषा त्वां मध्ये मार्गं मिलिष्ये, उत राजगृहे मिलिष्ये।

**मंजरी** — अहं गच्छामि।

**पल्लवी** — हां गच्छ। अहं मम कुटुम्बेन सार्धं आगच्छेयम्।

**मंजरी** — नमस्ते। (इति निष्क्रान्ता)

(ततः प्रविशति चण्डवर्मा)

**चण्डवर्मा** — (सन्तोषम्) हञ्जे, किं श्रुतं त्वया यत् विक्रमादित्यराजस्य पत्नी छाया पुत्ररत्नमसूतेति।

**पल्लवी** — हां श्रुतं मया अधुनैव।

**चण्डवर्मा** — कथं श्रुतं, केन कथितम्।

**पल्लवी** — अधुना मे मैत्रिणी मञ्जरी समागता।

**चण्डवर्मा** — सा कुत्र गतवती अधुना।

**पल्लवी** — सा विक्रमादित्यस्य पुत्रस्य नामकरणाख्यं कर्म द्रष्टुं गतवती।

**चण्डवर्मा** — किं त्वया नगतं तया सार्थम्।

**पल्लवी** — न गतम्।

**चण्डवर्मा** — साधु कृतम् भवत्या।

**पल्लवी** — अहं गृहकर्मणि व्यापृतचित्ताऽस्मि। सर्वं विधाय गमने विलम्बो भविष्यति इति अहं तां अकथयम् त्वमेकाकी गच्छेति।

**चण्डवर्मा** — साधु कृतं भवता। हञ्जे शृणु। राजा विक्रमादित्यः पुरुषसंतानार्थं बहुविध यागान् विधाय वैदिक कर्मानुसारेण ब्राह्मणेभ्यः दक्षिणादिकं वितीर्य, सभक्तिकं सूर्यदेवं प्रार्थयामास। तस्मात् तस्य पुत्ररत्नमजायत इति लोकः कथयति।

**पल्लवी** — तत् सत्यमेव। प्राचीन परम्परालग्न चेतसां सर्वं प्रार्थनया वेदकर्मानुष्ठानेन भवति।

**चण्डवर्मा** — दैवभक्त्या असाध्यं साध्यं भविष्यति।

**पल्लवी** — तस्मात् अहं वच्मि। त्वं आस्तिको भव। वेदजपूको भव। प्राचीन संस्कृत्याः मान्यतां देहि। यदि एवं क्रियते तर्हि वयमपि राजोपमाः भविष्यामः।

**चण्डवर्मा** — त्वं किं भावयसि यत् अहं नास्तिकः इति।

**पल्लवी** — नाहं तथा भावयामि। किन्तु अधिक श्रद्धा परम्परायां भवितव्या इति केवलं भावयामि।

**चण्डवर्मा** — साधु, अधुनैव आवामपि नामकरणाख्यं कर्म द्रष्टुं गच्छावः। त्वं सज्जी भव। (इति अन्तः प्रविशति)

**पल्लवी** — (डोलिका समीपं गत्वा, पुत्रं पश्यन्ती) कदा मम पुत्रः वर्धमानो भविष्यति। कदा देशे एकः राजा भविष्यति। कदा अस्माकं परमानन्दः भविष्यति। देव त्वमेव सर्वरक्षकोऽसि, तुभ्यं नमः। (इति नमस्करोति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(विक्रमादित्यराजः सिंहासने उपविशति, सर्वे ज्योतिषविद्या पण्डिताः स्वीय स्थानेषु उपविष्टाः सन्ति)

**विक्रमादित्यः** — अयि भोः ज्योतिषाचार्यवर्याः एतावत्पर्यन्तं वैदिकपद्धत्या अन्नप्राशनपर्यन्तं सर्वसंस्काराः परिपूर्तिं गताः।

**प्रथमः** — महाराजानां वैदिकपद्धत्यां कीदृशी गाढ भक्तिः विद्यते सा एभिः संस्कारकार्यकलापैः केवलं ज्ञायते।

**द्वितीयः** —राजानः देशसंस्कृतिं देशसाम्प्रदायं वैदिक धर्मप्रचारं च कारयन्ति। यदि महाराजानः अस्य धर्मस्यकृते अनवरत दीक्षया कर्म न कुर्युः भारतीय संस्कृतिः दिवंगता भवेत्।

**तृतीयः** — भारतदेशे संस्कृतिः राजश्रिता अजीवत्, जीवति, जीविष्यती च।

**विक्रमादित्यः** —नहि केवलं राज्ञां धर्मः संस्कृति रक्षणम्। संस्कृति रक्षणं सर्व भारतीयानांजन्म संक्रामित कर्तव्यं भवति। वेषभूषाः गच्छन्तु परिवर्तनाम्। पानशन विषये भवतु वैविध्यं, किन्तु पञ्चदश कर्मणां संस्कार विशेषाः सर्वभारतीयैः अवश्यं परिपालनीयाः। अयमेव भारतीयानां सांप्रदायः। अयि भोः पण्डितवर्याः शृण्वन्तु भवन्तः। मे चिरंजीविनः जन्मपत्रिकां विलिख्य तस्य भविष्यत् च विलिख्य कथयन्तु भवन्तः।

**प्रथमः** — महाराज यदा पुत्रोदयः संजातः तदा अनुपदमेव मया जन्मपत्रिका विलिखिता। ममाभिप्रायानुसारं इयं पत्रिका महाराज लक्षण समंचिता भाति।

**द्वितीयः** — महाराज, मयापि बालकस्य जन्मपत्रिका विलिखिता। ममाभिप्रायानुसारं अस्य जीवितं बहु चित्रितमिव प्रतिभाति।

**तृतीयः** — मदीय भावनानुसारेण अयं तुलालग्न संजातः। तस्मात् न्यायेन राज्यं पालयिष्यति। किन्तु अंगारक बाधा विद्यते। तदर्थं शान्तिः करणीया इति मे प्रतिभाति।

**प्रथमः** — शान्तिः सर्वदा शुभसूचका भवति।

**द्वितीयः** — अधिकस्य अधिकं फलम्।

**तृतीयः** — अयं बालः अल्पेवयसि युवराजा शासकश्च भविता।

**विक्रमादित्यः** — अयि भोः ज्योतिषाचार्यवर्याः, एकजन्मपत्रिकाविषये सर्वेषां मतानि वैविध्यानि कथं भवन्ति।

(ततः प्रविशति दौवारिकः)

**दौवारिकः** — ( नामित पूर्वकायः वेत्रमण्डित दक्षिणहस्त नमस्कृत्य ) महा. राज, द्वारि तिष्ठन्ति मिहिराचार्यवर्याः, तत्र भवतां दर्शनाभिलाषी।

**विक्रमादित्यः** — अहो मे भाग्यम्। ज्योतिषाचार्यवर्याः मिहिर पण्डिताः द्वारि तिष्ठन्ति। विना आलस्यं तान् प्रवेशय।

**दौवारिकः** — यथाज्ञापयति देवः। ( इति निर्गच्छति )

( ततः प्रविशति मिहिरः। सर्वे उत्तिष्ठन्ति मिहिराचार्याय स्वागतं व्याहरन्ति )

**विक्रमादित्यः** — अयि मिहिर पण्डितवर्याः। नमोवाकं विदध्महे।

**मिहिरः** — स्वस्ति भवते। आचन्द्रतारार्कं ते कीर्तिः राजतु भूतले।

**विक्रमादित्यः** — उपविशतु भवान्। ( इति आसनं दर्शयति।

**मिहिरः** — ( आसने उपविशति ) राजन् बहुकालानन्तरं सुतमुखकमल दर्शनसुखं भवतां सम्प्राप्तं इति मे मनः निस्सीमानन्दं भजते।

**विक्रमादित्यः** — तत्र भवतां विदुषां आशीर्वाद बलोऽयम्।

**प्रथमः** — अवश्यं तत्र भवतां आशीर्वादोऽयम्।

**द्वितीयः** — प्रथमतः भवद्भिः समुदीरितं यत् पुत्रदर्शनसुखमनुभविष्यति राजा इति।

**तृतीयः** — जगति सर्वं दैवप्रेरणया महापुरुषाणां आशीर्वाद बलेन च भवति।

**विक्रमादित्यः** — अत्र अस्माकं सुतस्य भविष्यत्कालमुद्दिश्य चर्चा समजनि।

**मिहिरः** — अधुना अयं शिशुः। अस्य भविष्यत्कालमुद्दिश्य चर्चाकुतः।

**विक्रमादित्यः** — भवतां भाषणं मे अवगाहनं न भवति।

**मिहिरः** — शिशूनां भविष्यत् कालमुद्दिश्य न द्रष्टव्यं इति शास्त्रप्रमाणं विद्यते।

**विक्रमादित्यः** — तत् प्रमाणं राज्ञां बाधकं न भवति।

**मिहिरः** — भवता प्रोक्तं अङ्गीकरोमि। किन्तु लोकविषयं अहं ब्रवीमि। शास्त्रात् साम्प्रदायः बलवत्तरः इति मे अभिप्रायः।

**विक्रमादित्यः** — भवतु नाम। तत्र भवन्तः कुमारस्य पत्रिकां पश्यन्तु इति ममादेशः।

**प्रथमः** — बालस्य पत्रिका महाराजलक्षणसमञ्चिता इति मया विचार्य भणितम्।

**द्वितीयः** — बालस्य पत्रिका बहुळानिष्ट समञ्चिता इति मया संसूचिता अस्मिन् विषये भवद्भिः परिशील्य वक्तव्यमिति मे विज्ञप्तिः।

**तृतीयः** — अयंतु तुलालग्न संभूतः। तस्मात् न्याय्येन राज्यं पालयिष्यति इति मया प्रपञ्चितम्।

**मिहिरः** — अस्मिन् विषये मम वक्तव्यं न किञ्चिदप्यस्ति।

**विक्रमादित्यः** — भवन्तः ज्योतिषाचार्यवर्याः। तस्मात् युष्माभिः यदुच्यते तत् अन्तिमं वाक्यं भवति। अयि भोः मिहिराचार्याः कथयन्तु बालकस्य भविष्यत् कथं भासते इति।

**प्रथमः** — ( उत्थाय पत्रिकां मिहिराय ददाति, मिहिरः गृहणाति )

**मिहिरः** — ( उर्ध्वं विलोक्य हस्ताङ्गुलीभिः गणनां विधाय ) महाराज अयं अवश्यं महाराजलक्षणोपेतः।

**प्रथमः** — महाराज, श्रुतं भवद्भिः यत् मया कथितं तदेव कथ्यते मिहिराचार्य वर्यैः। मम शास्त्रदृष्टिः अकुण्ठिता भाति।

**विक्रमादित्यः** — जानाम्यहं यत् मे सभायां पण्डिताः क्षुण्ण शास्त्राभ्यासकाः इति।

**तृतीयः** — मयाऽपि सुविचार्य उक्तं अयं तुलालग्न संभूतः न्यायपालने दक्षः इति च।

**विक्रमादित्यः** — सर्वैऽरपि किञ्चित् न्यूनाधिक्येन एकमतं प्रतिपादितम्। तस्मात् अहं युष्मादृशानां पण्डितानां मण्डलेन सप्तर्षिमण्डल विराजित राजमण्डल मिव विराजे। ( हठात् मिहिराचार्यं विलोक्य ) अयि मिहिराचार्यवर्यः किं भवन्तः विचारयन्ति। किमप्यधिकं वक्तुं उद्यताः किम् ? विनावरोधं कथयन्तु भवन्तः।

**मिहिरः** — महाराज, अयं बालः ( इति मौनं अवलम्बते )

**विक्रमादित्यः** — कथयन्तु भवन्तः, अयं बालः भाग्यवानिति।

**प्रथमः** — मिहिराचार्याणां रसनायां शनिः वर्तते।

**तृतीयः** — तस्मात् मिहिराचार्याः भाषणे दरिद्राः भवन्ति।

**विक्रमादित्यः** — मिहिराचार्य कथयतु भवान्।

**मिहिरः** — अयं अल्पायुष्कः भवति।

**विक्रमादित्यः** — (आश्चर्येण) किं भण्यते भवद्भिः।

**मिहिरः** — सत्यं भण्यते महाराज। अयं पञ्चवयस्कः यदा भवति तदा वराहेण व्यापादितः भविष्यति, इति जन्मकुण्डली प्रत्यक्षं भणति।

**विक्रमादित्यः** — मिहिराचार्य। सम्यक् गणितं कृतं किम्? पुनः एकवारं गणयतु भवान्।

**मिहिरः** — महाराज, मे वाक्यं वेदवाक्यं भवति। यथा मम मित्रं भणति यत् मम रसनायां शनिः वर्तते इति तत् सत्यमेव। अहं न किमपि भणामि कदापि। यदि यत् किमपि भणामि आलोच्य भणामि। यदुच्यते तत् सत्यं भवति। मम वाक्सरणिः एतादृशी।

**विक्रमादित्यः** — मिहिराचार्यवर्य। भवान् भवदीय पाण्डित्येन दर्पितोऽस्ति। यत् एते कथयन्ति तत् नेति भवान् कथयति। स्वीय प्रतिभया भवदीय प्रतिमां स्थापयितुं भवन्तः कृत प्रयत्नाः भवन्ति। अधुना अवगतं मया। एते सर्वे जन्मपत्रिका साधु वर्तते इति कथयन्ति। भवान् स्वोपज्ञां प्रकटीकर्तुं बालः अल्पायुष्कः इति कथयति। अयं ते गर्वभावः। भवान् मम राज्ये स्थातुं नार्हति अपेहि मम सम्मुखात्। राजमर्यादां न भवान् जानाति।

**मिहिरः** — महाराज, मह्यं क्रुद्धो मा भवतु भवान्। असत्य कथनेन किं मे भवति। यत् मया कथितं तत् सत्यं भविता।

**विक्रमादित्यः** — मिहिर, अहं सर्वेभ्यः पण्डितेभ्यः श्रेष्ठतमः पण्डितप्रकाण्डः इति कथयितुं त्वं प्रयतसे इति जानाम्यहम्।

**मिहिरः** — कालक्रमेण मे ज्योतिषनिर्णयानुसारं न कोऽपि हानिः भवति, तदा भवन्तः मां निन्दन्तु इति अहं भणामि।

**विक्रमादित्यः** — अनन्तरं कथं अधुनैवाहं निर्णयिष्यामि। अयि भोः ज्योतिषाचार्यवर्याः युष्मदीय प्रज्ञया आनन्दितः अस्मि। अहं सुफलार्हां क्षेत्रेन्दिरां, गृहं सवत्सधेनु सहस्रं दानं करोमि। गच्छन्तु भवन्तः। मिहिराचार्यं भवता प्रतिपादितं अस्माकं अतिशय दुःखदायकं। अपिच त्रयाणां ज्योतिषचार्याणां अपेक्ष्या भवान् भवतः धीचातुर्यं दर्शयितुं पाण्डित्यगर्वेण अब्रवीत्। तस्मात् मे दानं तव देशबहिष्कारः एव।

**मिहिरः** — (उत्थाय) महाराज मया सत्यमुदीरितं ज्योतिषशास्त्रप्रमाणम्। स्वार्थाय न किमपि भणितं मया। मे पाण्डित्य प्रकटनाय कृतमिति भवद्भिः उदीरितं तत् असंगतं असंबद्धम्। भवतां आज्ञा शिरोधर्या मया। किन्तु बहुकालानन्तरं भवान् पश्चात्तापेन अशान्ति प्राप्य मम नाम संस्मरन् मदर्थं दत्तजीवनः सत्येन उन्मीलित लोचनः भविष्यति।

**विक्रमादित्यः** — मिहिर, भवान् पयोमुख विषकुम्भः। अपेहि मम सम्मुखात्। कः कोऽत्र भोः।

**प्रतिहारी** — (प्रविश्य) एषोऽस्मि देवः। (इति नामित पूर्वकायः भवति)

**विक्रमादित्यः** — मिहिरं अस्मात् प्रदेशात् बहिः निष्कासय।

**मिहिरः** — महाराज श्रृणु मे अन्तिमं वचः। अहं ब्राह्मणः मे राज्याभिलाषा नास्ति। नाहं सुखलोलुपः अस्मि। अहं वने तप्तुं गच्छामि। यदि मम उपस्थितिः आवश्यकी भवति तर्हि मे वार्ता प्रेषयन्तु। श्रृणु महाराज। मे वचनं असत्यं न भवति। मे वाक्षु पवित्रताऽस्ति। तस्मात् मया यत् कथितं तत् अवश्यं भवतीति मे मतिः। स्वस्ति भवते।

**विक्रमादित्यः** — अलं स्वकुच मर्दनेन। अपसर। (इति उच्चैः आदिशति)

(मिहिरः प्रतीहारिणा सार्धंनिर्गच्छति)

(यवनिका पतति)

* * *

# चतुर्थं दृश्यम्

(ग्रामे त्वटवृक्षस्य छायायां एकस्यां वितर्दिकायां त्रयः ग्रीमीणाः लवित्रयष्टि खनित्रैः युताः उपविश्य अन्योन्यं भाषयन्तः आसन्)

**यष्टिकः** — महाराजः अतीव धर्मात्मा। साम्प्रदायानुवादी। वेदब्राह्मण गोपरिपालकः। कथं मिहिराचार्यान् देशबहिष्कारं अकुर्वन् इति मे प्रश्नः।

**लवित्रकः** — ते देशरक्षकाः राजानः। तेषां निश्चयः अप्रतिहतः भवति। ते साधुमसाधुं। असाधुं साधुं कुर्वन्ति तेषां सिंहासन रक्षणाय। तस्मात् प्रोक्तं खलु स्मृति कर्तृभिः यत् राज्यान्ते नरकं ध्रुवम्। इति।

**खनित्रकः** — अस्मदीय प्राचीन स्मृति कर्तारः अनुभवज्ञाः सर्वमपि अनुभवपुर्वकं अवोचन्। वयमेव मूर्खाः पण्डितं मन्यमानाः।

**खनित्रकः** — वैदिक साम्प्रदायानुसारिणम्, ज्योतिषचार्येषु उत्तमं सत्यवादिनं विरागिणं, भौतिक सुखानभिज्ञं मिहिराचार्यं, देश बहिष्कारमकरोत् राजा। तस्मात् ममापि संतापः भवति।

**यष्टिकः** — अस्मिन् विषये राज्ञांमतिः अकरणीयकर्मणि प्रवर्तिता। ते मिहिराः शास्त्रप्रामाणं घृत्वा कुमारस्य भविष्यत् उक्तवन्तः न तु कापटयभावेन। अस्मिन् विषये क्रोधस्य स्थानमेव न भवति।

**लवित्रकः** — राजानः मत्सरग्रस्ताः। ते सर्वदा स्वार्थाय अकरणीयं करिष्यन्ति। ते गोमुखव्याघ्राः भवन्ति। शृणु, बहुकाऽलानन्तरं तेषां सुतमुखदर्शनानन्दः आंसीत्। सर्वेऽपि ज्योतिषाचार्याः यथापत्रिकां स्वीयमतं प्रपञ्चिताः आसन्। तद्वत् मिहिरोऽपि स्वीयमतं प्रकटी चकार। तस्य देशबहिष्कारः अयुक्तः इति सर्वेषामपि अभिप्रायः।

**खनित्रकः** — मिहिराचार्योऽपि स्वीय भावनां विनाकापटयभावं प्रकटी चकार। अयं आचार्यः किञ्चित् अलौकिकः। परमानस भावनानभिज्ञः। मनसि यत् स्फुरितं तत् सर्वं प्रकटीकृत्य, अकारणेन देशबहिष्कृतः आसीत्।

**यष्टिकः** — अन्ततः मम भावना एवमस्ति, राज्ञा सहसा कर्म कृतमिति।

पुत्रस्य मरणं भविता इति श्रुत्वा आत्मानं संयामितुं अशक्तो भूत्वा एवं दिदेश इति मे मतिः ।

**लवित्रकः** — यदि राजा एवं करिष्यति तर्हि कोऽन्यः धर्मरक्षकः भविष्यति इति प्रश्नः ।

**खनित्रकः** — राजा पश्चात्ततः तं मिहिरं पुनः समाह्वयिष्यतीति मे प्रतिभाति ।

**यष्टिकः** — एवं भवितुं शक्यं भवति । किन्तु एकदा अवमानितः मिहिराचार्यः प्रत्यागमनं अङ्गीकरिष्यति किं इति अन्यः प्रश्नः ।

**लवित्रकः** — मिहिरस्य प्रत्यागमनं अनुपदं न भविष्यति ।

**खनित्रकः** — अधुना देशे वर्तमान परिस्थितयः सर्वेषामपि असौख्यदायकाः भवन्ति ।

**यष्टिकः** — अस्मदीय भाषणं यः कोऽपि श्रुत्वा राज्ञे यदि निवेदयति तर्हि अस्माकमपि मिहिरस्थितिः भविष्यति ।

**लवित्रकः** — अस्माकं मिहिरदशा न भवति ।

**खनित्रकः** — तथ्यमेवोक्तं । अस्माकं मिहिरदशा न भवति । किन्तु यदि भविष्यति यत्किमपि तद् मरणमेव भविष्यति ।

**यष्टिकः** — अस्मिन् विषये न निर्णेतारः भवामः ।

**लवित्रकः** — कालः एव निर्णायकः भविष्यति ।

**खनित्रकः** — यत् भविष्यति तदेव भविष्यति । पिष्टपेषणं किमर्थम् ? इतः परं अस्माकं भाषणं न योग्यं भवति । गच्छामः वयं कार्यकरणाय । गत जलसेतु बन्धनं किमर्थम् ? उत्तिष्ठन्तु, आगच्छन्तु, गमिष्यामः । ( इत्युत्थाय उष्णीषबन्धनादिकं विधाय स्वीयस्वीय वस्तुचयं गृहीत्वा गच्छन्ति ) अयि मित्रवर्याः एतत् विषयमुद्दिश्य न कि भाषणीयं विद्यते । नमांसि । ( सर्वेपि ) नमांसि । ( इति गच्छन्ति )

( यवनिका पतति )

* * *

# पंचमं दृश्यम्

( विक्रमादित्यः सिंहासने उपविष्टः, मन्त्रि पुरोहितौः पार्श्वस्थ आसनयोः उपविष्टौ । )

**विक्रमादित्यः** — अमात्य, अयं मे चिरंजीवः धनुंजयः समाप्तपञ्चवर्षीयः संजातः, अस्य अक्षराभ्यासः करणीयः अस्ति ।

**अमात्यः** — हां सत्यमेव करणीयः विद्यते शुभमुहूर्ते ।

**विक्रमादित्यः** — अमात्य, अद्य प्रभृति शुभदिवसाः, अशुभ दिवसाश्च न भवन्ति मे करणीयेषु समारभ्येषु । विश्वकर्मणः सृष्ठयां सर्वं मङ्गलात्मकं भाति मे ।

**अमात्यः** — भवता उदीरितं सत्यमेव राजन्, किन्तु भारतीय सांप्रदायस्तु शुभाऽशुभ कर्मपरीतः अस्ति । तस्मात् भवन्तः देशरक्षकाः, अस्मदीय परम्परानुयायिनः, ईदृशी भावना भवतां न योग्या, शोभना च भवति ।

**विक्रमादित्यः** — न मे विद्यते विश्वासः अस्मिन् ज्योतिषे ।

**अमात्यः** — महाराज, विश्वासः अस्तिवा नवा नायं विषयः । सर्वथा राजभिः महापुरुषैः, प्रजाभिः, परम्परा परिपालनीया रक्षणीयाच । वयं गमिष्यामः किन्तु परम्परा न भ्रष्टा भवति । अवश्यं ऋषीणां मार्गः आदेशश्च अङ्गीकार्यौ भवतः राजन् । भवान् एकवारं स्मरस्व रघुवंशीयान् । एतावत्पयन्तं सर्वोऽपि लोकः तान् कीर्तयति ।

**विक्रमादित्यः** — अमात्य, भवता भणितं श्रुतम् । त्वमेव सर्वं कारय ।

**अमात्यः** — अयि पुरोधसाः, धनुञ्जयाय अद्यैव अक्षराभ्यासं कुर्वन्तु भवन्तः शुभवेळायाम् ।

**पुरोहितः** — अमात्य अद्य षष्ठी । विद्यारम्भे शुभाषष्ठी । इति शास्त्रं । तस्मात् अद्यैव अक्षराभ्यासः भविष्यति ।

**अमात्यः** — भवन्तः गत्वा सर्व व्यवस्थां कुर्वन्तु । रांजानः समागमिष्यन्ति ।

**विक्रमादित्यः** — अमात्य, मिहिरः अद्य मे मनसि प्रशान्तात्मा भूत्वा वने तपस्यन् इव चित्रितः प्रतिभाति ।

**अमात्यः** — प्रभो अयं मिहिरः धर्मानुयायी, मोक्षकांङ्क्षी च।

**विक्रमादित्यः** — मिहिरस्य वाचि शक्तिः विद्यते किम् ?

**अमात्यः** — अयं ज्योतिषशास्त्र पारंगतः। नाहं किमपि वक्तुं समर्थः अस्मिन् विषये। किंतु अयं प्रभावशाली।

**विक्रमादित्यः** — अद्य बालस्य पञ्चवर्षाणि व्यतितानि भविष्यन्ति।

**अमात्यः** — मिहिराचार्येण सूचितं यत् तत् अवश्यं अस्माभिः सावधानतया अनुपालनीयम् विद्यते।

**विक्रमादित्यः** — अन्ये ज्योतिषाचार्याः बालमुद्दिश्य, तस्य भवितव्यमुद्दिश्य सम्यगवोचन् किन्तु मिहिरः स्वप्रज्ञां प्रदर्शयितुं अन्यथा अशुभं प्राकटयत्।

**अमात्यः** — महाराज तथा न भणितव्यम्। भवतां एकपुत्रविषये एतादृशी कुशङ्का भवति। विचार्यमाणे, अन्ये ये पण्डिताः विद्यन्ते ते भवद्भ्यः धनकनकवाहन वस्तुचयं भूखण्डं च प्राप्तुं एवं अवोचन्। किन्तु अयं मिहिराचार्यः फलकाङ्क्षी नहि। सः ज्योतिष सिद्धान्त स्थापनार्थं केवलं जीवति इति मे मतिः।

**विक्रमादियः** — विचार्यमाणे तथैव ममापि प्रतिभाति।

**अमात्य!** — तस्मात् कुमार रक्षणे व्यवस्था कर्तव्या।

**विक्रमादित्यः** — अयं बालः कुत्रापि गन्तुं न क्षमः। वराहस्य नगरप्रवेशः असंभवः। कथं एनं वराहः हनिष्यति ? तस्मात् मे शङ्का भवति तस्य ज्योतिषे।

**अमात्यः** — तस्मादेव ममापि शङ्का भवति। अवश्यं यत् किमपि भविष्यति। न वयं वक्तुं शक्ष्यामः घटनाऽघटनामुद्दिश्य। पुरा राजा परीक्षित् एतादृशीमेवावस्थां अन्वभूत्। तस्मात् ब्राह्मण वचनं व्यर्थं न भवति। ब्राह्मणानां वाक्षु शक्तिः विद्यते। तस्मात् सावधानतया प्रवर्तितव्यं इति ममाभिप्रायः।

**विक्रमादित्यः** — भवता समुदीरितं सत्यमेव। किन्तु सर्वेषां ब्राह्मणानां वाक्षु शक्तिः न भवति।

**अमात्यः** — अहं विद्यमान परम्परामुद्दिश्य अवोचम्। अत्र किमपि अस्मिन् विषये अनिर्वचनीयं गोप्यं वर्तते इति मे प्रतिभाति। अयं सत्यवान्, निष्ठावान् पवित्रवान् ब्राह्मणः। तस्मात् अश्रद्धा न कर्तव्या इति ममाभिप्रायः।

**विक्रमादित्यः** — नास्मिन् विषये भीतिः विद्यते।

**अमात्यः** — शतथा रक्षणा कर्तव्या अस्माभिः। यदा कदापि यस्मिन् कस्मिन् समये वराहः पत्तनं प्रवेक्ष्यति।

**विक्रमादित्यः** — अमात्य, अद्य प्रभृति सकलराज्य रक्षकभटैः सावधानतया प्रवर्तितव्यमिति, राजधान्यां हिंस्र जन्तूनां प्रवेशः यथा न भवति तथा सर्वे उपायाः कर्तव्याः इति, जागृदवस्थायां सर्वमपि पत्तनं स्थातव्यमिति घोषणां कारयन्तु भवन्तः।

**अमात्यः** — तथैव सर्वं कारयिष्यामि। अद्य प्रभृति कुमारं, प्रासादाग्रे चरम-तले संस्थाप्य तं सर्वराजलक्षणचिन्हितेन वस्तुचयेन समलंङ्कृत्य ध्वजस्तम्भमधः सिंहासने उपवेशयामः।

**विक्रमादित्यः** — तथैव कुर्वन्तु। (इत्युत्थाय गच्छति, अमात्यः अपि गच्छति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(पल्लविनी गृहे कर्मकुर्वन्ती आस्ते, ततः प्रविशति चन्द्रिका)

**चन्द्रिका** — हञ्जे पल्लविनी किं श्रुतं भवत्या ?

**पल्लविनी** — किमिति।

**चन्द्रिका** — विक्रमादित्यपुत्रस्य धनुञ्जयस्य मरणमुद्दिश्य।

**पल्लविनी** — किं ब्रवीषित्वम्।

**चन्द्रिका** — सत्यं ब्रवीमि।

**पल्लविनी** — बत ! कथं अल्पे वयसि मरणम्।

**चन्द्रिका**: — कथयामि श्रुणु।

**पल्लविनी** — अवहितास्मि। अमूलाग्रं कथय।

**चन्द्रिका** — धनुंजयजननानन्तरं राजा विक्रमादित्यः कुमारस्य जन्मपत्रिकां द्रष्टुं सर्वज्योतिषाचार्यान् आदिदेश। सर्वे ज्योतिषाचार्यः पुत्रकस्य जन्मपत्रिकां विलोक्य समीचीनं साधु इति अब्रुवन्। किन्तु तेषां सिद्धान्तं अनङ्गीकृत्य कुमारस्य मरणं एकेन वराहेण पञ्चमेवयसि भविष्यतीति मिहिराचार्याः उद्घोषयन्।

**पल्लविनी** — बत, एवं भविष्यति? ततः।

**चन्द्रिका** — ततः विक्रमादित्यः अतीव क्रुद्धः मिहिराचार्यं देशात् बहिष्कृतवान्।

**पल्लविनी** — शान्तं पापम्। मिहिराचार्याणां कष्टदशा संप्राप्ता।

**चन्द्रिका** — तदा मिहिराचार्याः अयि भोः महाराज मया यत् कथितं तत् सत्यं भविष्यति। अहं भवदीय आज्ञां पालयिष्यामि। किन्तु शृण्वन्तु भवन्तः, यदि मदीय सहायमपेक्ष्यते तर्हि मह्यं वार्तां प्रेषयन्तु, अहं अवश्यं भवतः समीपमागमिष्यामि। इति राज्ञे स्वस्ति वाचकं उद्गीर्य वनं गताः।

**पल्लविनी** — तदानीं किमभूत्।

**चन्द्रिका** — तदानीं राजा अतीव चिन्ताग्रस्तः धनुञ्जयस्य रक्षणाय सर्व प्रयत्नाः करणीयाः इति सकल सैन्यं आदिदेश।

**पल्लविनी** — तदा ते किमकुर्वन्।

**चन्द्रिका** — तदा सर्वे सैनिकाः तं धनुञ्जयं सौधोपरि चरमतले सर्वां सौख्यमयीं व्यवस्थां विधाय वराहलाञ्छनविराजितध्वजपटं ध्वजस्तम्भे आविष्कृत्य, तस्य ध्वजस्य समीपे बालं सिंहासने उपविशयम्।

**पल्लविनी** — इयं कथा श्रोतुं मां उत्सुकयति। ततः।

**चन्द्रिका** — एकदा संध्या समये हठात् समागतझंझावातेन सः ध्वजस्तम्भः ताडितः तस्मिन् सौधतले तत्रैव पपात। तेन प्रचण्डपतनेन सः कुमारः धनुंजयः पञ्चत्वं प्रापितः। तदा ध्वजस्य वराह चिन्हित केतनपटं तस्य बालकस्योपरि आच्छादितमभूत।

**पल्लविनी** — हा बत धनुंजयस्य पञ्चत्व वार्ता श्रवणेन मे मानसं दुःखप्रपूर्णं भवति। बत अधुना विक्रमादित्य महाराजः पुत्रविहिनो जातः। दैवनिर्णयं न कोपि परिमार्ष्टुं शक्नोति।

**चन्द्रिका** – सर्वमपि धरण्यां दैवनिर्णयेन भवति।

**पल्लविनी** — ततः किं जातम् कथय।

**चन्द्रिका** — विक्रमादित्यराजः बहुसंतप्तः पुत्रशोकेन विललाप।

**पल्लविनी** — पुत्रशोकः बहुसंतापकारकः खलु जगति सर्व प्राणिनाम्।

**चन्द्रिका** — तदनन्तरं किं जातम् श्रृणु।

**पल्लविनी** — किं जातं कथय।

**चन्द्रिका** — तदा राजा मिहिरं स्मरन् मिहिराचार्याणां प्रज्ञावैशिष्ट्यं कीर्तयन् महाब्राह्मणाय घोरं विधत्तं इति पदे पदे वदन् तं महाब्राह्मणं आह्वयितुं इच्छुकः अभूत।

**पल्लविनी**—अधुना राज्ञः मानसं पुत्रमरणेन दुःखाक्रान्तं, मिहिरस्य निष्कासनेन सतप्तं च बभूव। तस्य मानसं अधुना द्विधा दुःखितं बभूव।

**चन्द्रिका** — अद्य अधुना शोकसभा भविष्यति। तस्मात् अहं तत्र गच्छामि। मध्ये मार्गं त्वां द्रष्टुं, एनां वार्ता तव कर्णपुटे पातयितुं समागतास्मि।

**पल्लविनी** — अहं आगन्तुं अशक्ताऽस्मि यतः मे कुमारस्य प्रकृतिः समीचीना न प्रतिभाति। चण्डवर्मानः तत्र गतवन्तः इति मन्ये। अपिच एतादृशी वार्ता श्रवणेन मे मानसं किञ्चित् व्यथाविलं आसीत्।

**चन्द्रिका** — विलम्बः संजातः अधुनाहं गच्छामि। नमस्ते पल्लविनि। (इति नमस्कृत्य गच्छाति)

**पल्लविनी** — आगच्छ पुनदर्शनाय। (इति अन्तः प्रविशति)

(यवनिका पतति)

* * *

# सप्तमं दृश्यम्

( दुःख संतप्तः राजा इतस्ततः चरन् एकस्मिन् आसने उपविशति )

**विक्रमादित्यः** — बत न कोऽपि जानाति विधि वैपरीत्यम्। बहुकालानन्तरं पुत्रोत्पत्तिः। अनंतरं पुत्रस्य मरणं इत्येतत् सपद्सपदं जातम्। मिहिराचार्य, भवता प्रतिपादित सिद्धान्तः फलितः जातः। अहो ते बुद्धिविशेषः। वयं राजानः गर्वान्धाः मदेनमत्ताः तामसरजोगुणान्विताः। तत्र भवन्तः ब्राह्मणाः सत्वगुण सहिताः। यूयं प्रसन्नात्मानः भवन्ति। ( उत्थाय पार्श्वे विद्यमान घण्टां नादयति, गत्वा आसने उपविशति )

**प्रतीहारी** — ( प्रविश्य ) अयमस्मि। ( इति नामित पूर्वकायः भवति )

**विक्रमादित्यः** — अमात्यवर्यान् आह्वय।

**प्रतीहारी** — यथाऽज्ञापयति देवः। ( इति गच्छति )

( ततः प्रविशति अमात्यः )

**अमात्यः** — नमांसि महाराज। ( इति नमस्करोति )

**विक्रमादित्यः** — अमात्यवर्य, मिहिरवचनं सत्यं बभूव। सः सत्यं भूदेवता अस्ति।

**अमात्यः** — महाराज। अयं वयसा कनिष्ठः, किन्तु बुध्या गरिष्ठः। अद्य तस्य वचांसि सत्यविलसितानि भान्ति।

**विक्रमादित्यः** — महामात्य, अयं कुमारः वराहेण मारितः भविष्यतीति तेन प्रोक्तम्। किन्तु वराहेण न मारितः। वराहचिह्नमुद्रित पताकध्वजशूलेन मारितः।

**अमात्यः** — महाराज अधुनापि भवतः शङ्का अस्ति किम् ?

**विक्रमादित्यः** —शङ्का नहि। किन्तु वराहेण न मारितः किन्तु शूलेन मारितः।

**अमात्यः** — महाराज मिहिराचार्याणां ज्योतिष सिद्धान्तस्य कलङ्कमापादयितुं भवन्तः प्रयतन्ते किम् ?

**विक्रमादित्यः** — नाहं प्रयतामि। किन्तु गतं कथयामि।

**अमात्यः** — राजन् वयं कुमारस्य रक्षणोपायान् व्यरचयाम। तस्मात वराहस्य नगरप्रवेशः असम्भवः आसीत्।

**विक्रमादित्यः** — येन केनापि रूपेण मृत्युः संप्राप्तः।

**अमात्यः** — जगति मरणमवश्यमेव जन्तोः। विचारेण नहि प्रयोजनं विद्यते।

**विक्रमादित्यः** — अमात्य, अहं पुत्रशोकेन प्रसंतप्तमानसोऽपि मिहिराणां मेधाशक्त्या अत्यन्तचकितः सर्वदा तमेव चिन्तयामि।

**अमात्यः** — राजेन्द्र, तेजस्वी दूरस्थितोऽपि, सर्वदा दवीयान् प्रतिभाति। भगवान् मिहिरः अनेककोटिक्रोश दूरे विद्यमानोपि तेजस्विनां गणनांयां अत्यन्त सन्निहितत्वं भजते। सा एव तेजस्विनां महिमा।

**विक्रमादित्यः** — अमात्यवर्य, अयं ब्राह्मणः। पण्डितः महामेधावी। अयं मम राज्ये, अपिच मम सभायां स्थातव्यः भवति। सः अधुना कुत्र विद्यते, किं कष्टं भजते वा, विचार्यमाणे मया असाधु कृतमिति भाति।

**अमात्यः** — जगति सर्वस्यापि अन्धकारपरीतजीवनं यदा कदापि जीवने भवत्येव।

**विक्रमादित्यः** — अयं अधुना कुत्रास्ति इति भवतां अभिप्रायः।

**अमात्यः** — श्रुतं मया बदरिकाश्रमे तपतीति।

**विक्रमादित्यः** — तस्य मम राज्ये पुनः प्रवेशः कर्तव्यः इति समादिशतु।

**अमात्यः** — राजन् अधुनैव सेवकान् संप्रेष्य तमानेतुं आदिशतु।

**विक्रमादित्यः** — ( घण्टां नादयति )

**प्रतिहारी** — ( प्रविश्य ) एषोऽस्मि देव। ( इति नमस्करोति )

**विक्रमादित्यः** — सैन्याधिपतिं प्रवेशय।

**प्रतिहारी** — यथाज्ञापयति देवः। ( इति नमस्कृत्य गच्छति )

( ततः प्रविशति सेनाधिपतिः )

**सेनाधिपतिः** — ( प्रविश्य उरसि हस्तं निक्षिप्य किञ्चित् अवनतशीर्षः भूत्वा नमस्करोति )

**विक्रमादित्यः** — अयि सेनापते श्रुणु, बदरिकाश्रमे तपस्यन्तं मिहिराचार्यवर्यं प्रत्यानयतु भवान् इति मम आज्ञा।

**सेनाधिपतिः** — यथाज्ञापयति देवः। ( इति गच्छति )

**अमात्यः** — महाराजाः भवन्तः सुतमरणशोकेन अतीव ग्लापितमनस्काः अभवन्। गत्वा भवन्तः विश्रान्तिसुखमनुभवन्तु।

**विक्रमादित्यः** — भवन्तः अपि परिश्रान्ताः। भवन्तः अपि गच्छन्तु। (इति उत्थाय अन्तः प्रविशति, अमात्यः अपि तमनुसरति)

(यवनिका पतति)

* * *

## अष्टमं दृश्यम्

(विक्रमादित्यः सिंहासने उपविशति, अमात्यः पार्श्वे उपविशति, ज्योतिषशास्त्र पारंगताः त्रयः ब्राह्मणाः पार्श्वे उपविशन्ति)

(ततः प्रविशति भटः)

**भटः** — (प्रविश्य नमस्कृत्य) महाराज मिहिराचार्यवर्याः आगताः ते द्वारि तिष्ठन्ति।

**विक्रमादित्यः** — अनुपदं प्रवेशय।

**भटः** — यथाज्ञापयति देवः।

(ततः प्रविशति मिहिरः सर्वे उत्तिष्ठन्ति)

**विक्रमादित्यः** — (तस्याभिमुखं गत्वा तस्य हस्तौ गृहीत्वा विनमित गात्रः) मिहिराचार्यवर्य एहि, (इति आनीय तं पार्श्वे विद्यमानपीठोपरि उपवेशयति, सर्वे उपविशन्ति) मिहिराचार्य, (इति सगद्गदं) कुमारः दिवंगतः।

**मिहिरः** — महाराज, मा विचारयतु भवान्। जगति सर्वेषां जन्म कारण मनुसृत्य भवति। तदनुसारं ते जीवन्ति, नश्यन्ति च। अस्मिन् विषये श्रद्धा नदेया। जातस्यहि ध्रुवोमृत्युः। जगति वृक्षस्य पुष्पाणि भवन्ति। तानि पुष्पाणि सर्वाणि शलाटवः न भवन्ति। सर्वाणि शलाटवः फलानि न भवन्ति। सर्वाणि फलानि नातु

भूयन्ते जनैः। इयं लोकपरिपाटिः। अत्र विचारः नहि कर्तव्यः। इयं रीतिः चर्वित चर्वणा भवति। नात्र चिन्ताहेतुः विद्यते।

**विक्रमादित्यः** — आचार्यवर्य वयं राजानः अरिषड्वर्गादिभिः जीवामः। युष्मादृशाः चिन्ताविहीनाः विरागिणः। वयं तु सुतरां लौकिकाः। अस्मादृशानां सर्वदा लोकविचारः एव। तस्मात् कारणात् वयं मलिनाः संजाताः।

**मिहिरः** — महाराज तथा मा वक्तव्यम्। सर्वः सर्वं न भवति। सर्वेषां जीवन पद्धतिः विभिन्ना। नत्रा चिन्तायाः हेतुः विद्यते।

**विक्रमादित्यः** — मिहिराचार्याः, अहं क्षन्तव्योऽस्मि। भवन्तः ऋषिप्रायाः। सर्वमपि यूयं द्रक्ष्यथ समक्षं। तादृशी शक्तिः अस्माकं न विद्यते।

**मिहिरः** — राजेन्द्र, भवन्तः धीरोदात्त नायकाः। भवद्भिः विना देशः अराजकः भविष्यति। गतं गतमेव न स्मर्तव्यं। वय भारत संस्कृति प्रेमिणः। वयं शास्त्र रक्षकाः, किंतु न मारकाः भवेम।

**विक्रमादित्यः** — मिहिर अद्य मे मतिः विकसिता। अद्य प्रभृति भवान् मे सभा रत्नेषु नवमः भविता। भवतां नाम अद्य प्रभृति वराहमिहिरः इति भविष्यति। भवन्तः मे कुमारस्य मृत्युः एकेन वराहेण भविष्यतीति सूचितवन्तः। ततः भवतां नाम आगामिनि काले जगति सर्वेषां तत्रभवन्तः मम राज्ये विराजिताः ज्योतिषाचार्यवर्याः इति सुविदितं भविष्यति।

**वराहमिहिरः** — राजेन्द्र, सर्वं जगति सहकारेण अन्योन्याश्रयेण भासते। सर्वं वस्तु परस्पराधीनं भवति जगति। भवद्भिः वयं अस्माभि भवन्तः अन्योन्याश्रयेण भारतीय इतिहासे चिरस्थानं अक्षरत्वं च भजिष्यामः। स्वस्ति भवते। ( इति आशीर्वादान् ददाति )

**विक्रमादित्यः** — आचार्यवर्य युष्मभ्यं नमः। ( इति नमस्करोति )

**वराहमिहिरः** — प्रचन्द्रमास्थिरति दीर्घमायुः।

( यवनिका पतति )

* * *

# ।। बिल्हणीयम् ।।

वन्दे प्रभाविनममुं सरसं महान्तं ।
संतानवज्जगति संततिमूलभूतम् ।
लावण्य शोभितमहर्निशसंगमात्तं ।
सौन्दर्यपायिनमहं मधुयौवनाख्यम् ।।

(नान्द्यन्ते)

**शशी** — अयि भोः सभास्ताराः अद्य वयं काश्मीरपण्डित बिल्हणकवेः जीवितमुद्दिश्यकृतं नाटकं बिल्हणीयं प्रयोक्तुं उद्यतास्मः। तदर्थं मे जाया ज्योत्स्ना अस्मिन् नाटके यामिनी पात्रधारी भविष्यति ।

**ज्योत्स्ना** — (सवेगं प्रविश्य) अरे प्रिय किमर्थं मम नाम सर्वेषां समक्षं घोषयसि । नाहमुक्ताऽस्मि यत्किमपि भवता नाटकमुद्दिश्य । किमेतत् नाटकम् ? कोऽयं कविः ? सविस्तरं कथय प्रथमतः। अनन्तरं यदि इच्छा भवेत् तर्हि नटिष्यामि ।

**शशी** — अधुना कथयितुमेव अत्राऽगतोऽस्मि । कथयामि श्रृणु । अस्य नाटकस्य नाम बिल्हणीयम् । अस्य नाटकस्य कर्ता गीर्वाणान्ध्रभाषाप्रवीणः कलाभिमानीं महाकविः पण्डित परीक्षित् शर्मा ।

**ज्योत्स्ना**— अयं महाकविः कथम् ?

**शशी** — अयं यशोधरा महाकाव्यकर्ता। तस्मात् अयं महाकविः।

**ज्योत्स्ना** — कलाभिमानी कथम् ?

**शशी** — ललित गीता लहरी इति, अक्षय गीत रामायणमिति च गेय-काव्यद्वयं लिलेख तस्मात् कलाभिमानी । अस्य गीर्वाणगेयचक्रवर्तीति नामान्तरमपि विद्यते ।

**ज्योत्स्ना** — पण्डितः कथम् ।

**शशी** — अयं आबाल्यं गीर्वाणान्ध्रभाषाद्वये कृतपरिश्रमः। तयोः भाषयोः पदवींरश्च। अयं विंशति संवत्सराणि शालासु गीर्वाणान्ध्राङ्गल भाषाः बोधयामास।

**ज्योत्स्ना** — अधुना विदितास्मि। अहं सानन्दं अस्मिन्नाटके बहुरूपी भविष्यामि।

**शशी** — प्रिये ज्योत्स्ने अस्मिन् वसन्ततौ किंचित् संगीतकं श्रावय।

**ज्योत्स्ना** — प्रिय, श्रुणु श्रावयामि।

**गीतम् (वसन्त रागे)**

अये संकुल जीवन सुखकर मधुर हसन्तम्
गाय गाय वसन्त रागिणि ऋतुराज वसन्तम् ॥ध्रु.॥

शशि पिककीर मयूर मधुव्रत निचय समाकुल सुषमाकान्तम्
सकलाशावृत चटुल समीरण शीतल पूत सुगन्ध विभान्तम् १

युवतीजन हृदयारविन्द मधुबिन्दु गुञ्जन चपल मिलिन्दम्
मदनानल ज्योतिर्मय सूनपरागातिशयानन्तानन्दम् २

धरणियुवतीरञ्जन प्रथमसमागम संतत बहुनिरतम्
विकसित नीरज रागपराग विर्चचित मधुपरिमल हसितम् ३

खगकुल कोकिल कूजन मङ्गलवाद्य सुनादावलि कलितम्
बम्भर गुञ्जन शब्दायित ऋतुगुणगण नामावलि लसितम् ४

**शशी** — (आकर्ण्य) प्रिये ज्योत्स्ने मदनाभिरामनृपतेः पुत्रिका यामिनी संगीतराज्ञी गायन्ती आस्ते। एहि गच्छावः श्रोतुम्। (इति उभौ गच्छतः)

(संगीत शालायां मृदङ्ग मर्दल वीणा पणव वेणु इत्यादयः सन्ति यामिनी वीणा वादयन्ती गायन्ती आस्ते। तस्याः निकटे देवी रतिः उपविश्य गानं श्रुणोति)

## गीतम् (भीमपलास रागे)

आयाता मधुर मधुमामिनी । मुग्धवधूजन जीवनदायिनी
मलयानिल चञ्चल गामिनी । मधुमय जीवित वसन्तभामिनी ।।ध्रु.।।

चिरयति मे जीवन वसन्तदाता । अभिनव यौवन मदसंभरिता
रसमय प्रियतम पदसंगीता । वल्लभ प्रतिकृति दर्शन रमिता १

निन्दति स्वान्तं रञ्जित संन्ध्यारागम् । शतथा मन्जुल गन्धिल कुसुमपरागम
मधुरं गायति प्रियतम मोहन रागम् । प्रथयति लोके प्रेम लतानुरागम् २

परभृतविरुतं कुरुते हृदयम् । पति विरहित जनमनुरागमयम्
कर्षति चापं मुन्चति शरनिचयम् । अबलाजन हृदयमदयमदनोऽयम् ३

**रतिः** — बाले यामिनि त्वं संगीत नाटचयोः गायिका अपिच अभिनेत्री संजातासि । सम्यक् गेयमिदं गीतं त्वया । अस्य गीतस्य अर्थः कः विस्तारय पुत्रि ।

**यामिनी** — मातः अहं संगीतं जानामि, नाटचं जानामि, किन्तु अस्य गीतस्यार्थं न जाने ।

**रतिः** — अर्थं विना पठनं गानं च व्यर्थं भवति ।

**यामिनी** — जानामि मातः । नटने गायने च विना संस्कृत साहित्यस्य ज्ञानं तन्निष्टः रसः पराकाष्ठां न प्राप्नोति ।

**रतिः** — अर्थज्ञानं विना आनन्दः कथं भवति ।

**यामिनी** — न भवति । किन्तु केवल श्रवण दर्शनमात्रेण अर्धानन्दो भवति ।

**रतिः** — कस्येयं गीतिः ।

**यामिनी** — गीर्वाण गेयचक्रवर्तिनः गीतिरियमिति जगति प्रथा वर्तते ।

**रतिः** — योवा कोवा भवतु इयं गीतिका श्रवणानंदकरी केवलं नहि किन्तु अत्यन्तात्मानंदकारिणी भवति ।

**यामिनी** — जननि, मे संस्कृत साहित्याभ्यासे अत्यन्त आग्रहः वर्तते। भवती पितरं निवेद्य संस्कृत काव्यप्रपन्चपठने सुव्यवस्थां कारय।

**रतिः** — बाले अहमपि तथैव भावयामि । संस्कृतज्ञानेन विना सर्वाः कलाः निष्फलाः, सकलाः विद्याः प्राणहीनाः भवन्ति। सर्व अभ्याससमुदायः संस्कृतात्माहीनः निर्जीवः भवति। संस्कृतज्ञानेन विना कलाभिमानः विडम्बनाप्रायः भवति।

**रतिः** — बाले त्वं सर्वाङ्ग सुन्दरी। सत्यं यामिनी इव राजसे। किन्तु यदि प्रसन्नचन्द्रस्य आविर्भावः भवेत् तर्हि सर्व जीवितं कलामयं भवत्येव।

**यामिनी** — (अवहित्थया वीणां पार्श्वे निक्षिप्य उत्तिष्ठति)

**रतिः** — (हसन्ती) बाले कथं त्वं लज्जावनताऽसि : ?

(ततः प्रविशति वेत्रवती)

**वेत्रवती** — तत्र भवति राज्ञि अभिवादयेऽहम्। (इति अभिवादनं करोति) तत्रभवत्योः उपस्थितीः अपेक्ष्यते महाराजेन।

**रतिः** — हन्जे, त्वं गच्छ। आवां आगच्छावः।

**वेत्रवती** — यथाज्ञापयति देवी। (इति नमस्कृत्य गच्छति)

**रतिः** — बाले यामिनि एहि गच्छावः। (इति यामिन्यासार्थं गच्छति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(मदनाभिराम नृपतिः सिंहासने उपविष्टः परिचारिके वीजयतः अमात्यः किन्चित् दूरे पार्श्वतः आसनें उपविष्टः)

**मदनः** — अमात्य शेखर, अद्य सर्वत्रापि देशे घोषणा कर्तव्या।

**अमात्यः** — कामुद्दिश्यघोषणाकर्तव्या निवेदयन्तु भवन्तः।

**मदनः** — अमात्य शेखर, संगीतनाट्याभिनिवेशिनां युवतीनां संस्कृतं पाठयितुं एकः काव्यालङ्कारज्ञः पण्डितः अनुपदमेव अपेक्ष्यते इति घोषणां कारयन्तु।

**अमात्यः** — महाराज कुमार्याः संस्कृताध्यापने काव्यालङ्करणज्ञस्य आवश्यकता कथं वर्तते। अस्मदीय राज्ये बहवः पण्डितोत्तमाः सन्ति। तेषु यः कश्चन नियुक्तः यदि भवेत् सर्वमपि सुव्यवस्तं भवेत् इति मे अभिप्रायः।

**मदनः** — साधूक्तं भवता। किन्तु अत्रस्थाः पण्डिताः पण्डितं मन्यमानाः। ते अतीव छान्दसाः उत डाम्बिकाः, नोचेत् सर्वशास्त्राधीतारः नाहं जाने।

**अमात्यः** — वहवः वैयाकरणाः वर्तन्ते।

**मदनः** — वैयाकरणाः कविताकन्यायाः जनकोपमाः भवन्ति। ते न जानन्ति कविता सौन्दर्यम्।

**अमात्यः**—विना च व्याकरणं संस्कृताध्ययनं कथं भविष्यति महाराज।

**मदनः** — अमात्यवर्य जानामितत्। किन्तु कलाभिमानिनां अधिक व्याकरण पाण्डित्यं मा भवतु। तेषां तेन पाण्डित्येन उपयोगः नास्ति। कवितायाः भाषायश्च यावत् आवश्यकी तावत् केवलं व्याकरणं सम्यक् अध्ययनीयं वर्तते।

**अमात्यः** — तथा यदि भाति भवतां ऊहाप्रपञ्चे, तर्हि तार्किकाः विद्यन्ते राज्ये। बिना च व्याकरणतर्क शास्त्राध्ययनं संस्कृतभाषाध्ययने पाटवः न भवति।

**मदनः** — महामात्य, कलाभिमानिनां तर्केण किं प्रयोजनं। तार्किकाः अलर्क समानाः। ते कविता कन्यायाः भ्रातृस्थानं भजन्ते।

**अमात्यः** — मदन भूपते, एवं यदि भवेत् तर्हि मीमांसकाः सन्ति राज्ये। मीमांसाशास्त्रं ज्ञानदायकं भवति। तच्च शास्त्रं सर्वशास्त्राणां आयतनं भवति।

**मदनः** — मन्त्रिवर्य, मीमांसकाः इहलोकं संत्यज्य परलोक चिन्तकाः भवन्ति। तस्मात् ते नपुंसकप्रायाः इति केषांचन मतम्। तैः शास्त्रिभिः कलाविदां, कलाभिज्ञानानां न किमपि प्रयोजनं विद्यते।

**अमात्यः** — तर्हि काव्यालङ्कारालङ्कृताय पण्डिताय घोषणां कारयिष्यामि ।

**मदनः** — शीघ्रं कारयन्तु घोषणाम् ।

**दौवारिकः** — (प्रविश्य) महाराज । बिल्हणोनाम कश्चन कविः काश्मीर देशात् समागतः द्वारि तिष्ठति तत्रभवतः द्रष्टुम् ।

**मदनः** — अनुपदं प्रावेशय तं काश्मीर कविम् ।

**दौवारिकः** — यथाज्ञापयति देवः । (इति प्रणम्य गच्छति)

**मदनः** — अमात्यवर्य, वयं अभ्यागतं विचारयिष्यामः । कोऽयमिति ।

**अमात्यः** — काश्मीर देशात् समागतः इत्यनेन ज्ञायते, अयं काश्मीर देश संस्कृतपण्डितः कविश्च इति ।

**मदनः** — पश्यामः ।

(ततः प्रविशति कविवेषे बिल्हणः)

**बिल्हणः** — (हस्तमुद्यम्य) स्वस्ति भवते ।

**विभाति लोके गगनं प्रशान्तं । मृगाङ्कभाभिः प्रिययामिनीषु ।**
**किमत्र चित्रं तव राज्यपालने । दिवाऽनिशं कीर्तित चारुचन्द्रमाः ।।**

**मदनः** — भोः कविवर्य भवतः कवितया वयं प्रसन्नास्मः । अत्रोऽपविशन्तु भवन्तः । (इति आसनं दर्शयति)

**अमात्यः** — कविपुङ्गव तत्र भवन्तः काव्यालङ्करणज्ञाः इति मे मनीषा ।

**बिल्हणः** — अयि अमात्य शेखर ।

**काव्यालङ्कार तज्ञोहं । कबितासौन्दर्यमोहितः ।**
**राजाऽहं कविताराज्ये । मकुटेन विना भुवि ।।**

**अमात्यः** — साधु कविवर्य । काश्मीरदेशात् भवन्तः अत्र आहूताः इव समागतवन्त कथं निवेदयन्तु ।

**बिल्हणः** — अमात्यवर्य।

**विद्वानहं कविश्चैव। देशभक्तः कलाप्रियः।**
**ब्राह्मीकटाक्षपूतोऽहं। राष्ट्रालोकन तत्परः॥**

तस्मात् अस्मदीय पवित्र भारतवर्षं द्रष्टुं समुत्सुकः सकलधराधिप मण्डलं मदनाभिरामनृपतिं च द्रष्टुं समागतोऽस्मि।

**अमात्यः** — कविवर्य, नाना नारीं निष्फला लोकयात्रा इति शास्त्र प्रमाणं विद्यते। भवान् एकाकी कथं समागतोऽस्ति।

**बिल्हणः** — शास्त्रप्रमाणं वर्तते। किन्तु अहं एकाकी, ब्रह्मचारीच, तस्मादेव भारतवर्षं द्रष्टुं समागतोऽस्मि।

**मदनः** — भारतवर्ष दर्शनेन कोलाभः वर्तते।

**बिल्हणः** — महाराज, प्रत्येक देशभक्तस्य भरतराष्ट्र दर्शनं योग्यं भवति। सर्व भारतराष्ट्रदर्शनेन निखरा देशभक्तिः भवति जनस्य।

**मदनः** — अयि भोः कविवर्याः भवन्तः अस्मिन् राज्ये कति दिवसाः स्थास्यन्ति।

**बिल्हणः** — महाराज वयं भ्रमराः इव इतस्ततः ज्ञानमधुसंचयनार्थं भ्रमामः। नाहं जाने कति दिवसाः अत्राहं स्थास्यामीति।

**मदनः** — कविवर्य, भवान् कतिपय वत्सराणि अत्रैव अस्मदीय राज्ये स्थित्वा मम कुमार्यै काव्यालङ्कारशास्त्रं पाठयन्तु इति अस्मदीय देशः।

**बिल्हणः** — महाराज अहं भवतां आदेशं स्वीकृत्य शिक्षको भूत्वा संस्कृतभाषां काव्यालङ्कारशास्त्रंच अध्यापयेयम्।

**मदनः** — मे कुमारी यामिनी संगीतनाटययोः निष्णाता तस्यै अध्यापनीयं वर्तते।

**बिल्हणः** — महाराज, मम कश्चित् नियमः विद्यते।

**मदनः** — कोऽयं नियमः ?

**बिल्हणः** — अहं मम जीवने कुष्ठरोगिणं न पश्येयं इति।

**मदनः** — अस्मदीय देशे कुष्ठरोगिणः नसन्ति ।

**बिल्हणः** — निरस्त कुष्ठरोगिणं देशं कुर्वन्त्विति मम विज्ञप्तिः ।

**मदनः** — मा विचारयन्तु भवन्तः । सर्वं यथायोग्यं कुर्याम् ।

**अमात्यः** — महाराज, अम्बरमणिः गगनमध्यं आरोहति त्वर्यतां मध्यान्ह भोजनाय ।

**मदनः** — हां, अद्य सभा परिसमाप्ता । अमात्यवर्य बिल्हण महाकवये योग्यं सुसज्जितं वसति स्थामं प्रकल्पयन्तु । (इति निर्गम्छति)

(यवनिका पतति)

* * *

## चतुर्थं दृश्यम्

(मदनाभिरामनृपतिः अमात्यश्च उपविष्टौ स्वीय स्थानयोः)

**मदनः** — अमात्य शेखर अस्मदीय भाग्यवशात् अस्माक अप्रयत्नेन कुमार्याः शिक्षणार्यै एकः महाकविः अस्मदीय गेहं संप्राप्तः । स्वयं तीर्थक्षेत्रं यत् अवगाहनार्थं गम्यते, तदेव अस्मदीय संमुखं समागतम् ।

**अमात्यः** — सत्यमुदीरितं भवद्भिः । (इति शङ्कते)

**मदनः** — किमपि भवद्भिः आशङ्क्यते ।

**अमात्यः** — महाराज, अयं कविः, युवाः, सुन्दरः, पण्डितः, अलंकारशास्त्रज्ञः । यदि अयं कुमार्याः शिक्षकः भवेत् तर्हि क्षत्रिय कुलस्य कलङ्को भविष्यतीति मया आशङ्क्यते ।

**मदनः** — मन्त्रिवर्यं, वयं सुक्षत्रियाः । ते ब्राह्मणाः कवयः । गौतम धर्मसूत्रानुसारं सलोम विलोम विवाहः मा भूयात् इति केवलं अस्मदीय अभिप्रायः ।

**अमात्यः**— महाराज, यामिनी तन्वी, श्यामा, संगीतनाटचनिष्णाता। अस्मिन् संदर्भे गुरुशिष्य भावनापेक्ष्या प्रियप्रेयसीभावः शतथा स्पष्टं संदृश्यते।

**मदनः** — भवद्भिः प्रतिपादितं सत्यं प्रतिभाति मे।

**अमात्यः** — अत्र विद्यमानविषयाः एतादृशाः विद्यन्ते। यस्मिन् कस्मिन् क्षणे यत् किमपि भवितुं शक्यं भवति।

**मदनः** — इयं लोकरीतिः यत् संगीतेन जनः मोहितः भवति।

**अमात्यः** — (विहस्य) नाटचेन कामुकः भवति।

**मदनः** — साहित्येन रसिकः भवति।

**अमात्यः** — मानवः एकेन गर्वितः भवति।

**मदनः** — (विहस्य) किं वक्तव्यं समवायेन।

**अमात्यः** — तस्मात् अहं चिन्तयामि कमप्युपायम्।

**मदनः** — कोऽयं उपायः।

**अमात्यः** —-अहं एवं चिन्तयामि। कविः बिल्हणः कुष्ठशरीरिणं न पश्यतीति तदीय भाषणेन अस्माकं विदित मासीत्। तस्मात् वयं एकं नाटकं खेलिष्यामः।

**मदनः** — किं तन्नाटकं अमात्यवर्यं।

**अमात्यः** — महाराज श्रुण्वन्तु भवन्तः। यामिनी अक्षणाकाणं न पश्यतीति वयं जानीमः।

**मदनः** — हां सत्यम्। तस्मात्।

**अमात्यः** — तस्मात् यामिन्यै, बिल्हणः अक्षणाकाणः इति, बिल्हणाय यामिनी कुष्ठरोगिणी इति वक्ष्यामः। तयोर्मध्ये पटमेकं बध्वा विद्याभ्यासार्थं प्रारम्भं करिष्यामः इति मे बौद्धिक तरङ्गः प्रचोदयति माम्।

**मदनः** — अमात्यवर्यं, भवान् अत्यन्त बुद्धिशाली। अयं अद्भुतोपायः।

**अमात्यः** — एषां यामिनी पटस्य इतः पठिष्यति, पटस्य ततः कवि बिल्हणः अर्थं कथयिष्यति। कतिपयकालानन्तरं यामिनी गीर्वाणकवयित्री भविष्यति।

**मदनः** — इयं कल्पना अभूतपूर्वा अपिचावश्यं आचरणीया। एवमेव ताभ्यां द्वाभ्यां सूचयितव्यम्।

**अमात्यः** — महाराज, शुभस्य शीघ्रम्। श्वः प्रभृति संस्कृत शिक्षणा प्रारम्भ्यते।

**मदनः** — अमात्य भवान् गत्वा सर्वं व्यवहारं स्वयं विलोक्य कारयतु। (इत्युत्थाय गच्छति)

**अमात्यः** — तथैव (इति राजानं अनुसरति)

(यवनिका पतति)

* * *

# चतुर्थं दृश्यम्

(पटस्य उभयतः यामिनी बिल्हणौ उपविष्टौ)

**यामिनी** — अयि गुरो अभिवादये। (इति नमस्करोति)

**बिल्हणः** — कल्याणमस्तु, विदुषी भव। (इति हस्तमुद्यम्य आशिषः ददाति) अयि तरुणि यामिनि, मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रशंसते। तस्मात् त्वं प्रथमतः दैवप्रार्थनां कुरु। अनंतरं पाठः प्रारंभ्यते।

**यामिनी** — करोमि भोः।

शुक्लांबरधरं विष्णुं। शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत्। सर्वविघ्नोऽप शान्तये॥

बिल्हणः — दैवस्तोत्रं सम्यक् कृतं भवत्या। त्वं रघुवंश काव्ये प्रथम श्लोकं पठ।

यामिनी — वागर्थाविव संपृक्तौ। वागर्थः प्रतिपत्तये।
जगतः पितरौ वन्दे। पार्वती परमेश्वरौ॥

बिल्हणः — कुमार संभवकाव्ये प्रथम श्लोकं पठ।

यामिनी — अस्त्युत्तरस्यां दिशि देवतात्मा।
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी विगाह्य।
स्थितः पृथिव्या इव मानदण्डः॥

बिल्हणः — अद्य एतावत्पर्यन्तं विरम। त्वं गच्छ। सर्वं यत् कथितं तत् कण्ठपाठं कुरु।

यामिनी — तथैव करिष्यामि गुरो। नमांसि भोः गच्छाम्यहं। (इति गच्छति)

बिल्हणः — अहो इयं शरच्चन्द्र चन्द्रिका। एषा रसिकान् डोलायमान मानसान् करोति। अहो चन्द्रमाः, लोके सर्वासु भाषासु सर्वे कवयः भवन्तं अनेक सहस्र वर्षेभ्यः वर्णयन्ति। तथापि न कोऽपि तृप्तः अभूत्। अहं अधुना त्वां एवं वर्णयामि।

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे।
सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन् परे।
इन्दोयद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते।
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥

(ततः प्रविशति यामिनी किंचित् शृण्वन्ती)

**यामिनी** — (मनसि) अहो बिल्हणकवेः कण्ठगत स्वरः इव प्रतिभाति। (आकर्ण्य) हा सत्यं इदं बिल्हणकवेः स्वरः एव। इदं गीतं नहि। सर्वमपि श्लोकबद्धं भवति। अरे अयं आकाशे विराजमानं चन्द्रमसं विलोक्य कवितां करोतीति मन्ये। इयं अस्य कविता इव आभाति। अहो अस्य कवितायाः मधुरता : अहो कण्ठगतस्वर माधुर्यता च। अयं अन्धः खलु। अन्धः चन्द्रमसं विलोक्य कथं कवितां करिष्यति। अत्र विद्यते किंचित् अव्यक्तं रहश्यम्। भवतु मे व्रतभङ्गः। अहं एनं कविपुङ्गवं अवश्यं पश्येयम्। (इति पटं उन्नमय्य तं पश्यति) अहो किमयं मानवः उत देवः। कियान सुन्दरः अयं कविः। अयं कवित्वमिव सुन्दरः। अयं अन्धः नहि। अयं आकर्णान्त विशाल लोचनः। अयं यामिनी रमण चन्द्रमाः। अयं संगीत साहित्य कलानिधिः। लोकः एनं अन्धः इति कथयति। बत अहं अस्य दर्शनानुपदमेव चित्तजव्यथाव्याधिना पीडिता भवामि। नाहं सहे इमां बाधाम्। (इति गत्वा तस्य उत्सङ्गे पतति) महाकवे रक्षतु भवान्।

**बिल्हणः** — अहो त्वं यामिनी। त्वं कुष्ठरोगिणी नहि। अहो इयं लावण्यमूर्तिः। इयं सुवर्ण शलाका। यामिनी भवती संस्कृतसाहित्यस्य रस मूर्तिः। त्वं रसात्मा। अहं त्वां मन्मथसाम्राज्यराज्ञीं करिष्यामि। उत्तिष्ठ। (इति तां उत्थापयति)

**यामिनी** — अयि बिल्हणकवे त्वं मे जीवितम्। (इति तमालिङ्गति)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

(मदनाभिराम महीपतिः, तस्य पत्नी रतिः, अमात्यश्च उपविष्टाः सर्वे विचारग्रस्ताः विषण्णवदनाः भवन्ति)

**मदनः** — अयं बिल्हणः, कविः,पण्डितः इति सानन्दं स्वागतं व्याहृतम्। कुमार्यै संस्कृतशिक्षणा सम्यक् भविष्यतीति परमोत्सुकः अभवम्। किन्तु सर्वमपि भस्मचये विकिरित सुगन्धजलमिव जातम्। वंशः कलङ्कितः बभूव।

**अमात्यः** — प्रभो मानवः एकं चिन्तयति दैवं अन्यत् विदधाति। प्रथमतः अस्माभिः सर्वं सुविचार्य सम्यक् रचना कृता। सापि रचना वृथा संजाता। दैवशक्तिः प्रबला चकासे।

**रतिः** — मन्त्रिवर्य, एतादृशद्रोहस्य प्रतिक्रिया अवश्यं करणीया विद्यते। किं कर्तव्यं, कथं कर्तव्यं विचार्यताम्।

**मदनः** — एतादृश कर्मणः वध्यस्थाने बिल्हणस्य गळकृन्तनमेव शिक्षा योग्या भवति। कोऽत्र भोः।

**दौवारिकः** — (प्रविश्य) अहमस्मि भोः।

**मदनः** — हन्तकौ समाह्वय।

**दौवारिकः** — यथाज्ञापयति देवः। (इति निर्गच्छति)

(ततः प्रविशतः हन्तकौ)

**हन्तकौ** — (अर्धनामित शरीरौ) आज्ञापयन्तु भवन्तः।

**मदनः** — कुकविं राजद्रोहिणं बिल्हणं वध्यस्थानं नीत्वा गळं निकृन्त्य तस्य मांसवसादिकं शृगालेभ्यः श्वभ्यः गृध्रवायसेभ्यः विकिरताम्।

**हन्तकौ** — यथाज्ञापयति देवः। (इति नमस्कृत्य गच्छतः)

**रतिः** — महाराज भवतां आदेशः दयाविहिनः भवन्तः बहुवारं विचार्य कुर्वन्तु।

मदनः — नियमविनियमौ सर्वेषां एकपद्धत्या भवतः। नात्र प्रति-संहरः भवति।

अमात्यः — महाराज, पुनर्विचारं कुर्वन्तु भवन्तः

मदनः — ममाऽदेशे न लेशोऽपि प्रमादः विद्यते। (इत्युत्थाय वेगं गच्छति, अमात्यः रतिश्च गच्छतः)

(यवनिका पतति)

* * *

## षष्ठं दृश्यम्

(ततः प्रविशति बद्धहस्तः हन्तकाभ्यां आनीयमानः बिल्हणः)

प्रथमः — अरे राजद्रोहि चल रे चल।

द्वितीयः — अयं कविः।

बिल्हणः — सत्यमेवाहं कविः। कवितां करोमि शृणु।

जीवने प्रेमसंपूर्णे। मधुरं मरणं सदा।
एतादृशं प्रेमसौख्यं। सर्वेषां नैव जायते ॥

हे यामिनि त्वं मधुमयमासान् स्मारं स्मारं सुखमनुभव।

प्रथमः—अरे राजद्रोहि कुमार्याः नामोच्चारणं मा कुरु। सत्वरं चल।

बिल्हणः — मनोज्ञशिल्पां सततं हसन्तीं।
प्रियां सुसंगीतरतां स्मरामि।
नाटचादि संमूर्छित चित्तसद्मां।
रसस्वरूपां प्रिययामिनीं ताम् ॥

द्वितीयः — अरे कुकवे मोच्चर कुमार्याः नाम।

बिल्हणः — चन्द्रमण्डलं यामिनी कर्णकुण्डलं।
वल्गु वलगनं कामिनी रम्यमण्डनम्।
रम्यभाषणं भारती काव्यमण्डनं।
दर्पणोऽपमं यामिनी गण्डमण्डलम्॥

प्रथमः — अयं कामिनी उन्मत्तो जातः। अरे सर।

बिल्हणः — सर्वं विशाले परिदृश्यमानं।
धरातले नश्वरमेव भाति।
न जीवने सत्यमिहास्ति लोके।
प्रियाङ्गनासंगमजन्यसौख्यात्॥

द्वितीयः — अरे त्वं राजद्रोही असि। त्वं कविता प्रपञ्चे निवसन् बाह्यं न जानासि। अधुना त्वं किं जानासि? कुत्रनीयसे इति।

बिल्हणः — जीवामि नाहं सखि यामिनीं बिना।
जानामि नाहं सुरतं बिना भुवि।
प्राप्नोमि सर्वं मम सौख्य मूलकम्।
जिघ्रामि तन्वङ्गि कलासुवासनाः॥

प्रथमः — अस्य कविता उत्तरोत्तरं सारभूयिष्टं भवति। भवतु श्रोष्यावः, कियत् कालं कवितां करिष्यति।

बिल्हणः — प्रिये मन्मथ क्रीडा रम्ये। (यामिनी स्तोत्रं करोति)

स्तोत्रं (दुर्गा रागे गीयते)

हे यामिनी, चन्द्र बिम्बानने। हे कामिनी, पक्व बिम्बाधरे
हे मानिनि, भ्रमर लोलालके। हे भामिनि, मञ्जु मन्दस्मिते ध्रु.

हे तापसंहारिणि, सौख्य संदायिनी। कामसंवर्धिनि, कुंभि कुंभस्तनि
कङ्कणालंकृते विभ्रमालंकृते। भोगवासप्रिये, कामगन्ध प्रिये १

नित्य सौख्यस्थिते, लास्य हेवान्चिते चारु भावावृते, चारु हासावृते
बाहु बन्धस्थिते, भावचित्रस्थिते। काव्यशय्यास्थिते नित्यहावस्थिते २

तुभ्यं नमो यामिनि। तुभ्यं नमो भामिनि
पाहि मां पाहि मां पाहि मां। तुभ्यं नमः ४

**द्वितीयः** — अरे, अयं देवी स्तोत्रं करोति।

**प्रथमः** — इदं नहि देवी स्तोत्रं भासते! किन्तु यामिनी दण्डकमिव द्योतते।

**बिल्हणः** — **काश्मीरकुङ्कुमपराग विलिप्तगण्डा।**
**रोलम्बकलिमसमान सुदीर्घकेशा।**
**श्रीनागरे नुत लतान्तपरिमलास्या।**
**हे यामिनि प्रियसखि क्षितिदिव्यगात्रि॥**

**द्वितीयः** — अयं मरणात् भीतः स्तोत्रं करोति।

**बिल्हणः** — **नाहं बिभेमि दयिते मरणात् कदापि।**
**तृप्तोऽस्मि ते विरह पीडित रुग्णचित्तः।**
**नैवास्ति दीर्घनयने भवता विनान्या।**
**मामुद्धरोद्धर शुभे नुतचारुशीले॥**

**प्रथमः** — अहो एषः न चलति।

**द्वितीयः** — अयं अधुना उन्मत्तः जातः। अस्य ताडनमेव औषधं भवेत्।

(यवनिका पतति)

* * *

# सप्तमं दृश्यम्

(सिंहासने राजा चिन्ताक्रान्तः उपविष्टः रतिः पार्श्वे विद्यमान सिंहासने चिन्ताक्रान्ता उपविष्टा। ततः प्रविशति अमात्यः)

अमात्यः — महाराज स्वस्ति भवते। (इति आसने उपविशति)

परिचारिका — (प्रविश्य) नमांसि महाराज, कुमारी यामिनी, बिल्हण कवे, कवि बिल्हण, इति जल्पन्ती विवशाङ्गी पतिता।

मदनः — परिचारिके, त्वं गच्छ।

परिचारिका — यथाज्ञापयति देवः। (इति गच्छति)

मदनः — सा मृता इति मन्ये।

रति। — तथा मावदतु महाराज। इयमेका पुत्रिका अस्माकम्।

मदनः — किं प्रयोजनं तया राजवंशजानाम्। सा राजवंश कलङ्किनी जाता।

रतिः — महाराज, कोऽयं राजवंशः यः कलङ्कितः। (इति क्रुद्धा भवति)

अमात्यः — मर्षय महाराज्ञि।

(ततः प्रविशति दौवारिकः)

दौवारिकः — (नमस्कृत्य) महाराज, कुमारी यामिनी कवि बिल्हण, मम जीवनदायिन् इति जल्पन्ती सोरस्ताडं क्रन्दति।

मदनः — (विषण्ण वदनः) तां अत्रे प्रावेशय।

दौवारिकः — यथाऽज्ञापयति देवः। (इति गच्छति)

(ततः प्रविशति यामिनी विषण्णवदना)

यामिनी — महाराज, अभिवादये। (इति नमस्करोति)

**मदनः** — यामिनि, दैवदृष्टयां सर्वे समानाः। नात्र विद्यते लेशोऽपि पक्षपातः। राजद्रोहिणां मदीय राज्ये नहि स्थानं विद्यते।

**यामिनी** — महाराज, अत्र कोऽभूत् राजद्रोही।

**मदनः** — यामिनि, अत्र काऽभूत् राजद्रोहिणी इति, पृच्छ।

**यामिनी** — किमपराद्धं मया।

**मदनः** — राजपरम्परा कलङ्कीकृता, खण्डिताच।

**यामिनी** — राजपरम्परा मण्डिता इति वक्तव्यम्।

**मदनः** — साम्प्रदायेन भूषितोऽयं राजवंशः त्वया शतधा दूषितः।

**यामिनी** — कथम् ?

**मदनः** — काश्मीर पण्डित बृवसंगमेन।

**यामिनी** — तस्मादेव ब्रवीमि काश्मीर भूषणेन भूषितः इति।

**मदनः** — ब्राह्मणक्षत्रियाणां समागमः असांप्रदायिकः।

**यामिनी** — इयं परम्परा अति प्राचीना महर्षिभ्यः।

**मदनः** — त्वं मे नहि बोधयिष्यासि।

**यामिनी** — अधुनाहं अधीत सर्वशास्त्रा अस्मि। कोऽयं पराशरः? केयं मत्स्यगन्धी।कोऽयमगस्त्यः ? का लोपामुद्रा ?

**मदनः** — यामिनि तासु कथासु विद्यमान रहस्यं अविचार्यं त्वत्कृतं साध्विति निरुपयितुं प्रयतसे कुवादैः।

**यामिनी** — नहि निरूपयामि। सत्यमिति नेत्रोऽन्मीलनं कारयामि।

**मदनः** — एष संगमः अस्वाभाविकः।

**यामिनी** — कथमयं अस्वाभाविकः।

**मदन** — परम्परागत विवाह पद्धत्या न कृतोऽयं संगमः।

**यामिनी** — परम्परागत विवाह पद्धत्या कृतोऽयं संगमः।

**मदनः** — त्वं राजानं तृणी करोषि। अपेहि मम संमुखात् पापी।

**रतिः** — अयि देव, यामिनी यत् कथयति तत् सत्यमेव। तयोः विवाहः समजनि, यतः द्वयोर्मध्ये यवनिकापटं निक्षिप्तम्। संस्कृत भाषया वेदमन्त्रैश्च अन्योन्य संभाषणेन अयं विवाहः कृतः।

**मदनः** — राज्ञि, त्वमपि यामिनीं अभिसरसि।

**अमात्यः** — महाराज। ताभ्यां यदुक्तं तत् सत्यमेव। अपिच अयं ब्राह्मणः, कविः पण्डितश्च। सुन्दरः युवा। भारतनंदनवनायित काश्मीर देशात् समागतः सर्व लक्षणोपेतः।

**मदनः** — संस्काराः भिन्नाः भवन्ति महामात्य।

**अमात्यः** — भारत राष्ट्रीयानां सर्वे संस्काराः एकरूपात्मकाः भवन्ति भोः। "कन्या वरयते रूपं" अपि च द्वयोर्मध्ये अनुरागः वर्तते। द्वावपि संगीत साहित्य विद्वांसौ। समवयस्कौ, अनुरूपिणौ। सर्वसुगुणसंपत्तिः एकत्र राशी भूता।

**मदनः** — अयं अनुलोम विलोम विवाहः न भवति किम्?

**अमात्यः** — अधुना गतजलसेतुबन्धनं किमर्थम्? महाराज, मे बुद्धिः कथयति, अयं सर्वथा युक्तः योग्यः विवाहः इति।

**मदनः** — अमात्य, अङ्गीकरोम्यहं ते युक्तिवादम्। (यामिनीं विलोक्य) कुमारि यामिनि, त्वं मा विचारय। निश्शङ्कं त्वं तव पतिं बिल्हणमनुव्रज। सुखेन तेन सार्धं जीवनं यापय। अत्र संगीतसाहित्ययोः विवाहः कृतः।

**यामिनी** — पितः भवान् उदारवान्। राष्ट्रहितः जीवनः। अहं भोः अभिवादये। (इति नमस्कृत्य मातुः समीपं गत्वा मातरं आलिङ्गय नमस्कृत्य मन्त्रिणः समीप आगत्य तं नमस्कृत्य) अयि अमात्यवर्य अहं भवतां आशिषः कामये। (इति नमस्करोति, अमात्यः आशिषः ददाति, यामिनी गच्छति)

**मदनः** — (घण्टां ताडयति)

(ततः प्रविशति भटः)

भटः — अयमस्मि देवः। (इति नमस्करोति)

मदनः — अस्मदीय जामातुः कविबिल्हणस्य वधामा भूयात् इति सत्वरं वध्यस्थानं वार्ता प्रेषय।

भटः — यथाज्ञापयति देवः। (इति निर्गच्छति)

(यवनिका पतति)

* * *

## अष्टमं दृश्यम्

(वध्यस्थाने बिल्हणः भटौ च प्रविशन्ति, तौ स्वीय कृपाणौ धारायुते कुरुतः, बिल्हणः कवयति)

बिल्हणः — अहो मे हृदयं अति निर्भरं भवति। यतः

यामिनी कामिनी भूत्वा। प्रविवेश हृदन्तरम्।
यथाऽपगा विशत्याशु। रसराशिं महोदधिम्॥

(ततः प्रविशति भटः)

भटः —अयि हन्तकौ, बिल्हण महाकविः मदनाभिराम नृपतेः जामाता तस्मात् अयं अवध्यः इति राज्ञां आदेशः।

प्रथमः — अयं बिल्हणः मृत्युमुखात् परावृत्तः। अयं मृत्युंजयः।

द्वितीयः — अयं महाराजानां जामाता अभूत्। अयं अस्माकं पूज्यः। (इति नमस्करोति द्वावपि हन्तकौ गच्छतः)

(ततः प्रविशति यामिनी)

**यामिनी** — बिल्हण महाकवे क्षमस्व माम् । अहमेव कारणं तव अस्याः दशायाः । (इति पादयोः पतति)

**बिल्हणः** — प्रिये यामिनि, नापराद्धं मे भवत्या । इयं दशा गीर्वाण साहित्ये भारतवर्षे च वैशिष्टयपूर्णं प्रतिभाति । अयं विवाहः लोक सामान्य विवाहः नहि, किन्तु अयं संस्कृत संगीतयोः विवाहः । अयं आदर्श विवाहः । नात्र चिन्ता कार्या । आवां संस्कृत संगीत कल्याणकारकौ अभवाव । (इति तां उद्धरति)

**यामिनी** — प्रिय, बिल्हण, भवान् भारतीय संस्कृति प्रतीकः अस्ति । ते भावना अत्यन्त उदार स्वरूपिणी । अहं नितान्तं भवतां सहवासेन भारतीय संस्कृतिसंरक्षणे कटिबद्धा भवेयम् ।

**बिल्हणः** — प्रिये यामिनि,

**काश्मीरकुङ्कुमपराग विलिप्तगण्डा ।**
**रोलम्बकालिमसमान सुदीर्घकेशा ।**
**श्रीनागरे नुत लतान्तपरीमलास्या ।**
**हे यामिनि प्रियसखि क्षितिदिव्यगात्रि ॥**

(इति तां आलिङ्गतुं इच्छति)

**यामिनी** — (किंचित् पश्चात् अपसृत्य) प्रिय सर्वेषां समक्षं शृङ्गार प्रदर्शनं किमर्थम् ? तच्च प्रदर्शनं केलीगृहे कर्तव्यम् निर्भीकम् । प्रिय, जानाम्यहं, त्वं बहु बुभुक्षितोऽसि इति । किन्तु पश्य जगति जनः बुभुक्षितोऽपि भोजनं एकहस्तेनैव खादति न किन्तु द्वाभ्यां हस्ताभ्याम् । किंचित्कालं धैर्यमवलम्बस्व ।

**बिल्हणः** — प्रिये विना च तव दर्शनं तव देहस्पर्शनं तवाधरपानं नाहं जीवितुं शक्नोऽमि, एहि, निवसतु मे बाहुपञ्जरे शुकी इव । (इति बाहू प्रसारयति)

**यामिनी** — प्रिय श्रुणु, आवयोः संगमे अहं एवं भवामि, चिन्तयामिच ।

**बिल्हणः** — कथम् ?

## गीतम् (कल्याणी रागे)

**यामिनी** -- त्वमेवाहं त्वमेवाहं त्वमेवाहर्निशं मे
जीवने रमसे भृशम्, स्फुरशेऽनिशम् ध्रु.

एषा पौर्णिमा रम्यानिशा
बालाहं सदा सुतरां सुखे विवशा
त्वद्दर्शन विस्मृत तनू भावा
आतत चित्तज भावावेशा ।। १

**बिल्हणः** — चालन चञ्चल गुरुतर श्रोणी भारा
व्यावर्तन शिखरित पीवर कुचभारा
कङ्कण झण झण निक्वण क्वणिता
पारयसीहा हृदयं परवश कामावेशा ।। २

**यामिनी** — शीतल मार्दव सैकत शय्यायाम्
चन्दन चर्चित गन्धिल देहलतायाम्
शारद शुभ्रांशुक ज्योत्स्नायाम्
क्रीडावावां सुरताऽलिङ्गन डोलायाम् ।। ३

**बिल्हणः** — ते मधुराधर दंशनकृत भणितम्
तनु ते स्वर्गसुखं परमानन्दम्
तव सुन्दर शारद नीरज मधुवदनम्
आह्वयतीव मधुपानाय यौवन भ्रमरम् ।। ४

**यामिनी** — त्वत् परिरम्भण पुलकित देहा
व्यपगत लौकिक बाधा पाशा
गत जन्मनि संचित पुण्य बला
सुखमय गाढालिङ्गन विवशा ।। ५

**बिल्हणः** — मन्मथ शय्या विपुलं श्रोणी बिम्बम्
लाक्षा रंजित शिंजा ध्वनितं पदलास्यम्
कुरुते मे हृदि शाश्वत मुद्रान्यासम्
कल्पय देवि परिरम्भण सुखसमयम् ।। ६

(इति आलिङ्गितुं गच्छति)

(यवनिका पतति)

*

## ।। राष्ट्रायेदम् ।।

अन्तरात्मनिभ संस्कृतिर्युतं । वेदवाङ्मयपुनीतदेहिनं ।
सर्वशास्त्रनुत भव्यजीवनं । राष्ट्रपूरुषमहं प्रणमामि ।।

( नान्द्यन्ते )

( ततः प्रविशतः द्वौ विद्यार्थिनौ, तौ द्वौ कुर्च्योः उपविष्टौस्तः नेपथ्ये हम्पी वैभवमुद्दिश्य गानं भवति तौ शृणुतः )

गीतम् (कल्याणी रागे)

प्राचीनान्ध्रावनि संस्कारिणी । भारतजनताहृदयस्पन्दिनी
पम्पातीरे शिल्पितहम्पी । एकाऽक्षतस्वप्नकथेवाऽभाति ध्रु.

विरुपाक्षार्थिक संभारेण । विद्यारण्याशीर्वादबलेन
हरिहर बुक्कोर्वीपति यत्नेन । रचिता पूर्वं साविज्ञानेन १

प्रस्थर तक्षित जीवनरेखाः । स्मेराङ्कुरविलसित शिल्पाकाराः
चतुराननमानस शिल्पितभावाः । इमे हम्पीयौवनलास्याकाराः २

स, रि, ग, म, प, द, नि सप्तस्वरशालिनी । श्रीकृष्णराय प्रतिभागायिनी
दिग्गजकविमण्डलकविताजीविनी । भारतसंस्कृति चरमदशा रूपिणी ३

वीणानिक्वण प्रचुरितसंगीता । कवितावनिताविरचित हेवाका
नूपुरपदचालन ध्वानितसकलाशा पूर्वं रेजे मन्जुलहम्पी लास्याकारा ४

अगणितवैभव तन्मयहम्पीहृदयम् । अधुना शिथिलित भीकरशकलाकारम्
शिल्पं सर्वं जीर्णं भद्रानद्याम् । कपिकुलसंकेतस्थानं दैवायतनम् ५

आसुर शक्त्या चूर्णितशिल्पाकाराः । भारतजनहृदि मुद्रितभीमाकाराः
कथयति हम्पी प्रकृतिरहस्यं विगलितरूपा । पम्पा भद्रा रक्षित
प्राकारा ६

**चन्द्रकान्तः** — (गीतावसाने) अरे सूर्य अहो सुन्दरं अतिमधुरं गीतम्। अधुना अत्र गीतोत्पत्तिः कथम्?

**सूर्यकान्तः** — अरे चन्द्र अद्य अधुना अस्मदीय विद्यापीठे राष्ट्रयेदं इति नाटकं प्रयोक्तुं अस्मदीय कक्ष्या विद्यार्थिनः अतीव उत्सुकाः भवन्ति। अत्र नाटक प्रदर्शनाय नाटक पुनश्चरणां कुर्वन्ति। तन्नाटकं द्रष्टुं त्वमपि एहि।

**चन्द्रकान्तः** — सूर्य, नाटकमेतत् परं आकर्षणात्मकं भविष्यतीति मे प्रतिभाति।

**सूर्यकान्तः** — इदं अर्वाचीन-संस्कृत नाटकविश्वे अनुपमं अपरूप नाटकं इति केषांचन मतम्।

**चन्द्रकान्तः** — कोऽयं अस्य नाटकस्य कर्ता। अस्य नाटकस्य श्रवणेनैव ज्ञायते सर्वेषां, इदं अर्वाचीननाटकेषु अत्युत्तमं, देशभक्तिप्रचोदकं इति।

**सूर्यकान्तः** — सम्यगुदीरितं भवता। अस्य नाटकस्य कर्ता पंडित ओगेटि परीक्षित् शर्मा। अयं गीर्वाणान्ध्र भाषाप्रवीणः। अयं संस्कृत भाषायां केवलं लिखति। विंशति तमे शतब्दे अयं साहित्ये सर्व शाखासु सृष्टिमकरोत्।

**चन्द्रकान्तः** — हां श्रुतं मया अयं कविः ललित गीता लहरी इति गेय काव्यं विंशति सर्गात्मकं यशोधरा महाकाव्यं, एकोत्तरशत गीतात्मकं सप्तपदी इति अपरनाम्ना प्रसिद्धं अक्षयगीत रामायणं इति गेयकाव्यं, सप्तविंशतिनाटक परिमितं परीक्षिन्नाटक-चक्रम् इति नामकं विलिख्य प्रकाशितवान् इति।

**सूर्यकान्तः** — अयं एकाकी संस्कृतभाषा प्रचाराय कटिबद्धः लेखिनीद्वारा नवीन सृष्टिं करोति।

**चन्द्रकान्तः** — अरे सूर्य नवीन नाटक सृष्टिं विलोक्य, श्रुत्वा च मम परमानन्दः भवति। संस्कृतभाषायां सहस्रवर्षेभ्यः, द्विसहस्रवर्षेभ्यः उत त्रिसहस्रवर्षेभ्यः प्राक् यानि नाटकानि वर्तन्ते तान्येव नाटकानि संस्कृतभाषा नाटकानीति आधुनिकेषु दिवसेषु प्रदर्श्यन्ते। तानि नाटकानि वारंवारं दृष्ट्वा मे शिरोवेदना भवति यतः दृष्टमेव द्रष्टव्यमिति।

**सूर्यकान्तः** — इयं नवीना सृष्टिः। एतावत्पर्यन्तं संस्कृत साहित्ये न केनापि सप्तविंशति नाटकानि लिखितानि। एवं कथने न काप्यतिशयोक्तिः विद्यते।

**चन्द्रकान्तः** — सूर्य, अनेन कविना सप्तविंशति नाटकानि त्रिविधा विभक्तानि, पौराणिकानि, ऐतिहासिकानि, सामाजिकानीति।

**सूर्यकान्तः** — एकैक नाटकस्य प्रदर्शन वेलायाः कालावधिः अर्ध घण्टायाः आरभ्य सार्धघण्टावादन पर्यन्तं भविष्यति।

**चन्द्रकान्तः** — एहि गच्छावः नाटकं द्रष्टुम्।

**सूर्यकान्तः** — अपिच श्रुणु, इदं नाटकं भारतेतिहासस्य चरम हिन्दुसाम्राज्य स्थापयितृणां मानसिकआन्दोलनास्थितिमुद्दिश्य कृतम्। तस्मिन् समये कथं ते देश मुद्दिश्य देशसमैक्यता सिद्धयर्थं राष्ट्रायस्वाहा राष्ट्रायेदं न मम इति धनकनकवाहन वस्तुचयं हिन्दुसाम्राज्य स्थापनाय केनमार्गेण समर्पितवन्तः तानुद्दिश्य कृतं इदं नाटकम्।

**चन्द्रकान्तः** —चरित्रहीनः मानवः, अज्ञात भारतेतिहासमानवः कीटकाऽपेक्ष्या अधमः नीचः इति मे मतिः।

**सूर्यकान्तः** — छत्रपतिशिवाजीमहाराजः विजयनगरसाम्राज्यं श्रुत्वा विलोक्य च तेन उत्तेजितः हिन्दु साम्राज्यदिपं अशामितं विधातुं स्वतः हिन्दुसाम्राज्य स्थापनाय प्रारभे। किन्तु तस्य महाराजस्य शक्तिः महाराष्ट्रपरिमिता आसीत्। तथापि तस्य राज्ञः भावना हिन्दुसाम्राज्यस्थापना एव।

**चन्द्रकान्तः** — ( प्रकोष्ठ घटिका यन्त्रं विलोक्य ) अरे अतिक्रान्त वेला भवति एहि गच्छावः। ( इति निर्गतौ )

( तुङ्ग भद्रातीरं सन्ध्यासमयः प्रशीतल वात पोतकाः संचरन्ति। ततः प्रविशति हरिहरबुक्करायौ, हरिहरः एकस्मिन् प्रस्थरे बुक्करायः अनस्यां शिलायां उपविष्टौ भवतः संलापं च कुरुतः।

**हरिहरः** — अनुज बुक्कराय इदं तुङ्ग भद्रातीरम्। अस्मिन्नेव तीरे आवां उपविश्य भारतदर्शनं कुर्याव।

**बुक्करायः** — अग्रज हरिहर, अत्रैवोपविश्य भारतदर्शनं केवल संस्मरणेन करिष्यावः।

**हरिहरः** — अयमेव योग्यः प्रदेशः। तथैव कुर्याव। भारतदेशे अनेक प्रदेशाः सन्ति।

**बुक्करायः** — सन्ति किन्तु तेषुतेषु प्रदेशेषु वैशिष्ट्यपूर्णाः भिन्नविभन्न भाषाः सन्ति।

**हरिहरः** — भवंतुनाम विभिन्न भाषाः, न काऽपिहानिः विद्यते तासां अस्तित्वेन।

**बुक्करायः** — भाषा वैविध्येन देशसमैक्यता न भवति।

**हरिहरः** — भाषाः विभिन्नाः अपि साम्प्रदायस्तु एकः भवति।

**बुक्करायः** — साम्प्रदायः एकः एव किन्तु प्रजासु तरतम भेदः, भवति।

**हरिहरः** — अरे सृष्ट्यां तरतम भेदः वर्तते। भाषायामपि गुणानुरूपेण वर्णेषु वर्गीकरणं सर्वत्र प्रपञ्चे दृश्यते।

**बुक्करायः** — अग्रज जानामि तत् विषयम्। किन्तु त्वं सविस्तरं प्रतिपादय।

**हरिहरः** — सर्वत्र प्रपञ्चे दृश्यमानभाषासु अचः, हलः, ऊष्माणः, ताल्व्याः, मूर्धन्याः, अनुसासिकाः इति, अचः प्राणाः इति हलादयः शरीराणीति अचामभावे शरीरसदृश हलानां शवाकृतिः भवतीति पारमार्थिकभावना संदृश्यते। किन्तु विभिन्नत्वे विद्यमाने सति सर्ववर्णाः मिलित्वा भाषास्वरूपं भाषासौन्दर्यं भावप्रकटनां कुर्वन्ति। यदि एकः वर्णः नष्टः भाषामृता भविष्यति। तस्मात् यथा सर्वे वर्णाः मिलित्वा भाषां प्रवर्धयन्ति तथैव सर्ववर्णाः विनावैरं विना तरतम भावं भाषा स्वरूप देशं प्रवर्धयन्तु इति ममाभिप्रायः।

**बुक्करायः** — अधुना सङ्घशक्तिः आवश्यकी। सा शक्तिः कथं भविता इति प्रश्नः।

**हरिहरः** — अरे सर्वत्र सृष्ट्यां भेदाः संति। किन्तु इदं जगत् चलत्येव। पश्य पञ्चभूतेष्वपि तरतमभेदः विद्यते किन्तु ते सर्वे विनावैरं मिलित्वा यथाक्रमं ते तेषां कर्म कुर्वन्ति।

**बुक्करायः** — सर्वे सर्वमपि भेदभावं संत्यज्य, वयं मरिष्यामः किन्तु राष्ट्रमिदं अजरं इति मत्वा स्वीय सर्व समारम्भान् राष्ट्राय स्वाहा राष्ट्रायेदं, न मम इति बुध्या समर्पणां करिष्यन्ति तर्हि देशः सौभाग्येन नर्तिष्यति।

**हरिहरः** — अस्मदीय पूर्वजाः देशहिताय केवलं सर्वमपि चक्रुः।

**बुक्करायः** — सर्वथा अस्मदीय पूर्वजाः राजानः कवयः शास्त्रकर्तारः देश सौभाग्यं अवर्धयन्। तस्मादेव प्रपञ्चे विद्यमानानां सर्वेषां प्राणिनां दृष्टिः भारतोपरि विद्यते। तदर्थमेव ओतप्रोतओघः इव सहस्रवर्षेभ्यः अस्मिन्देशे परदेशीयधाटयः आपतन्ति।

**हरिहरः** — भारतवत् अन्यत्र मानवस्य जीवनसौकर्यं न भवति। अन्येषां देशाः भारतवत् सस्यशालिनः न भवन्ति।

**बुक्करायः** — सर्वत्र तुषारसंघातधराभाति। तस्मात् कारणात् तत्र सस्य श्यामलतायाः अभावः भवति।

**हरिहरः** — भारतवर्षे वसुन्धरा नदीनदैः विलसति।

**बुक्करायः** — तस्मादेव अन्यदेशीयाः अत्राऽगच्छन्ति।

**हरिहरः** — न केवलं जीवनं यापयितुं, किन्तु ज्ञानसमुपार्जनार्थं मानवत्वं दैवत्वं च अभ्यस्तुं अत्राऽगच्छन्ति।

**बुक्करायः** — यदि ते अभ्यसन्ति भारतीयतां तर्हि समीचीनमेव। तथा अभूत्वा अस्मदीय संस्कृतिमूलभूतं देवायतन समुदायं, विद्यालयान् भस्मावशेषं विधाय सकलनवरत्नसंचयं सुवर्णराशिं च नीत्वा अस्मत् देशं शक्तिहीनं दरिद्रायुतं कुर्वन्ति।

**हरिहरः** — सोदर त्वया सम्यक् वितर्कितम्। देशे बहवः एनं विषयमुद्दिश्य न चिन्तयन्ति।

**बुक्करायः** — सर्वोऽपि स्वार्थी भूत्वा संघशक्तिं विस्मृत्य विसृज्य च जीवति।

**हरिहरः** — अस्मात् कारणात् अस्मिन् देशे परदेशीयानां प्रवेशः जातः।

**बुक्करायः** — ते पाशविक जीवनाः। तेषां आचारव्यवहारेण अस्मदीय परम्परा नष्टा भवति। वयं भारतीयाः पुनर्जन्मनि विश्वासिनः।

**हरिहरः** — भवंतु नाम तेषां विश्वासादयः। किन्तु ते तेषां विश्वासाय सर्वं देशं परावर्तयितुं प्रयतन्ते। प्रजासु देशभक्तिः क्षीणा भूत्वा पशुप्रायता अधिका भवति। तां भावनां निवारयितुं कः प्रयत्नः कर्तव्यः इति प्रश्नः।

**बुक्करायः** — तस्मात् अहं चिन्तयामि हिन्दुमहासाम्राज्यस्थापना कर्तव्या इति।

**हरिहरः** — गुप्तचक्रवर्तिनः स्वर्णयुगं अकल्पयन्। स युगः भारतवर्षे स्वर्ण युगः जातः।

**बुक्करायः** — हर्ष चक्रवर्ती: अपि हिन्दुसाम्राज्यस्थापनाय बहुधा प्रायतत।

**हरिहरः** — बौद्धजैनचार्वाकादिधर्माः हिन्दुधर्मवृक्षस्य विस्तृत शाखाः एव भवन्ति।

**बुक्करायः** — तस्मात् भारतदेशीयसर्वधर्मैः मिलित्वा राष्ट्राय स्वाहा राष्ट्रायेदं न मम इति बुध्या अहर्निशं प्रयत्नः कर्तव्यः त्यागः कर्तव्यः।

**हरिहरः** — भारतवर्षे सकल प्रदेशाः विभिन्नभाषाभूषिताः अपि अत्मरूप संस्कृत्या ते प्रदेशाः संबद्धाः इति प्रथमतः श्री आद्यशंकराचार्यवर्यैः प्रतिपादितम्। ते भारतं चतुर्मख ब्रह्मा इव विलोक्य चतुर्वेदमठान् संस्थाप्य धर्मसंस्थापनमकुर्वन्। ते क्रान्तदर्शिनः तेभ्यः नमांसि। शङ्करः शङ्करस्साक्षात् नात्र लेशोऽपि संशयः।

**बुक्करायः** — तस्मात् मम एवं प्रतिभाति सर्वदा देशरक्षणा शास्त्रबलेन धर्म चिन्तनया परंपरागत शिक्षणया केवलं भवितव्या इति। साम्राज्य स्थापनाय तपश्शक्तिः आवश्यकी। सा शक्तिः अस्माकं कथं संप्राप्ता भविष्यति?

**हरिहरः** — सोदर मम अधुना एका भावना विद्युदिव मनसि स्फुरति। पवित्र तुङ्गभद्रानदीतीरे साम्राज्यनिर्माणं अवश्यं भवितव्यमिति।

**बुक्करायः** — बहमनीसुल्तानाः दक्षिणदेशसंपच्चयं देवायतनानि नेतुं नाशयितुं च प्रयन्तते।

**हरिहरः** — यदि वयं तां शक्ति न रोत्स्यामः तर्हि सर्वमपि दक्षिणभारतं उत्तरभारतमिव ध्वस्त दैवायतनं भविष्यति। सर्वेऽपि अन्य धर्मानुयायिनः बलवत्तमेन आशारूपेण भारतं परिवर्तितुं प्रयतन्ते।

**बुक्करायः** — यदि अन्य संस्कृतिः भारते स्थानं संपादयिष्यति तर्हि भारतं सूकरपरीतं अत्यन्तपाशविकं केवलं भौतिकजीवन तत्परं भविष्यति। सर्वोऽपि देशः

पशुदेशः भविष्यति। विचार्यमाणे देहः रक्तौष्णिक्येन प्रज्वलति। वयं कृतघ्नाः भवामः प्राचीनानां अस्मदीय महानुभावानाम्।

**हरिहरः** — प्रारब्धमानं हिन्दुसाम्राज्यं आगामिनां भारतीय सोदराणां महावीराणां मार्गदर्शकं स्फूर्तिदायकं च भविष्यति। तुङ्गभद्रा परिखा इव अस्मदीय साम्राज्यं रक्षिष्यति।

**बुक्करायः** — तुङ्गा महोत्तुङ्गतरङ्गिणी भूत्वा आनन्देन शत्रुवेगात् साम्राज्यं रक्षिष्यति।

**हरिहरः** — प्रथमतः साम्राज्य स्थापनायाः स्थलनिर्णयः कर्तव्यः।

**बुक्करायः** — यदि समयः आसन्नः भविष्यति तदा अप्रयत्नेन स्थलनिर्णयः भविष्यति।

**हरिहरः** — सोदर आवयोः भावनाः एकसूत्रबद्धाः इति भान्ति।

**बुक्करायः** — अवश्यं अस्मदीय मनोरथः फलिष्यति। एहि गच्छावः। तपस्सम्पन्नं महापुरुषं वेदमूर्ति शोधयिष्यावः। जयहिन्द।

**हरिहरः** — जयहिन्द। (इति सोदरं अलिङ्गति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(विद्यारण्यः तुङ्गभद्रायां स्नात्वा विरूपाक्ष दर्शनार्थं विरूपाक्षालयं आगच्छति (नेपथ्ये अयं मन्त्रः पठ्यते) शंनो मित्रश्शं वरुणः। शंनो भवत्वर्यमा। शंन इन्द्रो बृहस्पतिः। शंनो विष्णुरुरुक्रमः। नमो ब्राह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतुमां। अवतु वक्तारम्। ओं शान्तिः शान्तिः शान्तिः।)

**विद्यारण्यः** — अहो इदं तुङ्गभद्रातीरं परब्रह्मणः भूतल निवास स्थानम्। तुङ्गास्नानं विरूपाक्षदर्शनं अस्मिम्प्रदेशे जीवनम्, एतस्मात् अन्यत् किमपेक्ष्यते भौतिक प्रपञ्चे। अयं विरूपाक्षः अतीव शक्तिसंपन्नः। अस्य सर्व आगराणि धनकनक वाहन वस्तुचयैः संपूर्णानि। परदेशीयाः अस्मत् गृहं प्रविश्य गृहं ज्वालयन्ति। अस्मत् गृहं कलुषितप्रायं कुर्वन्ति। भारतीय संस्कृतिप्रतीकान् देवालयान् नाशयन्ति। संपच्चयं मुष्णन्ति। यदि एतादृशी परिस्थितिः तर्हि विरूपाक्षस्य सर्वसंपत् नाशनं भविष्यति। तस्मात् अनेनधनेन भारतीय संस्कृतिसंरक्षणार्थं एकं महासाम्राज्यं संस्थाप्य परदेशीय धाटिभ्यः देशं रक्षितुं प्रयतिष्यामहे।

(एकत्रोपविश्य) अहं तु सन्यासी धर्मसंस्थापकः। न मे शक्तिः विद्यते राज्यं पालयितुं। राज्य पालनार्थं क्षात्र शक्तिः अपेक्षनीया। रजोशक्तिः पालनदक्षा भवति। सन्यासिनां राजसं कुतः। उत्तरभारते देवालयाः धर्म-संस्थापनाश्च नाशनं प्राप्ताः परदेशीयानां पाशविक शक्त्या। चाणक्य सदृशाः चन्द्रगुप्तसहाय्येन स्वर्णयुगं संस्थापयामासुः। आदिशङ्करः धर्मतः भारतं सर्वं एकमिति प्रचारयामास। तथापि सर्वोऽपि जनः आत्मानं प्रभुं सर्व शक्तिवन्तं मनुते। यदि सर्वैरपि मिलित्वा स्थीयते तर्हि देशः क्रियाशक्तिसपन्नः भविष्यति। यदि शक्तिसंपन्नाः हिन्दुभावसंपन्नाः राजानः स्युः तेषां अहं साहाय्यकः मार्गदर्शी च भवेयम्। भारतराष्ट्रं हिन्दुसाम्राज्यं संस्थाप्य भारत संस्कृतिं परम्परां परिरक्ष्येयम्। (इति देवालयस्य प्राङ्गणे उपविशति चिन्तया) अहो तदानीं अहं शान्त्या वेदभाष्यं विलिखेयम्। अस्मदीय पूर्वजाः अनेक कष्टानि अनुभूय अस्माकं बृहत्तमं संस्कृतिं दत्वा तद्रक्षणे अस्मान् नियुज्य गताः। संस्कृतिरक्षणं अस्मदीय कर्तव्यं भवति। सर्वदा बुद्धिबलेन वाणिज्य बलेन, कृषि बलेन देशं सर्वसंपन्नं सुसपन्नं कर्तव्यम्। अधुना क्षात्रमन्त्रशक्ती अपेक्षेते। (इति मौनेन उर्ध्वमुखः शून्ये पश्यति)

(ततः प्रविशतः हरिहर बुक्करायौ)

**हरिहरः** — (विद्यारण्य स्वामिनं विलोक्य सोदारेण बुक्करायेन) सोदर एनान् विद्यारण्य स्वामिनः पश्य।

**बुक्करायः** — परमं भाग्यम् इदम्। (इति द्वावपि तस्मै प्रणमतः)

**विद्यारण्यः** — मनोरथ सिद्धिरस्तु। (इति आशिषः ददाति)

**हरिहरः** — अयि भोः स्वामिनः तत्र भवतां सम्बन्धः अस्माकं अपेक्षणीयः सर्वदा।

**बुक्करायः** — अयं समावेशः मङ्गलमयः भवतु इति भवद्भ्यः आशिष कामयामहे।

**हरिहरः** — महात्मन् वयं पवित्र भारतवर्षं परेषां चमूभ्यः संरक्षितुं हिन्दु-साम्राज्यं च संस्थापयितुं उद्युक्ताः।

**बुक्करायः** — तादृश साम्राज्य स्थापनाय ब्राह्मीमयमूर्तिः आवश्यकः।

**हरिहरः** — यदि युष्मादृशानां सहायः भवति तर्हि हिन्दुसाम्राज्यस्थापना अचिरादेव भविष्यति।

**विद्यारण्यः** — युष्मदीय भावना अस्माकं मान्या भाति। जगति सर्वेपि, न केवलं जगति, खगोळेऽपि परस्पराकर्षण संजाताजीवनाः भवन्ति।

**हरिहरः** — अस्मदीय सकाशे न किमपि धनं विद्यते साम्राज्यस्थापनाय।

**बुक्करायः** — साम्राज्य स्थापनाय धनमावश्यकं भवति।

**हरिहरः**—कायशक्तिः अस्मत्सकाशे विद्यते। अधुना अपेक्ष्यते मे धनशक्तिः।

**बुक्करायः** — न केवलं मेधाशक्तिः किन्तु लक्ष्मीकटाक्षश्च अपेक्ष्यते।

**विद्यारण्यः** — अयि सोदरौ, भवतोः भावनया अहं परं संतुष्टः अस्मि। आवयोः भावनातरङ्गाः समान मार्गे एकसूत्रे प्रवहन्ति। श्रृण्वन्तु भवन्तः। यदि पर-देशीय शक्तयः आगत्य दक्षिण हिन्दुस्थानं नाशयिष्यन्ति तर्हि सर्वविरूपाक्ष धनसंपत्तिः नष्टा भविष्यति। तस्मात् तदपेक्ष्या हिन्दुसाम्राज्य स्थापनाय तदीय सर्वधनं उपयुज्येत तर्हि देशरक्षणं भविष्यति। अस्मिम् विषये सर्वोऽपि पौरः तनमनधनचयं राष्ट्राय स्वाहा राष्ट्रायेदं न मम इति वदन् अर्पयति तर्हि हिन्दुसाम्राज्य स्थापना भविष्यति। नोचेत् देशः सङ्कटे पतिष्यति।

**हरिहरः** — कुत्र कदा सम्राज्यस्थापनायाः कोणशिला समारम्भः भविष्यति, भवन्तः सूचयन्तु।

**विद्यारण्यः** — अयि सोदरौ श्रृणुताम्। अहं कथयामि एकां वृत्तघटनाम्।

**हरिहरः** — केयं घटना स्वामिन्।

**बुक्करायः** — कुतूहलयति आवाम्।

**विद्यारण्यः** — अद्य प्रातः मयि तुङ्गायां स्नातुं गच्छति सति तत्र विरूपाक्ष देवालयानुत्तरेण एकः शशकः एकः कुक्कुरः कलहायमानौ आस्ताम्।

**हरिहरः** — ततस्ततः।

**विद्यारण्यः** — कुक्कुरः शशकयोर्मध्ये महान् कलहः संजातः।

**हरिहरः** — ततः किमभूत्।

**विद्यारण्यः** — अन्ततः सः अल्प प्राणी शशकः तं कुक्कुराधमं द्रावयामास।

**बुक्करायः** — ततस्ततः।

**विद्यारण्यः** — ततः किं यत् भवितव्यं तत् वृत्तम्।

**हरिहरः** — किमत्राश्चर्यं भोः।

**विद्यारण्यः** — भवद्भ्यां न ज्ञातं अत्र विद्यमानरहस्यम्।

**बुक्करायः** — नहि।

**विद्यारण्यः** — श्रृणुतां भवन्तौ। कुक्कुरः बलवान् शशकः अल्पप्राणी। सहजतया कुक्कुरः शशकं द्रावयित्वां तं व्यापाद्य भक्षितुं समर्थः। किन्तु अत्र व्यत्यस्तं जातम्। अनया धटनया स्फुरति मे मनसि एतत् स्थलं हिन्दुसाम्राज्यस्थापनाय योग्यं भविता इति। अपिच वयं पाशविक शक्तीः सुनायासेन जेष्यामः। अनया हिन्दुसाम्राज्य स्थापनया वयं दक्षिणभारतं रक्षिष्यामः। इयं हिन्दुसाम्राज्य स्थापना अस्मदनन्तरं आगतानां योद्धानां भारतवासिनां स्फूर्तिदायिनी भविष्यति। तस्मात् यत्र कुक्कुरः पलायितः शशकेन तत्रैव साम्राज्यस्थापना कर्तव्या शुभमुहूर्ते उत्तरायण पुण्यकाले रथसप्तमी दिवसे।

**हरिहरः** — स्वामिन् अस्यां कथायां भविष्यमाणं सर्वं भवद्भिः संसूचितम्।

**बुक्करायः** — आवयोः, श्रवणमात्रेण एतादृशीभावना जाता यत् हिन्दु महासाम्राज्यस्थापनया केवलं शात्रवः पराजिताः इति।

**विद्यारण्यः** — वेदोक्तरीत्या प्रथमतः भूमिपूजा कर्तव्या। अनन्तरं श्री विरूपाक्षस्य महन्यासपूर्वक रुद्राभिषेकः कर्तव्यः इति मे संकल्पः तस्मात् त्वर्यताम्।

**हरिहरः** — सर्वमेतत् सर्व ग्रामीणानां समक्षं भविता।

**बुक्करायः** — अधुना अस्माकं सङ्घशक्तिः विद्यते।

**हरिहरः** —मन्त्रशक्तिः अपि विद्यते। अधुना केवलं लक्ष्मीशक्तिः अपेक्षणीया विद्यते।

**विद्यारण्यः** — अयि बुक्करायहरिहरौ गृह्णीतां विरूपाक्ष धनागार कुञ्चिकाः। (इति तयोः निकटे निक्षपति)

**हरिहरः** — श्री विरूपाक्षस्य सर्वं धनं राष्ट्रसंरक्षणार्थं केवलं आवां व्ययी कर्तुं प्रयतिष्यावः।

**विद्यारण्यः** — सर्वैरपि मन्त्रोयं उच्चारणीयः पवित्रबुध्या यत् राष्ट्राय स्वाहा राष्ट्रायेदं न मम इति।

(सर्वेऽपि राष्ट्राय स्वाहा राष्ट्रायेदं न यम इति एक स्वरेण उच्चरन्ति हस्ते हस्तं निक्षिप्य)

**हरिहरः** — जय विरूपाक्ष। (इति विद्यारण्यस्वामिने नमस्करोति)

**बुक्करायः** — जय विरूपाक्ष। (इति विद्यारण्यत्वामिने अग्रजाय हरिहराय च नमस्करोति)

**विद्यारण्यः** — सर्वेषां सन्मङ्गलानि भवन्तु। (इति आशिषः प्रयच्छति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(तुङ्गभद्रा नदीतीरे एकस्मिन् ग्रामे ग्रामीणाः रामः, कृष्णः, शिवः, गणपति प्रभृतयः ग्रामाध्यक्षेण भाषणं कुर्वन्तः सन्ति)

**ग्रामाध्यक्षः** — अयि राम, भारतवर्षं सर्वमपि नाशयितुं एते पाशविकाः प्रयतन्ते।

**रामः** — प्रभो, कः भारतं नाशयिष्यति। भारतं नाशयितुं भौतिकशक्तिः अशक्ता भविष्यति।

**ग्रामाध्यक्षः** — तथा मावद अन्यदेशीय पाशविकाः सर्वथा प्रयतन्ते।

**रामः** — एभिः न किमपि क्रियते। ते केवलं मक्षिकाः मशकाः।

**कृष्णः** — अरे त्वं न जानासि। उत्तर भारते देवायतनानि सर्वाणि परदेशीय चमूधाटिभिः नाशयितानि उर्वर्यां स्थापितानीति किंवदन्ती प्रचलति।

**शिवः** — एतदपि श्रुतम्। सौराष्ट्रे सोमनाथं स्थल शयनं अकुर्वन् इति केचन यात्रिकाः कथयन्ति।

**गणपतिः** — नलंदा तक्षशिला इत्यादि विद्यासंस्थाः बहुमास पर्यन्तं वैश्वानरं अतर्पयन् इति कोऽपि परिव्राजकः जगाद।

**ग्रामाध्यक्षः** — अनेके विषयाः संश्रूयन्ते अस्माभिः। न किमपि प्रतिरोद्धुं अस्माभिः क्रियते।

**गणपतिः** — अधुना अस्माभिः श्रुतम्। इतः पूर्वं न किमपि श्रुतं अस्माभिः।

**शिवः** — वयं अस्मदीय ग्रामे एवं विचारयामः, एवमेव सर्वत्र भारतवर्षे सर्वोऽपि यदि चिन्तयेत् तर्हि सर्वत्र हिन्दुसाम्राज्यस्थापना विषयकविप्लवः भविष्यति।

**कृष्णः** — केषांचन जीवित मुद्दिश्यैव चिन्ता, अन्येषां धनचिन्ता।

**रामः** — साधूक्तं न कोऽपि चिन्तयति हिन्दुसंघटनामुद्दिश्य। अस्मदीय देशे यदि हिन्दूनां संघटना भवति तर्हि भारतं नाशयितुं कस्य समीपे शक्तिः भविष्यति।

**ग्रामाध्यक्षः** — अयि राम एते पाशविकाः भारतीय संपद्भयः मोहिता सर्व संपच्चयं गृहीत्वा भारतं नाशनं कृत्वा गच्छन्ति।

**रामः** — सर्व संपच्चयं चोरयित्वा ते अस्मात् देशात् नयन्ति।

**कृष्णः** — तथा करणमयोग्यम्। ते अस्माभिस्साकं सुखजीवनं यदि कुर्युः तर्हि तान् स्वागतपूर्वकं वयं आह्वयिष्यामः।

**शिवः** — स दुरात्मा सोमनाथस्य लिङ्गं नीत्वा स्वप्रासादस्य सोपानमार्गे निक्षिप्तवानिति प्रजानुमेयः।

**गणपतिः** — ते सोमनाथपुरोहिताः तान् पशून् करुणान्तरङ्गाः अतिदया दाक्षिणाभ्यां प्रार्थयामासुः तल्लिन्ङ्गं प्रतिग्रहीतुं, किन्तु ते दुष्टाः निर्दयाः भूत्वा तान् ब्राह्मणान् अताडयन्।

**ग्रामाध्यक्षः** — ते पाशविकशक्तिशालिनः न श्रोष्यन्ति। तेषां जीवनं पशुप्रायं स्वार्थ युतं भवति।

**रामः** —मूर्खाः नाशने तत्पराः न किन्तु सहृदयेन जीवितुं, शक्ताः।

**कृष्णः** – ते रक्तपायिनः जलूकाः। ते क्रौर्यस्य प्रतिरूपाः। न तेषां बुद्धि-बलं विद्यते।

**शिवः** — ते भारतावनै जनान् हत्वा भारतात् धनलक्ष्मीं अमुष्णन्।

**गणपतिः** — सर्वत्र देशे एवमेव प्रचलति। ग्रामाधिपाः महाराजानः किं कुर्वन्ति? ते स्वपन्ति किम्?

**ग्रामाध्यक्षः** — ग्रामाध्यक्षाणां मध्ये, महाराजानां मध्ये अनन्त मनोवैषम्यानि सन्ति। सर्वभारतं न केषामपि दृष्टिपथं समायाति।

**कृष्णः** — एकस्मात् प्रदेशात् प्रदेशान्तरं गन्तुं सर्वेषां दुष्करं भवति। कथं एका भावना सर्वव्याप्ता भविष्यति।

**शिवः** — सर्वत्रापि राजानः स्वीय राज्यं इति केवलं चिन्तयति न किन्तु भारतराज्यमिति।

**ग्रामाध्यक्षः** — भवता निगदितं साधुरेव। किन्तु पश्य भारतीयानां एका-त्मता भवितुं कस्याश्चन शक्तेः आविर्भावः आवश्यकः।

**शिवः** — एकवारं सर्वत्रभारते युगपत् एकविषयमुद्दिश्य कथनं अतीव दुष्करं भवति।

**रामः** — अश्वयानेन वार्ताहरान् सर्वत्र संप्रेष्य संघटना मन्त्राः प्रसारयितव्याः।

**कृष्णः** — एतत् दुष्करं भविष्यति।

**गणपतिः** — दुष्करं भवतीति मावद। कुरु। कारय। दर्शय। चन्द्रगुप्तः कथं सुवर्णयुगं कृतवान्। हर्षवर्धनः कथं विशाल साम्राज्यं संस्थापयामास।

**रामः** — सर्वेण देशभक्तेन भवितव्यम्।

**कृष्णः** — अस्मत् देशे अन्तश्शत्रवः सन्ति। ते स्वार्थाय परानाश्रयन्ति देशं नाशयन्ति।

**शिवः** — यदि यः कश्चन राजा हिन्दुसाम्राज्यं स्थापयितुं शक्तः भवेत् वयं सर्वे तेषांराज्ञां सैनिकाः भवेम।

**गणपतिः** — यदि तुङ्गभद्रा समीपे हिन्दु साम्राज्य स्थापना भविष्यति तर्हि वयं साम्राज्याय मनोवाक् कायकर्मभिः सर्वं देशहिताय त्यागं कुर्याम इति मे चेतः परं नर्तते।

**ग्रामाध्यक्षः** — साम्राज्य स्थापनाय सैनिकबलमत्यावश्यकं भवति। वयं ग्रामीणाः सर्वे सैनिकाः भविष्यामः।

**रामः** — वयं सर्वे चिक्रोडभक्तिः इव अस्मदीयं सर्वं तनमनधनानि च मातृभूमिकृते अर्पणं कुर्याम।

**कृष्णः** — राजा उत, शासकः सर्वदा स्वार्थरहितः भूयात्।

**ग्रामाध्यक्षः** — वयं सर्वे श्वः प्रभाते हरिहरस्य समीपं गत्वा मन्त्रं भणिष्यामः।

**गणपतिः** — धनमूलमिदं जगत् प्रथमतः वयं सर्वे मिलित्वा धनसंचयं कुर्मः। अनंतरं तत् धनसंचयं गृहीत्वा हरिहर समीपं गच्छेम।

**शिवः** — हरिहरः अनेन धनेन किं करिष्यति। प्रथमतः भारतीयेषु आत्मशक्तिः यदि स्यात् तया शक्त्या आत्मसकाशे विद्यमान परिकरैः धनसञ्चयैः वयं देशं रक्षिष्यामः।

**ग्रामाधिपः** — यथा श्रीरामचन्द्रस्य वशिष्ठः आसीत, चन्द्रगुप्तस्य चाणक्यः आसीत् तद्वत् हरिहरस्यापि एकः प्रज्ञाचक्षुः वेदपारगः भवितव्यः।

**गणपतिः** — वयं सर्वे हरिहरेण बुक्करायेन सार्थं भाषयिष्यामः। अस्मदीय भाषणेन अत्र न किमपि प्रयोजनं भवति। उत्तिष्ठत गच्छामः। (इति सर्वे उत्थाय गच्छन्ति)

(यवनिका पतति)

* * *

# चतुर्थं दृश्यम्

(नेपथ्ये विद्यारण्यसाहायेन हरिहरः हिन्दुसाम्राज्यस्थापनां कुर्यात्, बुक्करायः तयोः दोहदं कुर्यात्, हरिहरः राजाभूयात्, विद्यारण्यः मन्त्रित्वं प्राप्नुयात्, हिन्दुसाम्राज्यं शरदां शतं जीवेत्। बुक्कराय हरिहर विद्यारण्याः प्रविशन्ति)

**हरिहरः** — स्वामिनः श्रुतं किं भवद्भिः जनानुरागः प्रजानुमोदश्च।

**विद्यारण्यः** — सर्वत्र हिन्दूसाम्राज्य स्थापना कर्तव्या इति घोषणा संश्रूयते।

(ततः प्रविशंति ग्रामाध्यक्ष, राम, कृष्ण, शिव, गणपति प्रभृतयः।)

**ग्रामाध्यक्षः** — अयि विद्यारण्य हरिहर बुक्कराय महानुभावाः वयं सर्वे युष्मदीय आज्ञाशिरोधारकाः हिन्दुसाम्राज्य स्थापने सहायकाः।

**गणपतिः** — वयं तनमनधनसपरिवारं देशरक्षणाय समर्पयितुं उद्युक्ताः।

**विद्यारण्यः** — अयि देशभक्ताः वयं सर्वे मिळित्वा हिन्दुदेश संरक्षणार्थं भारतीय संस्कृति रक्षणार्थं प्रयतिष्यामः। यदि भारते प्राचीन परम्परा, वैदिक साम्प्रदायः, संगीत कलानृत्य साहित्यादयः भ्रष्टाः भविष्यन्ति, तर्हि भारतनाशनमेव भविष्यति। तस्मात् तत् रक्षणार्थं वयं विरूपाक्ष देवायतनसर्वसम्पदा हिन्दुसाम्राज्यं संस्थापयिष्यामः।

(सर्वे जय विरूपाक्ष जय विरूपाक्ष इति मुक्तकण्ठं गर्जनां कुर्वन्ति)

**बुक्करायः** — सोदर अस्मिन् शुभमूर्ते साम्राज्य स्थापनावश्यकानि कानि अपेक्षितानि सन्ति सविस्तरं कथयतु।

**हरिहरः** — देश रक्षणार्थं पदातयः पंचलक्ष परिमिताः आवश्यकाः। त्रिलक्ष परिमितं आश्विकदळम्। द्विलक्ष परिमितं गजबलम् संहत्य दशलक्ष परिमितं सैन्य मावश्यकम् भवति।

**बुक्करायः** — विरूपाक्ष देवालयनवीनकरणम्। सकल मणिगण वस्तुचय संरक्षणं च कर्तव्यम्।

**ग्रामाध्यक्षः** — हरिहर, बहुकालानन्तरं अस्माकं समीचीन सदवकाशः संप्राप्तः। श्रीविरूपाक्षः श्रीविद्यारण्य स्वामिनां दृढविश्वासमार्गरूपेण भवतां दृढ संकल्पेन च हिन्दुसाम्राज्य स्थापनाय मार्गमादिदेश। अहं ते चमूनायकः भवितु मुत्सहे। अहं सर्व सैन्यविन्यासं सर्वसंरक्षणं चतुर्विधोपायशिक्षणां च सैन्येभ्यः शिक्षयिष्यामि। अयं मे भारः।

**हरिहरः** — सर्वमपि केवलं देशभक्त्या करणीयमिति सर्वं चमूपतीनां निवेदनीयं अस्ति।

**नायकः** — भवतः आज्ञां पालयिष्यामि।

**बुक्करायः** — सोदर हरिहर अहं त्वां अनुसरन् राज्य व्यवहारादीन् पश्येयम्।

**नायकः** — हरिहर प्रथमतः गजशालां वाजिशाला निर्माय सैन्य प्रशिक्षणादिकं च कर्तव्यं विद्यते। तस्मात तस्मिन् कर्मणि निरतो भवेयम्।

**हरिहरः** भवान् तस्मिन् कर्मणि निरतो भूयात्।

**नायकः** — ( गच्छति )

**बुक्करायः** — हरिहर, एतावत्पर्यन्तं स्वप्ननिरूपिताः भावनाः अधुना कार्यरूपे दर्शयितव्याः।

**हरिहरः** — सोदर बुक्कराय, अन्य देशीय चमू अवरुन्धनं विधाय सर्ग देशः चारेक्षणैः रक्षयितव्यः अस्ति। आवां राजानः इति विस्मृत्य वयं केवलं देशभक्ताः इति भावनया सामान्य मानव जीवनं निर्वहन्तः देशरक्षणे निरताः भवेम।

**बुक्कराय:** — सोदर, भवतः आज्ञा मया शिरसा ध्रियते।

**हरिहर:** — अयि विद्यारण्यस्वायिनः तत्र भवन्तः वेदभाष्यं विनावरोधं प्रशान्त मनसा विलिखन्तु।

**विद्यारण्य:** — अयि सोदरौ। श्वः रथसप्तमी। तस्मिन् दिवसे प्रथमतः भूमिपूजनं कोणशिला समारम्भः महन्यासपूर्वकं रुद्राभिषेकश्च कर्तव्यः। तदर्थं सर्वसमारम्भं कारयन्तु। तदनन्तरं अहं वेदभाष्य लिखने बद्धचित्तः भवेयम्।

**हरिहर:** — अयि विद्यारण्यमहर्षे श्रीरामचन्द्रस्य वशिष्टमहर्षिः इव, भवन्तः अस्माकं मार्गदर्शकाः अपि च अस्मदीय कुलगुरवः। सत्वरं कारयन्तु भूमिपूजनं रुद्राभिषेकं च।

**विद्यारण्य:** — मां अनुसरन्तु भवन्तः। ( इति सर्वे गच्छन्ति )

( यवनिका पतति )

* * *

# पंचमं दृश्यम्

( नेपथ्ये ''भूमिर्भूम्ना द्यौर्वरिणान्तरिक्षं महित्वा,'' इति भूसूक्त मन्त्रघोषाः तदनन्तरं ''नमस्तेस्तु भगवन् विश्वेश्वराय, महादेवाय, त्र्यंबकाय, त्रिपुरान्तकाय, त्रिकाग्निकालाय, कालाग्निरुद्राय नीलकण्ठाय, मृत्युंजयाय, सर्वेश्वराय, सदाशिवाय, श्रीमन्महादेवाय, नमः '' इति रुद्राभिषेक घोषणाश्च संश्रूयन्ते )

( ततः प्रविशन्ति हरिहर बुक्कराय विद्यारण्यस्वामिनः अन्ये च पौराः,हरिहरः सिंहासने उपविशति,बुक्कराय विद्यारण्यदयः पार्श्वे विद्यमान पींठेषु उपविशन्ति,तदितराः उभयतः श्रेण्यां तिष्ठन्ति, तत्र पीठोपरि न्यस्तं खड्गं श्रीविद्यारण्यःगृहीत्वा हरिहर कटि प्रदेशे बध्नाति, अपि च शिरोवेष्टनं गृहीत्वा हरिहरस्य शीर्षे निक्षिपति, अन्येच मन्त्राक्षतान् पुष्पाणि च गृहीत्वा हरिहरोऽपरि विकिरन्ति। )

**विद्यारण्यः** — "ध्रुवन्ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ध्रुवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्।" (इति हरिहर बुक्कराय नायकानां उपरि मन्त्राक्षतपुष्पाणि विकिरति विद्यारण्यः। सर्वेऽपि पुष्पाक्षतान् विकिरन्ति। एकैकशः सर्वे अन्तः गच्छन्ति वैश्वानरसान्निध्यं, मन्त्रोच्चारणं कुर्वन्ति) चित्तंच स्वाहा। चित्तायेदं न मम। चित्तिश्च स्वाहा। चित्या इदं न मम। आकूतं च स्वाहा। आकूतायेदं न मम। राष्ट्राय स्वाहा। राष्ट्रायेदं न मम। (वैश्वानरे हवींषि समिधश्च निक्षिपन्ति।

**विद्यारण्यः** — हिन्दुसाम्राज्यं।

**सर्वे** — वर्धताम्।

**विद्यारण्यः** — श्रीविरूपाक्षः।

**सर्वे** — जयतु।

**विद्यारण्यः** — हरिहरः।

**सर्वे** — जयतु।

**विद्यारण्यः** — बुक्करायः।

**सर्वे** — जयतु।

**विद्यारण्यः** — शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्वेन्द्रिये प्रतितिष्ठतु। ओं शांतिः शांतिः शांतिः। (सर्वे मङगलवाद्याः भवन्ति।)

(यवनिका पतति)

## ।। आत्मार्पणम् ।।

येनामवीराः स्थिरकीर्तिरूपाः । आत्मार्पणं राष्ट्रहिताय चक्रुः ।
निस्वार्थबुध्या भुवितानजस्त्रं । प्रस्तौमि तानाशिबराययोद्धान् ।।

(नान्द्यन्ते)

(ततः प्रविशति वेत्रहस्तः शशाङ्कः)

शशाङ्कः — हञ्जे कौमुदि इतः एहि ।

कौमुदी — हाँ आगच्छामि । (इति पुस्तक हस्ता प्रविशति)

शशाङ्कः — प्रिये, अद्याहं विलम्ब्य गृहमागच्छेयम् ।

कौमुदी — विलम्बस्य कारणं किम् ?

शशाङ्कः — अद्य मित्रैः साकं नाटकं द्रष्टुं गच्छामि ।

कौमुदी — एवं, किंतन्नाटकम् ।

शशाङ्कः — आत्मार्पणं नाम नाटकम् ।

कौमुदी -- (विहस्य) आत्मार्पणं नाम नाटकम् ।

शशाङ्कः — असंदर्भे अपिच अस्थाने हासः कुतः ?

कौमुदी — अहं भावयामि, शाकुन्तलम् उत मृच्छकटिकम् नोचेत् उत्तर रामचरितम् इत्यादि नाटकानि द्रष्टुं गच्छसीति ।

शशाङ्कः — इदं नवीननाटकम् ।

कौमुदी — त्वं नवीननाटकानि द्रष्टुं मागच्छ ।

शशाङ्कः — नवीन नाटकेष्वपि कतिर्चित् नाटकानि अत्युत्तमानि सन्ति ।

**कौमुदी** — जानामि तत्। अधुना केचन पण्डितं मन्यमानाः ऐतिहासिक महापुरुषाणां जीवितानि कलुषितप्रायानीति चित्रणां विधाय येनकेनाप्युपायेन जगति प्रसिद्धाः भवितुं प्रयतन्ते। आधुनिक नाटकानि, चलचित्राणि दृष्टवा जनाः न कामपि साधुवर्तनां ज्ञातुं समर्थाः भवन्ति। तस्मात् अहं नवीनलोकं नवीनचित्रणां च विगर्हामि।

**शशाङ्कः** — अर्थात् आधुनिकेषु नाटकेषु चलचित्रेषु न कोऽपि नवीनः सत् विषयः विद्यते ज्ञातुमिति ते अभिप्रायः।

**कौमुदी** — आम्। स एव मे अभिप्रायः किन्तु कतिचित् नाटकानि अत्युत्तमानि विद्यन्ते।

**शशाङ्कः** — आत्मार्पणनाटक वीक्षणेन सामाजिकः देशभक्तिपूर्णमानसः, सर्वमपि देशहिताय त्यागं कर्तुं संसिद्ध भावुकः भविष्यति।

**कौमुदी** — आत्मार्पणं नाम नाटकस्य इति वृत्तः कः किंचित् विस्तरेण कथय मे।

**शशाङ्कः** — प्रिये, एतादृश कथाश्रवणेन, कथाकथनेन मानवस्य शरीररक्तः अत्यौष्णिक्यं प्राप्य देशहिताय किमपि कार्यं कर्तुं प्रचोदयिष्यति श्रृणु। स्वामिभक्तः तानाजीं हिन्दुसाम्राज्य प्रतिष्ठापकस्य श्री छत्रपति शिवार्जा महाराजस्य आज्ञां शिरसि पुष्पमालामिव ऊढवा, परहस्त गतं पर्वतं स्वाधीनं कर्तुं आत्मार्पणं चकार। तन्नाटकं संस्कृतभाषायां आधुनिक महाकविः लिलेख।

**कौमुदी** — तस्य आधुनिक महाकवेः नाम किम्?

**शशाङ्कः** — तस्य नाम पण्डित परीक्षित् शर्मा।

**कौमुदी** — (आश्चर्येण) पण्डित परीक्षित् शर्मा।

**शशाङ्कः** — किं त्वं जानासि तम्?

**कौमुदी** — हां जानाम्यहं। तमुद्दिश्य बहु श्रुतं मया।

**शशाङ्कः** — किमिति?

**कौमुदी** — अयं गीर्वाणान्ध्रभाषाप्रवीणः महाकविः। अनेन ललित गीतालहरीति गेयकाव्यं, विंशति सर्गात्मकं यशोधरा महाकाव्यं, अक्षय गीत रामायणं, सप्तविंशति नाटकपरिमितं परीक्षिन्नाटकचक्रं इति दृश्यकाव्यं च विलिखितम्।

**शशाङ्कः** — तस्मिन् दृश्यकाव्यसंचये इदं आत्मार्पणं विद्यते। अयं विंशतितमेशताब्दे महाकविः। अयं स्वलेखिनीद्वारा गीर्वाणवाणीं आधुनिक संस्कृतविश्वे विकिरति। अयं संस्कृताय जीवति।

**कौमुदी** — अयं अतीव प्रतिभासंपन्नः।

**शशाङ्कः** — प्रिये त्वन्मुखात् एनमुद्दिश्य बहु श्रुतम्। अधुना एतन्नाटकं अत्र रङ्गमञ्चे विद्यापीठ छात्राः प्रदर्शयिष्यन्ति। तदेव नाटकं द्रष्टुं मित्रैस्साकं गच्छामि।

**कौमुदी** — अहमपि तन्नाटकं द्रष्टुं इच्छामि। अस्य कवेः एकं नाटकमपि नाहं त्यक्ष्यामि। अहं अवश्यं मम जीवने तस्य नाटकानि सर्वाणि दिदृक्षामि। अयं अतीव रसज्ञः देशभक्तः कविः।

**शशाङ्कः** — यदि एतन्नाटकं दिदृक्षसि र्तांह सज्जित वेषा भव :

**कौमुदी** — नाटक प्रारम्भाय वेला भवति। अहं सज्जित वेषा अस्मि। अहं त्वामनुसरामि गच्छ।

**शशाङ्कः** — एहि। (इति तां हस्तेन धृत्वा गच्छति)

(रायगडस्य प्रासादगवाक्षात् पश्यन्ती, शिरोजान् कङ्कतिकया प्रसादयन्ती, जिजयामाता तिष्ठति, हठात् कोण्ढणादुर्गं विलोक्य एवं चिन्तयति)

**जिजया** — (मनसि) अहो निसर्गरमणीयोऽयं पर्वतः। अयं प्रभाते नीहारवृतः अभिषिक्तस्य स्फटिक शिवलिङ्गस्य शोभां प्रतनोति। अयं पर्वतः अनेक वृक्ष परीत सानु मण्डलैः मण्डितः बिल्वदळ मण्डल मण्डित शिवमूर्तिरिव आभाति। एकदा अयं अस्मदीयः। अधुना अयं परहस्त गतः आसीत्। किमर्थमयं पर्वतः अस्मदीयः न भवितव्यः। शैव शोभापरिवृतः अयं पर्वतः भारतीय हस्तगतः भवितव्यः।

सद्यस्थितिः भारतीयानां लज्जास्पदं भवति। भवतु पुत्रकं शिवरायं प्रक्ष्यामि। (इति शिरोजान् संहृत्य वेणीभरं कृत्वा) कोऽत्र भोः। (इति आह्वयति)

**प्रतिहारिणी** — (प्रविश्य) नमस्ते मातः। (इति नमस्करोति)

**जिजया** — कुमारं शिवरायमाह्वय।

**प्रतिहारिणी** — यथाज्ञाऽपयति देवी। (इति नमस्कृत्य गच्छति)

**जिजया** — (तत्र एकस्यां वितर्दिकायां उपविशति विचार मानसा)

(ततः प्रविशति शिवरायः)

**शिवः** — (तस्याः पादयुगलं प्रणिपत्य पीठान्तरे उपविशति) मातः किमर्थं माहूतोऽस्मि।

**जिजया** — शिव इतः एहि पश्य। (इति दर्शयति कोण्ढण गडम्, शिवः तयासह गच्छति पश्यति)

**शिवः** — मातः, सुन्दरोऽयं पर्वतः।

**जिजया** — तनय, अयं निसर्गरमणीयः पर्वतः।

**शिवः** — अयं सत्यं रमणीयः पर्वतः।

**जिजया** — अयं पर्वतः कुत्र विद्यते अधुना।

**शिवः** — अयं परहस्तगतः विद्यते।

**जिजया** — कथमयं अस्मदीय हस्तगतः न भवेत्।

**शिवः** — अवश्यं भवितव्यः।

**जिजया** — शिव, मम एका कामना वर्तते।

**शिवः** — का ते कामना मातः ?

**जिजया** — किं त्वं पूरयिष्यसि मदीय कामनाम्।

**शिवः** — अहं ते पुत्रः, जगति यत् असाध्यं विद्यते तदपि साधयिष्ये त्वत्कृते मातः।

**जिजया** — शिवराय शत्रून विजित्य एनं पर्वतं उपायनमिव मे समर्पय।

**शिवः** — मातः अयं अधुना अजय्यं भवति अस्माकम्।

**जिजया** — शिव अधुनैव उक्तवानसि यत् असाध्यं जगति विद्यते तत् साधयित्वा आनयेयं त्वत्कृते इति।

**शिवः** — सत्यं उक्तमानस्मि। किन्तु सः अधुना असाध्यः।

**जिजयाः** — अरे शिव त्वं वीरोचितं न वदसि।

**शिवः** — मातः, अहं ते पुत्रः हिन्दुसाम्राज्य स्थापने उद्युक्तः।

**जिजया** — अरे पुत्र, त्वं भीतिग्रस्तः कदा अभवः नाहं जाने। तव शैशवे स्तन्यपानेन समं अहं वीरगाथाः अश्रावयम्। त्वं सर्व महाभारतं, रामायणं, जानासि, किं ते ज्ञानेन प्रयोजनम्? सत्यं त्वं भीरुः जातः।

**शिवः** — (विनम्रो भूत्वा) मातः अहं सव्यसाची भूत्वा भीमो भूत्वा धर्मात्मा भूत्वा सत्यान्वेषणे परायणः। मातः धीरः समयं प्रतीक्षते।

**जिजया** — त्वं भीरुः भूत्वा एवं वदसि।

**शिवः** — तथा मावद मातः। अहं अधुनैव विजित्य आनयेयम्।

**जिजया** — शिव त्वं कोण्ढणगडं स्वायत्त करणे प्रयतस्व।

**शिवः** — तथैव मातः अहं स्वयं करिष्यामि।

**जिजया** — अचिरेणाऽयं पर्वतः अस्मदीय हस्तगतः भवितव्यः अस्ति।

**शिवः** — मातः ससैन्यः सयोधः कोण्ढणं रोद्धुं अद्यैव गच्छेयम्।

**जिजया** — अरे सुत त्वं अद्य गच्छ नोचेत् श्वः गच्छ किन्तु सः पर्वतः अस्मदीयः भवितव्यः अस्ति।

**शिवः** — जननि, अवश्यं त्वत्कृते साधयिष्ये गडमेनम्।

**जिजया** — शिव अहं समस्त भारतवर्षे हिन्दु साम्राज्यं दिदृक्षामि। त्वं कदा पूरयिष्यसि मे कामनाम्।

**शिवः**—मातः यदि त्वदुपमिताः मातरः स्युः भारतवर्षे क्षिप्रमेव विना प्रयासं भारते हिन्दुसाम्राज्यं नर्तिष्यति। मातः अहं अधुनैव कोण्डदेवैस्साकं मन्त्रणां विधाय युद्धाय कृतनिश्चयः भवेयम्। (इति नमस्कृत्य गच्छति)

**जिजया**—सर्वं देवताः मम कुमारं रक्षन्तु भारतवर्षं पान्तु। (इति अन्तः गच्छति)

(यवनिका पतति)

* * *

## द्वितीयं दृश्यम्

(शिवरायः इतस्ततः चरन् किंचित्कालं विचिन्त्य कोऽत्र भोः इति कथयति)

**दौवारिकः**—(प्रविश्य) एषोऽस्मि देवः।

**शिवः**—अरे सत्वरमेणजङ्घं आह्वय।

**दौवारिकः**—यथाज्ञापयति देवः। (इति नमस्कृत्य गच्छति)

**शिवः**—(सिंहासने उपविशति)

(ततः प्रविशति एणजङ्घः)

**एणजङ्घः**—(प्रविश्य) प्रभो शिवराय नमांसि। (इति नमस्करोति)

**शिवः**—अरे एणजङ्घ त्वं अनुपदमेव गत्वा मे शिक्षकं श्रीकोण्डदेवं आनय।

**एणजङ्घः**—यथाज्ञापयति प्रभुः। (इति गच्छति)

(ततः प्रविशति कोण्डदेवः)

कोण्डदेवः — शिवराय आशीर्वादान् वितरामि। (इति आशिषः ददाति)

शिवः — (आसनादवतीर्य) गुरुदेब नमांसि। (इति नमस्करोति)

कोण्डदेवः — अभींष्ट फलसिद्धिरस्तु।

शिवः — धन्योऽस्मि देव। इतः उपविशन्तु। (इति आसनं दर्शयति, कोण्डदेवः उपविशति)

कोण्डदेवः -- शिवराय अधुना हठात् अहं आहूतोऽस्मि कि कारणं विद्यते।

शिवः — कोण्डदेव, कोण्ढणगडं किजित्य मात्रे उपायनमिव देयं विद्यते। तं गडमुद्दिश्य चर्चां कर्तुं भवान् आहूतोऽस्ति।

कोण्डदेवः — शिव पृच्छतु भवान् मां गडमुद्दिश्य।

शिवः — कोण्डदेव गड मिमं जेतुं अधुना कियती सेना अवश्यकी भवति।

कोण्डदेवः — शिव गड मिमं जेतुं अधुना अशक्यं इति मे प्रतिभाति।

शिवः — कुतः ?

कोण्डदेवः — शिव, तस्मिन् गडे नररूप रांक्षसः एकः उदयभानुरिति राजपुत्रः अस्ति इति, दिग्गज समानः गजः अस्तीति, तौ द्वौ कल्लोलरूप सैन्यमपि एकनिमेषे नाशनं करिष्यतः इति जनाः कथयन्ति।

शिवः — कोण्डदेव, अस्मत्सकाशे अधिक सेना नास्ति। कथं अल्प सैन्येन तं बलवन्तं शत्रृं जेष्यामः। (इति इतस्ततः चरन् आस्ते)

कोण्डदेवः — बाल, शिवराय अधुना शत्रृः बलवान्, वयं अल्प सैन्य समायुक्ताः अधुना गड जयाय समयः न भवति। पश्य दीपः शक्तिसंपन्नोऽपि वायुबलेन प्रताडितः निर्वाणदशां प्राप्नोति।

शिवः — देव. यदि दीपः बृहद्भानुः भविष्यति तर्हि वायुबलेन प्रताडितः सर्वमपि अरण्यं दग्धपटलं करिष्यति। तस्मात् अधिक सैन्य समाविष्टेन वयं शत्रुं विजेष्यामः इति मे आत्मा कथयति।

**कोण्डदेवः** — सत्वरं सैन्यवृद्धिं विधाय गन्तव्यमिति मे अभिप्रायः।

**शिवः** — अल्प कालेन गडः जेतव्यः वर्तते। सैन्य वृद्धिकरणे अतीव वेला भविष्यति। तस्मात् अल्पसैन्येन, बुद्धिबलेन च शत्रुः विजेतव्यः।

**कोण्डदेवः** — सैन्यबलबुद्धिबलौ अपेक्ष्येते राजकीयेषु।

**शिवः** — देव, यदा अल्प बलेन शत्रृविजयः भवितव्यः तदा चाणक्य बुद्धिचातुर्यता, कामन्दकनीतिः, शुक्रनीतिः, महाभारते काश्चन घटनाः मे दुष्टिपथं चित्ररूपेण समाक्रामन्ति।

**कोण्डदेवः** — कथमिति निवेदयतु भवान्।

**शिवः** — कौटिल्यः यथा शत्रृवंश निर्मूलनं चकार तथा अहमपि बुद्धिबलेन शत्रृं विजेष्यामि। इयं राजनीति परम्परा भारतस्य।

**कोण्डदेवः** — पूर्वजाः धर्मयुद्धं अकुर्वन्, तद्वत् कर्तव्यं भवता इति मे मतिः।

**शिवः** — कोण्डदेव, धर्मयुद्धं विधाय महाराणा प्रतापः पञ्चविंशति वर्षाणि भारतदेश स्वातन्त्र्यसंपादनार्थं सकुटुम्बीकः अरण्यवासं चकार। अन्ततः वीरमरणं पेदे। तस्मात् अहं अस्मदीय पूर्वजेभ्यः जयापजय संदर्भान् परामर्श्यं यथास्थिति राजकीयेषु तत्परो भवेयम्।

**कोण्डदेवः** — किं कर्तव्यमिति भवतां अभिप्रायः।

**शिवः** — देव, अधुना धर्मयुद्धस्य स्थानं नहि। यदा शत्रुः वञ्चकः भवति तदा कौटिल्य बुद्ध्या वञ्चनया सः यमसदनं प्रापणीयः भवति। न तु धर्मेण।

**कोण्डदेवः** — शिव, अहं वृद्धः त्वं बालः, आवयोर्मध्ये वयोन्तरं विद्यते। न केवलं वयोन्तरं, भावनान्तरमपि विद्यते। तव कथनं हेतुपुरस्सरं भवति मे। शिष्यादिच्छेत् पराजयं इति लोकोक्तिः अद्य सार्थकतां पेदे अस्मिन् संदर्भे।

**शिवः** — देव यूयं मे गुरवः सर्व विषयेषु शिक्षणदातारः। अहं सर्वदा तव शिष्यः एव।

**कोण्डदेवः** — (आश्चर्येण) शिव, अधुना ते प्रयत्नः कः। सुस्पष्टं कथयतु भवान्।

**शिवः** — देव बलवन्तं शत्रुं सर्वोऽपि वीरः अश्वत्थामभावं प्राप्य अर्धरात्रौ नाशयिष्यति चेत् सर्वं सुकरं भविष्यति। तदेव अधुना आचरणीयं विद्यते।

**कोण्डदेवः** — (अवनतमुखः) शिवराय, तव कल्पनेयं, वैद्युतायमाना प्रतिभा, अन्येषां कथं भविष्यति। शतं जीव शिवप्रभो ! (इति आशीर्वचनानि दत्वा प्रयाति)

**शिवः** — (गुरुं नमस्कृत्य गच्छति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(तानाजी पुत्रस्यरायोबस्य विवाहसमारम्भे वर्तते, सर्वे बान्धवजनाः समागत्य तत्र स्वीय आसनेषु उपविष्टाः, रायबा नूतन बस्त्रधारणं विधाय ललाटे कुङ्कुमरेखाञ्चितः सुन्दर उष्णीषेन मण्डितशिरः आस्ते। तानाजी स्वीय बन्धुभिः साकं उपविष्टः आस्ते)

**तानाजी** — तनय सर्वेऽपि समागताः किन्तु शिवप्रभुः नागतः एतावत्पर्यन्तम्।

**रायबा** — पितः तदेव अहमपि चिन्तयामि।

**शेलारमामा** — महाराजः कस्मिन् कर्मणि रतः न कोऽपि जानाति। राजा कदा कुत्र गमिष्यति किं करिष्यति देवो जानाति नान्यः।

**सूर्याजी** — प्रभुः समागमिष्यति। ते हठात् आश्विको भूत्वा अस्मत् गेहं पावयिष्यन्ति इति मे मनः कथयति।

**तानाजी** — पत्रं प्रेषितं मया किन्तु सः पत्रधारकोऽपि न समागतः। कारणं किं स्यात्। (इति विचरयति)

**रायबा** — पितः बहुसमयः अस्ति। द्विहोरा परिमित समयः अस्ति। प्रभुः हठात् ऋक्षपातमिव आगमिष्यति।

**तानाजी** — मे शङ्का भवति यत् ते किमपि कार्यान्तरे निमग्नाः इति। नोचेत् ते प्रथमतः अस्मद्‌गेहं आगत्य अनन्तरं अन्यत्र गमिष्यन्ति। जानाम्यहं शिवप्रभूनां चित्तवृत्तिम्। ते सर्वं सैनिकान् स्वीय बान्धवानिव पश्यन्ति। ते सामाजिक वादिनः।

**शेलारमामा** — अयं प्रभुः हिन्दुसाम्राज्य स्थापनाय प्रयतते। राज्ञां अनेकानि राजकारणानि सन्ति। ते अवश्यं आगमिष्यन्ति लग्नवेळायां उत लग्नानन्तरं वा इति मे अभिप्रायः।

**सूर्याजी** — अस्मिन् विषये विचारः नहि कर्तव्यः। (इतस्ततः विलोक्य किंचित् श्रुत्वा) कोऽपि आश्विकः समायाति। (अश्व धावन खुरान्यासस्य ध्वनयः भवन्ति)

**तानाजी** — (अस्तव्यस्त अश्व खुरन्यास ध्वनिं आकर्ण्य) एते अश्व पद खुराघाताः नहि शिवाजी महाराजस्य घोट्टाणस्य, किन्तु कस्यापि सैनिकस्य अश्व पदघट्टनाः भवन्ति।

**रायबा** — भवतु नाम कोऽपि वार्ताहरः महाराजसकाशात् कामपि वार्तां आनयतीति मे ऊहः।

**शेलारमामा** — (इतस्ततः विलोक्य) अयं अस्मदीय मावळः समागच्छति, यः रायबालग्नपत्रिकां शिवाजी महाराजाय दातुं गतः।

**सूर्याजी** — अयं शरवेगेन समागतः।

**तानाजी** — एतावत्पर्यन्तं शिवाजी महाराजस्य अनुपस्थितित्वात्, अस्य पत्रधारकस्य आगमनेन शिवाजीमहाराजः नागमिष्यति इति संसूच्यते। (नेपथ्ये अश्वः स्तब्धः इव खुरानां ध्वनिविशेषाः हेषाश्च भवन्ति)

(ततः प्रविशति मावळः)

**मावळः** — (तानाजिनं नमस्कृत्यपत्रं दत्वा गच्छति)

**तानाजी** — (पत्रं गृहीत्वा सर्वसमक्षं वाचयति)

अयि स्वामि भक्ताग्रेसर, भारतीय सोदर, मराठा योद्धः नमस्ते। ते चिरंजीवस्य रायबास्य शुभविवाहः भवतीति पठित्वा परमानन्देन आत्मानं व्यस्मरम्। सर्वदा सर्वत्र भवतः कुटुम्बस्य मे शुभकामनाः सन्ति इति कथने पुनरुक्तिः भविष्यति। भगवान् सर्वशक्तिमान् शिवः शुभं कुर्यात् इति मम शुभकामनां प्रेषयामि।

महायोद्धः तव पुत्रस्य विवाहाय नाहं उपस्थितः भवितुं शक्नोमि यतः अत्र मम अनुपदाचरणीयकोण्ढणगडस्य विवाहस्य शुभमुहूर्तः अत्यसन्नः अस्ति। तदर्थं तत्रोऽपस्थितिः ममात्यावश्यको। त्वं तव पुत्रस्य शुभविवाहं कुरु। अहं अत्र कोण्ढणगडस्य शुभविवाहं करिष्यामि। गडस्य विवाहानन्तरं अहं त्वत्सकाशं समागमिष्यामि। शुभं भूयात्।

एवं

शिवप्रभुः

**तानाजी** — (किंचित्कालं आश्चर्येण चिन्तयाच स्थगितः भूत्वा) अयि बान्धवाः अन्यस्मिन् शुभमुहूर्ते अयं विवाहः भविष्यति। यतः शिव प्रभुः नागतः ततः अयं विवाहः अधुना न भविता। यत्र शिवरायस्य उपस्थितिः न भवति तत्र कार्यस्य माहात्म्यं न भवति। तस्मात् राज्ञः विना अयं विवाहः न भवति। यूयं सर्वेऽपि अत्रैव तिष्ठत, अहं शिवरायसमीपं गत्वा विदित सर्ववृत्तान्तः प्रत्यागमिष्यामि। कुमारस्य कल्याणात् देश कल्याणं बरिष्ठं श्रेष्ठतरंच। ततः अहमपि तस्मिन् देशकल्याणे भागं गृहीत्वा प्रत्यागच्छेयम्। (इति गच्छति)

**शेलारमामा** — शिवरायः कस्मिन् अपि सङ्कटे संलग्नः इव आभाति। हठात् किमापतितं वयं न जानीमहे।

**सूर्याजी** — महाराजाः सर्वदा आलोचना पराः। ते सर्वदा कार्यरताः भवन्ति। ते कस्मिन् समये किं करिष्यन्ति, कुत्र गमिष्यन्ति न कोऽपि

जानाति। तेषां आलोचनाशक्तेः अवधिः नास्ति। वयं अत्रैव पुनः मिलिष्यामः। नमस्ते। (सर्वेऽपि नमस्ते नमस्ते इति कथयन्तः गच्छन्ति)

(यवनिका पतति)

* * *

## चतुर्थं दृश्यम्

(जिजयामाता शिवरायश्च उपविष्ठौ संभाषयन्तौ)

**जिजया** — तनय, कोण्डदेवः किमवादीत् कोण्ढणगड प्रस्थानमुद्दिश्य।

**शिवः** — अधुना जेतुं दुष्करमिति अवादीत्।

**जिजया** — दुष्करं जेतुमिति अहमपि जानामि, किन्तु किमपि मार्गं जगाद किं इति मे प्रश्नः।

**शिवः** — सैन्यं अधिकसंख्या परिमितं विधाय यदि गम्यते तर्हि जय्यं भवेदिति जगाद।

**जिजयाः** — शत्रुः अतीव बलवान् किम् ?

**शिवः** — शत्रुः बनवानिति, तस्मिन्गडे नररूपराक्षसः एकः उदयभानुनामकः राजपुत्रः अस्ति इति, तस्य सकाशे दिग्गजसमानः गजः अस्तीति, तौ द्वौ कल्लोलरूप सैन्यमपि एकनिमेषे नाशनं करिष्यतः इति जनश्रुति अकथयत्।

**जिजया** — तस्मात् त्वया किं क्रियते ?

**शिवः** — मातः यदा शत्रुः बलवान् भवति तदा बुद्धिबलेन सः जेतव्यः इति निश्चितः तदर्थमहं मार्गं तर्कयामि।

**जिजया** — तनय, ते जीवनं ते साहसं धैर्यं च उत्तरदायिनां मार्गदर्शके भूयास्ताम्, अपिच दीपस्तम्भसमानं विराजतां इति, सर्वदा सर्वेश्वरमहं प्रार्थयामि।

**शिवः** — मातः मे अनुचराः सर्वे अत्यन्त देशभक्ति संपन्नाः। सत्वर मेवाहं तेषां सहायेन नूनं सिषात्से।

(ततः प्रविशति दौवारिकः)

**दौवारिकः** — (प्रविश्य नमस्कृत्य) महाराज तानाजी महोदयाः द्वारि तिष्ठन्ति।

**शिवः** — अनुपदं प्रावेशय।

**दौवारिकः** — यथाज्ञापयति प्रभुः। (इति गच्छति)

(ततः प्रविशति दीर्घश्मश्रुः महोन्नतः पीनवक्षः बलवान्, नूतन वस्त्रा-लङ्कृतः कुङ्कुमरेखाचित्रित ललाटतटः खड्गद्वितीयः तानाजी)

**तानाजी** — (प्रविश्य) जयोऽस्तुते शिवराय। (इति नमस्करोति) (जिजयां विलोक्य) नमस्ते मातः। (इति नमस्करोति)

**शिवः** — (पीठादवतीर्य) मित्रोत्तम कथं हठात् समागतोऽसि।

**तानाजी** — प्रभो भवतां पत्रं मां अत्राऽनयत्। भवन्तं द्रष्टुं अनुपदमेव समागतोऽस्मि।

**शिवः** — परिसमाप्त तनयविवाहः समागतोऽसि ?

**तानाजी** — प्रभो भवतां पत्रं तनयस्य विवाहं प्रलम्बयितुं दिदेश।

**शिवः** — ताना, सुतस्य विवाहः न कृतः किम् ?

**तानाजी** — नहि कृतः।

**शिवः** — किमत्र कारणम् ?

**तानाजी** — कोण्ढणगड विवाहानन्तरं रायबा विवाहः भविष्यति।

**शिवः** — ताना मम मातुः चिरकामना इयमस्ति। कोण्ढणगडः अस्मदीय हस्तगतः भवितव्यः इति। तदर्थं अहं भवदीय पुत्रस्य विवाहाय अनुपस्थितः अभवम्। मम अधुना कोण्ढणगडस्य कल्याणाय गन्तव्यं विद्यते। तदर्थं अहं स्वयं ससैन्यः गडं जेतुं जिगमिषामि।

**तानाजी** — एनं विषयं भवान् प्रथमतः नोक्तवान् महाराज।

**जिजया** — ताना, शिवोऽपि प्रथमत. न जानाति। दिवसद्वयात् प्रागेव मया इयं कामना प्रकटीकृता यदा तवपुत्रस्य विवाहपत्रं अस्मदीय हस्तगतम्।

**तानाजी** — गडमेनमुद्दिश्य पूर्वमेव मम मनसि विचारधारा समजनि। किन्तु अहं शिवरायाय नोक्तवान् यतः शिवप्रभुः कार्यान्तरे निमग्नः आसीत्।

**शिवः** — मित्रोत्तम त्वं जानासि, कदा कीदृशी भावना मे मनसि जायते इति।

**तानाजी** — शिवराय अधुना भवान् स्वतः गडं जेतुं यियतिषते। तत् मह्यं न रोचते। अहं स्वतः तं गडं विजित्य भवतः पादार्पितं करिष्ये।

**शिवः** — ताना, त्वं प्रथमतः कुमारस्य विवाहं कुरु। अनंतरं गडं जेतुं प्रयतस्व!

**तानाजी** — प्रभो अधुना विवाहस्य सुमुहूर्तः व्यतीतः। अन्यस्मिन् शुभसमये विवाहः भविता। अधुनाहं कोण्ढणगडस्य विवाहं कारयितुं गच्छेयम्। प्रथमतः कोण्ढणगडविवाहः अनंतरं कुमारस्य विवाहः।

**शिवः** — ताना, अहं स्वयं गत्वा साधयिष्यामि गडं अत्र ते सहायः मास्तु। त्वं कुमारविवाहं अत्र प्रथमतः कुरु। अहं तत्र गड विवाहं करिष्यामि।

**जिजया** — ताना ते स्वामिभक्तिः सूर्यरश्मिवत् परम पवित्रा। त्वं तनयविवाहं प्रथमतः विधाय अनन्तरं गडप्रस्थानं कुरु।

**तानाजी** — मातः, कुमार विवाहात् मे कोण्ढणगड विवाहः बलवत्तरः श्रेष्ठतरः प्रतिभाति। तस्मात् अहं कोण्ढणगड विवाहं परिसमाप्य कुमार-विवाहं करिष्ये। अस्मिन् कर्मणि भवती मां नियोजयतु इति देशभक्तस्य अपि च स्वामिभक्तस्य विज्ञप्तिरियं। (इति मुकुलित हस्तः जिजया पुरतः तिष्ठति)

**जिजया** — ताना त्वं शिवरायं अपृच्छस्व। सः भवतः प्रभुः।

**तानाजी** — शिवराय, देशे हिन्दुसाम्राज्य स्थापनार्थं इदं मे शरीर समिधं समरवैश्वानरे पातयितुं मे आज्ञां प्रयच्छतु भवान् इति मे चरमाभिलाषः। (इति नमस्करोति)

**शिवः** — (उत्थाय) मित्रोत्तम ते स्वामिभक्त्या अहं तुष्टोऽस्मि तथैव त्वमेव गत्वा विजयश्रिया समालिङ्गितः प्रत्यागच्छ। शिवास्ते पन्थानः सन्तु। (इति हस्तमुद्यम्य आशीषः ददाति)

**तानाजी** — (मातापुत्रौ नमस्कृत्य गच्छति)

**शिवः** — मातः, यदि एतादृश देशभक्ताः स्वामिभक्ताः देशे सर्वत्रस्युः, अचिरादेव विजयनगर हिन्दुसाम्राज्य प्रतिष्ठापकानां, हरिहर बुक्कराय विद्यारण्यादीनां, हिन्दु साम्राज्य रचनां, अहं सर्वत्र भारतवर्षे, मे जीवन सर्वव्यापिनीं फलमयीं विधाय, भारतवर्षं परधाटीभ्यः रक्षयित्वा, हिन्दु साम्राज्यं सत्यं स्थापयिष्यामि।

**जिजया** — तनय, सर्वथा अस्माभिः प्रयत्नः कर्तव्यः। बलीयसी केवलमीश्वरेच्छा।

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

(रायबा, शेलारमामा, सूर्याजी, तानाजी एकत्र उपविश्य संभाषन्ते)

**शेलारमामा** — अरे ताना किं सुखेन सन्ति शिवरायाः।

**तानाजी** — हां शिवरायाः जिजयामाता सर्वेऽपि सकुशलं सन्ति।

**सूर्याजी** — अधुना ते कस्मिन् कर्मणि निरताः।

**तानाजी** — वयं सर्वे जानीमहे। ते कोण्ढणकल्याणकरणे निमग्नाः इति।

**शेलारमामा** — राजा स्वयं कोण्ढणं जेतुं जिगमिषति।

**तानाजी** — स्वयं गन्तुं प्रयतन्ते। किन्तु अहं गत्वा तान् एवं अवोचं, अयि देव शिवराय भवतां अनुचराः योद्धारः बहवः सन्ति, कोण्ढणगड प्रस्थानं युष्माकं न योग्यं इति।

**सूर्याजी** — साधु समुदीरितं भवता।

**शेलारमामा** — तस्मात् वयं सर्वे गत्वा कोण्ढणं जित्वा महाराजाय उपायनमिव दास्यामः।

**तानाजी** — इदं उपायनं महाराजाय नहि मातृमूर्त्यै जिजयादेव्यै प्रदातव्यं विद्यते।

**सूर्याजी** — एतावत्पर्यन्तं आधुनिक भारत इतिहासे एतादृशः वीरः शिवाजी सदृशः न दृष्टः केनापि। अहो किं तस्य बुद्धिचातुर्यम्।

**शेलारमामा** — कदा एते कुत्र गच्छन्ति. किं कर्तुमिच्छन्ति सर्वज्ञः शिवः एव जानाति।

**तानाजी** — शिवरायः भारतराष्ट्र चिन्तना वेलायां निद्रां भोजनमपि संत्यजति। यदि ते निद्रिताः भवेयुः तर्हि स्वप्नेऽपि भारतमुद्दिश्य, हिन्दु राष्ट्रमुद्दिश्यैव चिन्ता प्रचलिष्यति इति मे वितर्कः।

**रायबा** — पितः यदि भवन्तः कोण्ढणं जेतुं गच्छन्ति तर्हि अहमपि भवद्भिः साकं आगमिष्यामि।

**तानाजी** — चिरंजीव, वयं सर्वे अस्मिन् कर्मणि शक्ताः, तव उपस्थितिः तत्र अनावश्यकी भाति मे।

**रायबा** — अस्मिन् संदर्भे ममापि यदि भागः स्यात् तर्हि अहमपि आत्मानं कृतकृत्यं मन्ये।

**तानाजी** — (अतीव संतुष्टः) तनय, भवदीय कामना अतीवानुरूपा भारतीयस्य। तनय त्वं विवाहार्थं नूतन वस्त्रधारणं विधाय वर्तसे अधुना अस्मिन् वेषे तत्रागमनं मे सम्यक् न प्रतिभाति। त्वं गृहे स्थित्वा शत्रुभ्यः स्त्रीगोब्राह्मण रक्षणां कुरु।

**सूर्याजी** — यदि सर्वोऽपि वीरः कोण्ढणं गच्छति तर्हि अत्र ग्रामरक्षकः कः भविष्यति। तस्मात् रायबा तव निश्चयात् त्वं विरम। त्वं अत्रैव तिष्ठ।

**शेलारमामा** — अस्मदीय महाप्रस्थानं कदा भविष्यति।

**तानाजी** — श्वः प्रभाते वयं सर्वे कोण्ढणगडस्य समीपे विद्यमान अरण्ये मिलिष्यामः। सर्वैरपि यानि यानि परिकराणि युद्धाय उपयुक्तानि भविष्यन्ति तानि सर्वाणि आनीतव्यानि विद्यन्ते। प्रथमतः तत्र दुर्गस्य स्थितिं ज्ञातुं यं कमपि वार्ताहरं प्रेषयन्तु।

**शेलारमामा** — सर्वं वयं संसिद्धं कुर्याम।

**सूर्याजी** — अहं सर्वव्यवस्थां करिष्यामि।

**तानाजी** — अयि भोः मित्रवर्याः, सर्वदा यूयं स्मरन्तु इमां भावनां या मया कथ्यते।

**शेलारमामा** — केयं भावना।

**तानाजी** — वयं एकाकिनः भूत्वा अस्मिन् धरातलें समागतवन्तः। पुनः एकाकिनः भूत्वा परलोकं गच्छेम। वयं सर्वे यदाकदापि मरिष्यामः। किन्तु देशः स्थिरः। विना च स्वार्थं अस्माभिः व्यवहर्तव्यः। वयं देशहिताय सर्वत्यागं कर्तुं संसिद्धमनस्काः भवेम। युद्धवेलायां एनां भावनां मा विस्मरन्तु इति इयं मे चरमाज्ञा भवति। श्वः पुनर्मिलनं भविष्यति। शुभं भूयात्।

(यवनिका पतति)

* * *

## षष्ठं दृश्यम्

(शिवाजी कोण्डदेवौ भाषयन्तौ स्तः)

**कोण्डदेवः** — शिवराय, ताना स्वकुमारस्य पाणिग्रहणाख्यं कर्म विसृज्य कोण्ढणगडसाधनाय गतः इति श्रुत्वा अहं पुलकित गात्रः अभवम्।

**शिवः** — देव, प्रथमतः अहं स्वयं गन्तुं उद्युक्तः अभवम्। किन्तु तेन प्रार्थितः अहं तं अस्मिन् कर्मणि नियोजितवानस्मि।

**कोण्डदेवः** — शिव ते मित्रं अतीव स्वामिभक्तः देशभक्तश्च।

**शिवः** — देव, अस्मदीय महाराष्ट्र देशे सर्वे नागरिकाः राष्ट्रभक्ताः तस्मादेवाहं विजयनगर महाराजानां हिन्दुसाम्राज्य स्थापकानां कामनां परिपूर्णतां प्रापयितुं प्रयतामि। इतः परं भाविभारतराष्ट्रं महाराष्ट्रात् स्वातन्त्र्य स्फूर्ति लभतु इति सर्वेशं प्रार्थयामि।

**कोण्डदेवः** — श्रीविद्यारण्यस्वामिनां हरिहरबुक्करायादीनां हिन्दु साम्राज्य वैभव स्थापना भावना अविछिन्ना अखण्डिता भूत्वा सततं भारते विराजतु इति अहं भावयामि।

**शिवः** — देव, अहं सत्यं पूर्वजानां भावनां परिपूर्णतां प्रापयितुं दिवा रात्रं प्रयतिष्ये।

**कोण्डदेवः** — शिव, त्वं सत्यं तानाद्वितीयः ते बौद्धिकप्रतिभया त्वं असाध्यं साधयिष्यसि इति मे मतिः।

**शिवः** — महतां आशीर्वचनबलेन सर्वं साध्यं भवति गुरुदेव।

**कोण्डदेवः** — शिव, ताना कदा गमिष्यति कोण्ढणम्।

**शिवः** — अद्य सायं गमिष्यति।

**कोण्डदेवः** — कैः साकम्।

**शिवः** — शेलारमामा, सूर्याजी, मावळसहितः समिष्यति।

**कोण्डदेवः** — शिव कोण्ढणगड विजयानन्तरं वार्ता प्रेषितुं व्यवस्था परिकल्पनीया इति कथितं किम्?

**शिवः** — स एव अवोचत् यत् कोण्ढणगड विजयानन्तरं अनेक फिरङ्गयः वाद्यन्ते भगवाध्वजाविष्करणं क्रियते, अनन्तरं पर्वते वीतिहोत्रः प्रज्वाल्यते। सा एव अस्मदीय विजयस्य निस्तन्त्री वार्ता इति उक्त्वा गतः।

कोण्डदेवः — शिव, साधूक्तं तेन। वयं द्रक्ष्यामः कोण्ढण गडं पुनः अस्मदीय राज्ये इति महानानन्दः भवति मे।

शिवः — देव वयं द्रक्ष्यामः सर्वं सुखान्तम्।

(ततः प्रविशति दौवारिकः)

दौवारिकः — (प्रविश्य) नमो नमः कोण्डदेवाय, शिवरायाय। (इति नमस्करोति)

शिवः — किं रे को विशेषः।

दौवारिकः — देव शिवराय, जिजयामाताः भवन्तं आह्वयति।

शिवः — आगगच्छाम्यहं त्वं गच्छ।

दौवारिकः — यथाज्ञापयति देवः। (इति गच्छति)

शिवः — देव कतिपय दिवसानन्तरं वयं कोण्ढण विजयवार्ता श्रोष्यामः।

कोण्डदेवः — शिव गच्छामः एहि। (इति गच्छतः)

(यवनिका पतति)

* * *

## सप्तमं दृश्यम्

(तानाजी, शेलारमामा, सूर्याजी इत्यादिवीरैः परिवेष्ठितः कोण्ढण गड गमनोन्मुखः चर्चा करोति)

तानाजी — अयि बान्धवाः अद्य सायं अस्माभिः सर्वैरपि सायुधैः कोण्ढणगडं प्रति गन्तव्यं विद्यते।

शेलारमामा — पर्वतारोहणे उपयुक्त परिकरान् गृहीत्वा गन्तव्यं वर्तते।

सूर्याजी — अहं सुदीर्घ रज्जुं एकं आनायिष्यामि।

तान्नाजी — नकुल कुलोत्पन्नं घोरपडिं एकं अहं आनयेयम्। तस्य कृते मधु भाण्डमपि एकं आनयिष्यामि। सर्वैणापि खड्गद्वयेन भवितव्यम्। तत्र नररूप राक्षसः अस्ति। तस्य हनन कर्मणि उपयुक्तानि आयुधानि गृहीत्वा गन्तव्यमस्ति।

सूर्याजी — भगवाध्वजः गृहीतव्यः वर्तते।

तानाजी — अयि बान्धवाः अयं गडः अत्यन्तदुर्भेद्यः इति जनाः कथयन्ति। कथं तत्र गन्तव्यं इति प्रथमः प्रश्नः।

सूर्याजी — तत्र गडसान्निध्ये बहवः मत्स्यग्राहकाः सागरीयाः सन्ति।

शेलारमामा — प्रथमतः तैः साकं मैत्री कर्तव्या।

तानाजी — तेभ्यः अतीव रोचते ताम्बूलपत्रं सुधाचूर्णं मादकता औषधं च। ततः यदि तेभ्यः एतत् वस्तु जालं प्रयच्छेम सर्वं सुकरं भवत्येव।

सूर्याजी — ताम्बूल पत्र बन्धनानि सुधाचूर्णं अपिच मादकता द्रव्यं औषधं च जालं अहं आनयेयम्।

शेलारमामा — ताना, अहं इतःपूर्वं वार्ताहरमेकं वृत्तान्त समाहरणाय प्राहिणम्। सः अधुना आगमिष्यति तदुक्तिमनुसृत्य वयं व्यवहारिष्यामः।

तानाजी — तत्र कियत् सैन्यं विद्यते वयं न जानीमहे।

सूर्याजी — वयं बह्वल्पसैन्य समेताः :

(ततः प्रविशति भटः)

भटः — (प्रविश्य) वार्ताहरः समायातः द्वारि तिष्ठति।

शेलारमामा — अन्तः प्रेषय तम्।

भटः — तथैव। (इति गच्छति)

(ततः प्रविशति वार्ताहरः)

शेलारमामा — अस्ति कोऽपि विशेषः? कथय वार्ताम्।

वार्ताहरः — सर्वमपि विदितमासीत् देव।

तानाजी — अरे गडाधिपः कः?

वार्ताहरः — उदयभानुः।

तानाजी — सः कीदृशः इति तत्रत्यानां भावना।

वार्ताहरः — सः सिंहबलः।

तानाजी — तस्मिन् पर्वते आहत्य कियत् सैन्यं विद्यते दुर्गरक्षणे।

वार्ताहरः — सहस्राऽधिकं सैन्यं विद्यते इति मत्स्यग्राहकैः कथितम्।

तानाजी — गडस्य कस्मात् प्रदेशात् अन्तः गन्तुं सुलभः भवति।

वार्ताहरः — पर्वतानुत्तरेण गडप्रवेशः भवितुं सुकरमिति तैः प्रोक्तम्।

तानाजी — तेषां सकाशे के के परिकराः विद्यन्ते।

वार्ताहरः — तेषां सान्निध्ये मत्तगजेन्द्रः एकः विद्यते। सः शत्रूदर्शनेन उद्धतः भूत्वा शत्रून् शुण्डाग्रेण गृहीत्वा आकाशे उत्क्षिपतीति प्रोक्तम्।

तानाजी — तत्र बालाः स्त्रियः विद्यन्ते किम्।

वार्ताहरः — तत्र बालाः विद्यन्ते। तत्र बह्व्यः स्त्रियः वर्तन्ते। ताः सर्वाः तस्य नररूप राक्षसस्य भार्याः। सः सर्वदा मद्येन उन्मत्तः भवति।

तानाजी — गडे सर्वत्र रक्षणा विद्यते किम्?

वार्ताहरः — दक्षिणतः कापि रक्षणा न कदापि भवतीति तैरुक्तम्।

तानाजी — कुतः?

वार्ताहरः — गडस्य दक्षिणभागः अत्यन्तोन्नतः। तत्र कोऽपि प्रवेष्टुं शक्तः न भवति यतः सर्वमपि प्रस्थरैः निम्नोन्नतं भाति तत्र। पर्वतस्य पश्चात् गंभीरा सानुः विद्यते। यः कोऽपि तत्र पर्वतात् भ्रष्टः भवति सः अनुपदमेव तस्मात् सानोः पातालं प्रवेक्ष्यति।

**शेलारमामा** —त्वया प्रथमतः कथं मत्स्यग्राहकैः साकं संबन्धः कृतः।

**वार्ताहरः** — अहं एकः कृषीवलः इति उक्त्वा तेभ्यः पूगीफलानि, नागवल्लीदलानि मादकता औषधं वितीर्य तैस्साकं विश्वासपूर्वकं सख्यं अकरवम् ।

**सूर्याजी** — वयं सर्वे मिलित्वा रात्रौ पर्वतसमीपं गच्छावः। तस्मात् त्वं अस्माकं मार्गदर्शको भव ।

**तानाजी** — सर्वैरपि निश्शब्द गत्या गन्तव्यम् । (इति सर्वे शनैः शनै. गच्छन्ति)

नि ति

* * *

# अष्टमं दृश्यम्

(नेपथ्ये फिरङ्गीनां शब्दाः जयमङ्गल वाद्यविशेषाः भवन्ति पर्वते वन्हिश्च प्रज्वलति)

(ततः प्रविशतः जिजया शिवरायौ)

**शिवः**—मातः किं श्रुणोसि वाद्यविशेषाणां ध्वनीः। इतः पश्य कोण्ढण गडे वन्हिः प्रज्वलति ।

**जिजया** — हां पश्यामि पर्वतः वन्हिमान् जातः ।

**शिवः** — मातः किं जानासि कोऽयमग्निः ?

**जिजया** — दावाग्निः इति मे मतिः ।

**शिवः** — नहि मातः अयं वन्हिः जयसूचकः ।

**जिजया** — अहो अयं जयसूचकः वन्हिः?

शिवः — हां कोढण्णगडः अस्मदीयहस्तगतः अस्ति। तदर्थं अयं जय सूचकः वन्हिः।

जिजया — विदितं कुमार।

शिवः — ताना अनेन प्रयोगेन निस्तन्त्री वार्ता प्रेषयामास।

जिजया — अद्य मे महानानन्दः।

शिवः — मातः श्रुणु इमाः फिरङ्गीं ध्वनीः। ताना शत्रून् विजित्य भगवाध्वजारोहणं कृतवान्।

जिजया — शिव, मे कामना परिपूर्णा अद्य प्रभृति कोण्ढणगडः शिव-रायराज्ये विराजते। अहो निरवधिः मे आनन्दस्य।

शिवः — मातः अहं कोण्ढणगडं गत्वा वीरसत्कारं करिष्ये।

जिजया — सत्वरं गच्छ वीरसत्कारं कुरुष्व।

शिवः — (नमस्कृत्य गच्छति)

(यवनिका पतति)

* * *

## नवमं दृश्यम्

(भीकरारण्ये कोण्ढणगडसमीपे सूर्याजी शेलारमामा प्रभृतयः वर्तन्ते ततः प्रविशति शिवाजी)

सूर्याजी — शिवमहाराजाय जयोऽस्तु। (सर्वे अनुचराः शिवाजीमहा-राजाय जयोऽस्तु इति ब्रुवन्ति)

शेलारमामा — प्रभो कोण्डणगडः अस्मदीयहस्तगतः। वयं अल्प सैन्येनकेवलं शत्रुं जितवन्तः।

**शिवः** — (शृण्वन्) शान्तमयेन गत्या इतस्ततः चलन् सर्वासुदिक्षु कमपि शोधयति।

**सूर्याजी** — सर्वेऽपि निहताः युद्धे।

**शेलारमामा** — ताना गतदक्षिण हस्तः, वामहस्तेन खड्गं गृहीत्वा विद्युदिव आकाशे स्फुरन् प्रयुध्य शत्रूं उदयभानूं निहतवान्।

**शिवः — शनैः शनैः चलन्। (ताना शवसमीपं गत्वा आपादमस्तकं तं विलोक्य करुणया गिरा)**

अहो ताना, मे मित्रम्। मे अनुचर। त्वं स्वामिभक्तोऽसि। राजाज्ञा धारकोऽसि। देश भक्तोऽसि। निस्वार्थी असि। स्वगृहे वैवाहिक मङ्गलकार्यं विसृज्य देश वैवाहिक मङ्गलकार्यं कर्तुं समागतोऽसि। त्वं मे दक्षिणहस्तः। मे हस्तात् स्रस्त वज्रायुधोऽसि। त्वं मे हृदयम्। मे पञ्चप्राणसमवायः। स्वल्प सैन्यैः अनन्तसैन्यपरीतं कोण्ढणगडं अल्प सैन्येन जितोऽसि। त्वं पुरुष सिंहोऽसि। त्वं कालातीतोऽसि। ते जीवितं सार्थकं बभूव। अयि अनुचराः, कोण्ढणगडः हस्तमागतः किन्तु सिंह पञ्चत्वं गतः। अद्य प्रभृति अस्य गडस्य नाम इतिहासे सिंहगडः भविष्यति।

(आश्चर्य व्यथाभ्यां) ताना अयं ते आत्मा देशरूप परब्रह्मणे समर्पितः। सोऽयमात्मा ब्रह्मानन्दमनुभवति। राष्ट्राय समर्पितोऽयमात्मा पुनर्जन्म राहित्यं भजते। अयं ते आत्मा सायुज्यं प्राप्तः। (इति अधोमुखः भूत्वा वीरासने उपविश्य हस्तं मुखोपरि विन्यस्य अश्रु बिन्दून् त्यजति। (सर्वोऽपि हस्तौ निबध्य विषण्णवदनः आस्ते)

(नेपथ्ये)

**"न जायते, म्रियते वा कदाचित्। नायं भूत्वा भविता वा न भूयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो। न हन्यते हन्यमाने शरीरे।"**

(यवनिका पतति)

# ॥ परिवर्तनम् ॥

**गीतां बोधितवन्तं। श्रीकृष्णं मानुष विग्रहवन्तम्।**
**जनता हृदयान्तस्थं। नौमि विश्वरूपिणं देवम्॥**

( नान्द्यन्ते )

( सुस्मितावासन्त्यौ उपविश्य हसन्त्यौ संभाषेते अत्रान्तरे हठात् वार्तापत्रिकां पठन्ती सुस्मिता वासन्तीं कथयति )

**सुस्मिता** — सखि वासन्ति, श्रुणु अद्य सप्तघण्टावादनसमये परिवर्तनं नाम नाटकं गीर्वाणनाटक मण्डलीयाः संस्कृतभाषायां प्रदर्शयन्ति। प्रवेश शुल्कः रूप्यकद्वयम्।

**वासन्ती** — परिवर्तनं नाम नाटकं गीर्वाण भाषायाम्?

**सुस्मिता** — परिवर्तनं, इति श्रवणेन जीविते परिवर्तितस्य महापुरुषस्य जीवित सम्बधीयमेतत् नाटकं इति द्योतते।

**वासन्ती** — कविः कः?

**सुस्मिता** — कविः गीर्वाणान्ध्र भाषाप्रवीणः पन्डित परीक्षित् शर्मा।

**वासन्ती** — हसे जानामि तम्।

**सुस्मिता** — कथं जानासि तम्।

**वासन्ती** — सः कविः एकदा अस्मदीय महाविद्यालये स्वरचित संस्कृत गीतानां गायनमकरोत्। तस्य गीर्वाणगेयचक्रवर्ती इति नामान्तरं विद्यते।

**सुस्मिता** — अनेन कानि कानि लिखितानि।

**वासन्ती** — अनेन ललित गीतालहरी इति गेयकाव्यम्, विंशति सर्गात्मकं ( अखिल भारतीय कालिदास पुरस्कारेण सन्मानितं ) यशोधरामहाकाव्यम्, अक्षय

गीत रामायणम्, सप्तविंशतिनाटकपरिमितं परीक्षिन्नाटकचक्रं इत्यादीनि काव्यानि विलिखितानि।

**सुस्मिता** — अरे आश्चर्यं संस्कृतभाषायां बहूनि काव्यानि लिखितानि अनेन महाकविना।

**वासन्ती** — अपि च सन्ति बहूनि।

**सुस्मिता** —- हां, कानि कानि सन्ति कथय।

**वासन्ती** — प्रतापराणायनमहाकाव्यम्, ते हि नो दिवसा गताः इति गद्यकाव्यम्, सौन्दर्यमीमांसा इति अलङ्कार प्रबन्धं मित्यनानि बहूनि सन्ति।

**सुस्मिता** — अस्मिन् विंशतितमे शताब्दे अयं महाकविषु एकः विराजते।

**वासन्ती** — सखि, सुस्मिते एकदा तेनोक्तं, एतत् परिवर्तनं नाम नाटकं भक्त पुरन्दरदासमुद्दिश्य लिखितमिति।

**सुस्मिता** — कोयं पुरंदरदासः?

**वासन्ती** — अयं कर्णाटकसंगीतशास्त्र साम्प्रदाये प्रथमः कीर्तनकारः। अनेन लक्षाधिक कर्णाटकभाषागीतानि रचितानि।

**सुस्मिता** — अयं प्रथमः कीर्तनकारः इत्युक्तं भवत्या अन्ये बहवः विद्यन्ते किम्?

**वासन्ती** — बहवः सन्ति, किन्तु कर्णाटक संगीत शास्त्रसाम्प्रदाये ब्रह्मा-विष्णु महेश्वरत्रयमिव, त्यागराज, दीक्षित, श्यामाशास्त्रित्रयं कर्णाटकशास्त्रीयसंगीतं सागरोपमं विधाय लोकव्यापकं चकार।

**सुस्मिता** — कस्यां भाषायां कर्णाटक शास्त्रसंगीतं विलिखितम्।

**वासन्ती** – वाग्गेयकारः श्रीत्यागराजः आन्ध्रभाषायां, मुत्तुस्वामि दीक्षितः गुरुगुह इति नामान्तरेण संस्कृतभाषायां, श्यामाशास्त्रीणः आन्ध्रभाषायां अन्नमाचार्यैः आंन्ध्रभाषायां असंख्याकानि गीतानि लिलिखुः। सर्वेषु कर्णाटकसाम्प्रदाय संगीतकारेषु वाग्गेयकारः श्रीत्यागराजः भानुमण्डलवत् द्योतते कर्णाटकसंगीतशास्त्रे।

**सुस्मिता** — अनेन तव भाषणेन मम ज्ञायते यत् आन्ध्रभाषायां कर्णाटक संगीतशास्त्रं अधिकांशेन विलिखितमिति।

**वासन्ती** — हां अशीत्यंश परिमितं कर्णाटक संगीतशास्त्रं आन्ध्रभाषायामेव विलिखितम्। आन्ध्रेतरैरपि आन्ध्र भाषायामेव कर्णाटक संगीतशास्त्रीयानि असंख्याकानि गीतानि विलिखितानि। तस्मात् कर्णाटक संगीतशास्त्रं आन्ध्रभाषायां निक्षिप्तं आरक्षितं इति कथने न कस्यापि विरोधः भवति, यतः इदं भाषणं सत्य दूरं न भवति।

**सुस्मिता** —- किमर्थं आन्ध्रेतराः संगीतकानि आन्ध्रभाषायां विलिखन्ति।

**वासन्ती** — आन्ध्रभाषा संगीतभाषा इति सर्वेषां कलाराधकानां गायकानां च अभिप्रायः तस्मात् ते आन्ध्रभाषायां विलिखन्ति।

**सुस्मिता** — कर्णाटक संगीतस्य अर्थः कः ?

**वासन्ती** — इदं संगीतं एकवार श्रवणमात्रेणैव सर्वदा कर्णे अटति इति हेतोः कर्णाटक संगीतमिति ममाभिप्रायः, किन्तु न कर्णाटक देशीयं इति।

**सुस्मिता** — अधुना मया सविस्तरं ज्ञातम्। पुरन्दरदासमुद्दिश्य कृतं परिवर्तनं नाम नाटकं द्रष्टुं अहं अत्यन्त उत्सुका अस्मि।

**वासन्ती** — तन्नाटकं द्रष्टुं आवां गच्छावः।

**सुस्मिता** — त्वरस्व।

**वासन्ती** — (प्रसाधन मञ्जूषां गृहीत्वा) एहि गच्छावः। (इति गच्छतः)

(मञ्चे स्वपन्ती आस्ते छाया आपादमस्तकं वस्त्राच्छादनं विधाय, ततः प्रविशति तस्याः पतिः प्रभाकरः)

**प्रभाकरः** — (आत्मगतम्) बत अद्य बहुपरिश्रान्तोऽस्मि प्रातः प्रभृति अहिण्डमानः। ह्यः प्रभृति न किमपि खादितं मया। बुभुक्षा मां बाधते। (पत्न्याः समीपं गत्वा) हञ्जे अधुना अहं बहु बुभुक्षितोऽस्मि यत् किञ्चित् खाद्यं देहि। (इति नागदन्ते उत्तरीयं निक्षिप्य आसने उपविशति)

**छाया** — (मञ्चे इतस्ततः लुठन्ती) अद्य गृहे पाकः न कृतः। न किमपि विद्यते भोक्तुम्।

**प्रभाकरः** — किमर्थं न कृतः।

**छाया**— गृहे गोधूम चूर्णं न विद्यते, तण्डुलाः न सन्ति। न किमपि शाकादिकं विद्यते, किं कुर्या कथं कुर्याम्? (इति इतस्ततः खट्वायां लुठन्ती वदति)

**प्रभाकरः** — हञ्जे, प्रातः रूप्यपञ्चकं दत्वा अगच्छम् खलु, तत् किं कृतम्?

**छाया** — कुटुम्बे अनेकानि छिद्राणि सन्ति। प्रवाहरूपेण यदि लक्ष्मीः समागच्छति तर्हि छिद्रपूरणमेव भविष्यति। पञ्चरूप्यकेन किं भविष्यति? कथं भविष्यति।

**प्रभाकरः** — तत् रूप्यपञ्चकं किं कृतम्?

**छाया** — दुग्ध गोपालकाय दशरूप्यकाणि दातव्यानि इति भवान् जानाति।

**प्रभाकरः** — तस्मात्।

**छाया** — अद्य प्रातः सः आगत्य तस्य पत्नी शीतज्वरेण बाधते इति तस्मात् दश रूप्यकाणि वैद्यकीय उपचाराय अपेक्ष्यन्ते इति मे कण्ठोपरि उपविष्टः आसीत्।

**प्रभाकरः** — ततः किं कृतं भवत्या?

**छाया** — ततः पञ्चरूप्यकं अयच्छं तस्मै।

**प्रभाकरः** -- किमर्थं रूप्यपञ्चकं दत्तम्? हस्ते अधिकं न विद्यते इति ज्ञात्वापि त्वं दत्तवती असि। रूप्यकद्वयं उत रूप्यकत्रयं वा दत्वा अनन्तरमागच्छेति वक्तव्यं, त्वं मूर्खा असि।

**छाया** — नाहं जाने अस्मत् सकाशे केवलं पञ्च रूप्यकं विद्यते इति। भवतः समीपे अधिकं विद्यते इति मत्वा एवमकरवम्। मया अनालोच्य कर्म कृतम्। मया प्रमादः कृतः क्षमस्व।

**प्रभाकरः** — गतं गतमेव। विस्मर। त्वं मा विचारय। न किमपि विद्यते किं गृहे पातुं उत खातुम्।

**छाया** — किञ्चित् आम्लतक्रं विद्यते। तस्मिन्तक्रे लवणं उत शर्करां वा

मिलाप्य पिबतु। किञ्चित्कालं विश्रान्तिमनुभूय भवदीय मित्रेभ्यः किञ्चित् धनं ऋणमानीय विपण्यां मुद्गदाळीं, तण्डुलान्, शाकाय वार्ताकं, दार्विकान्, उर्वारुकान्, कारवेल्लान्, पटोलीन्, चुक्रं, नवनीतं इत्यादिकं आनयतु पाकं करिष्यामि।

**प्रभाकरः** — न कोऽपि मे मित्रं दातुं समर्थः भवति, यतः अयं मासस्य अन्तिमसप्ताहः।

**छाया** — तर्हि मे मङ्गलसूत्रं गृहीत्वा पुरंदरस्य विक्रयस्थाने दत्वा प्रत्याम्नायं रूप्यकाणि गृहणातु अनन्तरं शाकादिकं आनयतु भवान्।

**प्रभाकरः** — हञ्जे किं त्वं उन्मत्तासि? नोचेत् ते बुद्धिनाशः संजातः।

**छाया** — कियत्कालं एवं संसारं करिष्यामि। कियत्कालं रूप्यकद्वयेन रूप्यक त्रयेण कालयापनं भविष्यति। यदि जीवितं एवं भवेत् तर्हि मरणमेव योग्यं भवति मे। यदि मङ्गलसूत्रदानेन प्रत्याम्नायं द्विशतपरिमितं उत त्रिशतपरिमितं धनं लभेत तर्हि एक सप्ताहपर्यन्तं कालयापनं भविष्यति अशनेन। मम शिरोबाधा जायते अस्मिन् निर्धनकुटुम्ब जीविते।

**प्रभाकरः** — तथा यदि स्यात् देहि तव कर्णाभरणे। ते कर्णाभरणे निक्षिप्य तस्य सकाशे रूप्यकाणि आनयेयम्। मङ्गलसूत्रन्यासेन कुटुम्बस्य अनिष्टः भवति।

**छाया** — कियत् कालं अयं संसारः चलिष्यति एवं। दिनदिनमरणं शरदां शतायुष्यं भवति जीवितस्य।

**प्रभाकरः** — आवां धन्यौ यतः सन्तति र्नास्ति अस्मिन् दारिद्र्ये। प्रातः सायं च यत्किमपि भुङ्क्त्वा जीवितं यापयावः। प्रपञ्चे भोजनविहीनाः मानवाः सन्ति। यदि तुलना क्रियते तर्हि तेभ्यः जीवनेभ्यः अस्मदीय जीवनं सुखतरं भवति।

**छाया** — एवं विचारयतु भवान्।

**प्रभाकरः** — किमिति।

**छाया** —बहवः सन्ति लोके अस्मदपेक्ष्या,सकल संपच्चय वस्तुजालैः,विलासैः, राजभोगैः विराजमानाः इति, तैः तुलना कर्तव्या इति।

**प्रभाकरः** — हां मावद मुखं पिधेहि। देहि ते कर्णाभरणे। अहं अधुनैव पुरन्दरसमीपं गत्वा कर्णाभरणे तस्मै प्रदाय धनमानयेयम्।

**छाया** — गृहाण। ( इति उपविश्य कर्णाभरणे कर्णाभ्यां अपास्य प्रयच्छति )

**प्रभाकरः** — ( गृहीत्वा ) अद्याहं किञ्चित् विलम्ब्य समागच्छेयम् गृहम्।

**छाया** — कथं विलम्बः भविष्यति।

**प्रभाकरः** — पुरन्दरात् धनं गृहीत्वा विपणीं गत्वा शाकपाकाय किमपि क्रीत्वा आनयिष्यामि। तस्मात् किञ्चित् विलम्बः भविष्यतीति कथयामि।

**छाया** — सत्वरं आगन्तुं प्रयतस्व।

**प्रभाकर** — तथैव। ( इति हस्ते शाक सञ्चीं गृहीत्वा नागदन्तात् उत्तरीयं गृहीत्वा कण्ठं परितः निक्षिप्य गच्छति )

**छाया** — ( उत्थाय अन्तः गच्छति )

( यवनिका पतति )

* * *

## द्वितीयं दृश्यम्

( पुरन्दरस्य आपणं। तस्मिन् आपणे सः रक्तोष्णीषं धृत्वा ललाटे दार्षिका रूप गोपीचन्दनोर्ध्वरेखालङ्कृतः तस्याः मध्ये अक्षतबिन्दुं समलंकृत्य वर्तते। सः लघुतुला समक्षं एकया पेटिकया सहितः उपविष्टः अस्ति। सः सुलोचन धारकः श्रेष्ठि वेषे उपविष्टः। सः वस्त्रखण्डेन रत्नादीन् उल्लीढयन् इतस्ततः पश्यन् आस्ते )

( तत, प्रविशति प्रभाकरः )

**प्रभाकरः** — नमस्ते श्रेष्ठिन्। किं उपचीयते ते व्यापारः।

**पुरन्दरः** - व्यापारः उपचीयते। किन्तु अद्य न कोऽपि ग्राहकः समागतः। अद्य प्रातः उत्थायकृष्ण मार्जारं अपश्यम्। अद्यां किं भविष्यति वा नाहं जाने। अस्मात् स्थानात् एकमङ्गुलमपि न चलितोऽस्मि। अहं अत्रैवोपविष्टोऽस्मि।

**प्रभाकरः** — (विहस्य) न चलितोऽस्मि इत्यनेन ज्ञायते वाहिनी रूपेण ग्राहकाः समागताः इति।

**पुरन्दरः** — (अट्टहासं कृत्वा) तथा यदि स्यात् मे आशाः आशयाश्च फलिष्यन्ति।

**प्रभाकरः** — पुरन्दर अहमागऽतोऽस्मि भवतां समीपं रूप्यकाणि ग्रहीतुम्।

**पुरन्दरः** — मम समीपे रूप्यकाणि कुत्र सन्ति। प्रातः प्रभृति न कोऽपि ग्राहकः समागतः। कथं मम समीपे रूप्यकाणां भावः। त्वं किं चिन्तयसि मत्सकाशे रूप्यकाणां वृक्षः अस्तीति।

**प्रभाकरः** — रूप्यकाणां वृक्षः नास्ति। किन्तु रूप्यकाणां खनिः विद्यते।

**पुरन्दरः** — मम समीपे रूप्यकाणां खनिः, अहो तावदैश्वर्यं मम कुत्र विद्यते।

**प्रभाकरः** — इतः पश्यतु भवान्। भवान् रूप्यकाणां दानं कुरु इति नाहं कथयामि। अहं ददामि कर्णाभरणे। (इति हस्तभस्त्र्याः पत्रबन्धनं बहिष्कृत्य तस्मै ददाति)

**पुरन्दरः** — (ते कर्णभूषणे गृहीत्वा भ्रूलतानर्तनं कारयन्) अहो एते श्यामिकयापूर्ण कर्णाभरणे। (इति निकषोपले उल्लीढति) सुतरां एते अन्यलोह मिश्रिते।

**प्रभाकरः** — किमर्थमेव वदसि पुरन्दर। मम विवाह समये एते मे श्वशुरेण प्रदत्ते। कथं एते श्यामिकयापूर्णे भवतः।

**पुरन्दरः** — अहं वस्तुस्थितिं कथयामि तत् सत्यम्।

**प्रभाकरः** — भवतु नाम कियत् धनं, एते न्यासं विधाय दास्यसि कथय।

**पुरन्दरः** — केवल शतरूप्यकाणि दीयन्ते।

**प्रभाकरः** — केवलं शत रूप्यकाणि। एते त्रिशत रूप्यक मूल्ये योग्ये भवतः। त्रिशत रूप्यकाणि प्रयच्छ। एक सप्ताहानन्तरं प्रत्यागत्य सर्वमपि धनं दत्वा पुनः कर्णा भरणे ग्रहिष्यामि।

**पुरन्दरः** — अयि ग्राहक अद्य न कोऽपि ग्राहकः समागतः। अद्य न किमपि कृतं, उत संपादितं मया। त्वं मां जानासि यदहं सज्जनः इति। अहं त्वां जानामि। तस्मात् स्नेहाद्वा सौहृदाद्वा अहं तुभ्यं पञ्चविंशत्यधिक शतरूप्यकाणि दास्यामि गृहाण।

**प्रभाकरः** — नहि पुरन्दर तथा नहि अशीत्युत्तर शतरूप्यकाणि देहि।

**पुरन्दरः** — एते योग्ये नहि, तावत् धनं दातुं। त्वं गृहीत्वा गच्छ। ( इति वस्तु तस्मै दित्सति )

**प्रभाकरः** — पुरन्दर, सार्धशत रूप्यकाणि देहि भोः। अधुना एतत् धनेन बृहत्तर कार्यं कर्तव्यमस्ति तस्मात् अहं भवन्तं प्रार्थयामि।

**पुरन्दरः** — अद्य न कोऽपि ग्राहकः समागतः। समक्षं आगतां लक्ष्मीं प्रेषितुं मे बुद्धिः न भवति। ततः सार्धशत रूप्यकाणि ददामि। ( इति कर्णाभरणे पेटिकायां निक्षिप्य सार्धशत रूप्यकाणि प्रयच्छति )

**प्रभाकरः** — ( गृहीत्वा विकसित वदनः ) नमस्ते श्रेष्ठिन्। ( इति नमस्कृत्य जिगमिषति।

**पुरन्दरः** — ग्राहक, अहमपि सन्तुष्टोऽस्मि, त्वमपि सन्तुष्टोऽसि। " सन्तोष एव पुरुषस्य परं निदानम्।

( यवनिका पतति )

* * *

# तृतीयं दृश्यम्

( पुरन्दरः तस्य पत्न्या भाषमाणः आस्ते )

**पुरन्दरः** — हञ्जे अद्य अत्युत्तम कर्णाभरणे मम आपणे निक्षिप्य एकः ग्राहकः मत्सकाशात् सार्धशत रूप्यकाणि गृहीत्वा निर्जगाम। त्वं पश्य एते कर्णाभरणे ( इति तस्यै दर्शयति )

**रमा** — (तूलशकलैः दशाः कुर्वन्ती आस्ते, सा ते कर्णाभरणे विलोक्य) अत्यन्त सुन्दरे कर्णाभरणे। (इत्याश्चर्यं व्यक्ती करोति)

**पुरन्दरः** — त्वं एते कर्णाभरणे उपयुङ्क्ष्व, यावत्पर्यन्तं सः ग्राहकः रूप्यकाणि प्रदाय ग्रहिष्यति।

**रमा** — भोः परेषां वस्तु उपयोगेन मे आनन्दः न भवति। सा नारी कुटुम्बे सौख्यहीना, जीवितुं पित्रा दत्तं वस्तुचयं न्यासीकृत्य तत् धनेन कालं यापयति। तस्याः कर्णाभरणे अहं धृत्वा आनन्देन कथं नर्तिष्यामि।

**पुरन्दरः** —अस्मिन् विषये तव मास्तु दयार्द्रभावः। यथा कथंचित् जीवनमेव योग्यं जगति। मम सिद्धान्तस्तु ऋणं कृत्वा घृतं पिबेत्। मम नास्ति कापि दया।

**रमा** — ब्राह्मणानां विज्ञानार्जने श्रद्धा भवितव्या। व्यापारे वृद्धिव्यापारे तेषां बुद्धिः न प्रसारणीया इति परम्परा खलु। त्वं कथं परेषां वस्तुषु दयाविहीनः क्रौर्यतां दर्शयसि।

**पुरन्दरः** — किं त्वं मे वेदान्तं कथयसि। अहं एवं करोमि तस्मात् त्वं गृहे सुखी वससि। तत् त्वं मा विस्मर।

**रमा** — ब्राह्मणानां व्यापारवृत्तिः न योग्या। यदि ब्राह्मणः व्यापारं करोति सः व्यापारी एव न तु ब्राह्मणः। ब्रह्मज्ञानरतः ब्राह्मणः भवति। धिक् ते ब्राह्मणत्वम्।

**पुरन्दरः** — न कापि न्यूनता मम ब्राह्मणत्वस्य। अहं प्रतिदिनं पूजां करोमि आस्तिक्यबुद्ध्या। किन्तु जीवनाय अहं इमं व्यापारं करोमि।

**रमा** — व्यापारः ब्राह्मणस्य लक्षणं नहि। अत्र अस्मिन् व्यापारे स्वार्थता प्रलोभताच विद्येते। किमर्थं ते जीवने अत्यन्त व्यामोहः। तव जीवनाय तव कुटुम्बाय अन्यान् निर्धनान् सहमानवान् वञ्चयित्वा जीवन यापने मे स्वारस्यं न विद्यते।

**पुरन्दरः** — त्वं किमपि भण, यथा तुभ्यं रोचते। मम जीवने परिवर्तनं न भविष्यति। अहं व्यापारी ब्राह्मणः।

**रमा** — यदि त्वं व्यापारी ब्राह्मणः तर्हि अब्राह्मण एव। त्वयि ब्राह्मणत्वं न विद्यते। त्वं विद्यया जीवनं कुरु, विद्यादानं कुरु।

**पुरन्दरः** — ब्राह्मणः कः स्पष्टं कथय।

**रमा** — ब्राह्मणः जगति विद्यमानोऽपि जगति सम्बन्धयुतोऽपि संबन्धहीनः इव प्रवर्तितव्यः पद्मपत्रस्थितं वारिवत्। सः सर्वदा अधीति बोधाचरणप्रचारणैः वाणीं सर्वव्यापिनीं विधास्यमानः परब्रह्मणि लग्नमानसः यदृच्छालाभसंतुष्टः कालं यापयितव्यः, नत्वन्यथा।

**पुरन्दरः**—त्वं न जानासि लोकवर्तनं। न कामपि बोधां त्वं कुरु। अहं जानामि किं कर्तव्यमिति।

**रमा** — सर्व वेत्तारः पुरुषाः एव न तु स्त्रियः। भवतु नाम। त्वं यदा कदापि तव अज्ञानं ज्ञात्वा अवश्यं सन्मार्गगामी भविष्यसि। त्वादृशान् पुरुषान् अहं प्राचीन भारत इतिहासे अनेकान् अपश्यम्। कालः परिवर्तते तथा मानवोऽपि परिवर्तनं प्राप्नोति।

**पुरन्दरः** — किं समाप्तं तव प्रबोधनम्। गच्छ अन्तः, भोजनवेला जाता, भुक्त्वा सपदं पुनः आपणं गन्तव्यं विद्यते। अहं उद्यमशीलः पुरुषः।

**रमा** — जानाम्यहं कियत्कालं एतादृशजीवनं चलिष्यति। (इति अन्तः गच्छति पुरंदरोऽपि अन्तः गच्छति)

(यवनिका पततिः)

* * *

# चतुर्थं दृश्यम्

(पुरन्दरस्य आपणे पुरन्दरः पूर्ववत् उपविष्टः अस्ति। ततः प्रविशति ब्राह्मणः भस्म त्रिपुड्रान् ललाटे कृत्वा गोष्पाद शिखायुतः धौतपरिधानधृतः उत्तरीय शोभितः)

**ब्राह्मणः** — अयि भोः श्रेष्ठिन् वर्धते व्यापारः।

**पुरन्दरः** — (उत्थाय) नमांसि ब्राह्मण। (इति नमस्करोति) उपविशन्तु भवन्तः। (इति आसनं दर्शयति)

**ब्राह्मणः** — कार्यार्थमागतोऽहं अवश्यं उपविशेयम्। (इति उपविशति)

**पुरन्दरः** — महाब्राह्मण किं ते आगमनस्य हेतुः।

**ब्राह्मणः** — पुरंदर, ब्राह्मणः किमर्थमागच्छति।

**पुरन्दरः** — (विहस्य) दातारं धनं याचितुम्।

**ब्राह्मणः** — जानासि त्वम्।

**पुरन्दरः** — अहमपि ब्राह्मणः तस्मात् जानामि ब्राह्मणानां चित्तवृत्तिम्।

**ब्राह्मणः** — पुरन्दर, अहं मम पुत्रस्य मौञ्जीधारणव्रतबन्धं चिकीर्षामि। तस्मात् तत्कृते अपेक्ष्यते धनम्।

**पुरन्दरः** — यं कमपि दातारं गत्वा धनं याचतु।

**ब्राह्मणः** - न कोऽपि दाता अस्मिन् पत्तने।

**पुरन्दरः** — तस्मात् किं कर्तव्यम्।

**ब्राह्मणः**—तस्मात् किं कर्तव्यमिति विचार्य अहं त्वत् सकाशं समागतोऽस्मि।

**पुरन्दरः** — अर्थात् मां धनं याचिंतुं समागतोऽसि।

**ब्राह्मणः** — हां त्वामेव धनं याचितुं समागतोऽस्मि।

**पुरन्दरः** — किं मत्समीपे निधिः विद्यते सर्वेभ्यः विभाज्य दातुम्? अत्र न केषां अपि दानं दीयते। अहं दानार्थं अत्र उपविशामि किम्?

**ब्राह्मणः** — अयि भोः युष्मादृशानां दानात्विना अस्मादृशानां पुत्राणां मौञ्जीधारणव्रतः कथं भविष्यति, भवानेव कथयतु पुरन्दर।

**पुरन्दरः** — अत्र आपणे वस्तुन्यासेन तत्तु हिरण्यन्यासेन धनं दीयते किन्तु न दानरूपेण। ततः त्वं गत्वा यत् किमपि सुवर्णाभरणं आनीय मत्सकाशे निक्षिप्य धनं गृहीत्वा निवर्तस्व। नोचेत् अधुनैव गच्छ पुनः मम समीपं मा आगच्छ।

**ब्राह्मणः** — अयि पुरन्दर अहं अलौकिकः। मे वेदाध्ययनं विना नान्यत् ज्ञातमस्ति। पुनः उपनयनानन्तरं अहं ते सर्वं धनं दास्यामि।

**पुरन्दरः** — तदा त्वं कथं दास्यसि।

**ब्राह्मणः** — बटोः भिक्षावेलायां भिक्षारूपेण यत् धन बन्धुभ्यः संप्राप्यते तत् धनं तुभ्यमहं दास्यामि।

**पुरन्दरः** — ब्राह्मणाय दत्तं वीतिहोत्रे निक्षिप्तं हुतमेव भवति। किन्तु न पुनरागमनं भवति।

**ब्राम्हणः** —- किं कुर्यामहम्।

**पुरन्दरः** — पुत्रस्य मौञ्जीधारणव्रतः आवश्यकः किम्? अधुना अस्मिन् दारिद्र्ये।

**ब्राम्हणः** — अयं बालः अष्टवर्षीयः। वेदोक्तप्रमाणं अवश्यं अधुना सः उपनीतः भवितव्यः अस्ति।

**पुरन्दरः** — तस्मात् त्वं गृहं गत्वा यत् किमपि सुवर्णमयं उत वज्रवैडूर्याञ्चितं आभरणमानीय मह्यं देहि। अहं ते धनं दास्यामि।

**ब्राम्हणः** —अयि भोः, ब्राह्मणाः निराडम्बरजीविनः तेषां सर्वसमानभावुकता सर्वत्र, सर्वेषु प्राणिषु भगवत्दर्शनमेव सम्पत् नान्यत् विद्यते।

**पुरन्दरः** — स्त्रियः कर्णाभरणानि मङ्गल सूत्राणि हस्त कङ्कणानि धरन्ति, तेषु यत्किमपि आनय।

**ब्राम्हणः** — अस्मत् गृहे गृहिण्यः मङ्गलसूत्रं विना नान्यत् धारयन्ति। तत् मङ्गलसूत्रानयनं अयोग्यं भवति।

**पुरन्दरः** — मङ्गलसूत्रमानय इति नाहं कथयामि। किन्तु भूषणान्तरं आनय धनं दास्यामि।

**ब्राम्हणः** — अहं यायावरः भिक्षाटनेन जीवामि। नाहमानेतुं शक्तः सुवर्णाभरणम्।

**पुरन्दरः** — अहं धनं दातुं अशक्तः।

**ब्राम्हणः** — अस्मिन् ग्रामे न कोऽपि दाता विद्यते प्रष्टुम्। सर्वोऽपि धन सम्पादने तत्परो भूत्वा कृत्याकृत्यं विधाय जीवति।

**पुरन्दरः** — त्वं तव पत्नीसमीपं गत्वा तां विचारय सा दास्यति तुभ्यम्। तत् आनीय मह्यं देहि तदा अहं तुभ्यं धनं दास्यामि।

**ब्राम्हणः** — मे जाया कथं दास्यति। तस्याः समीपे न किमपि विद्यते।

**पुरन्दरः** — आभरणैर्विना स्त्रियः कथं जीवन्ति। तेषां अभरणानि पञ्चप्राणापेक्ष्या अधिकतमानि। त्वं गच्छ तव पत्नीं विचारय।

**ब्राह्मणः** — ब्राह्मणस्त्रीणां आभरणैः किं प्रयोजनम्। तेषां अभरणं शीलमेव।

**पुरन्दरः** — ब्राह्मण अधिकप्रलापैः किं प्रयोजनम्। विना वस्तुन्यासेन नाहं दास्यामि तुभ्यं धनम्। त्वं गच्छ। (इति उक्त्वा सः पुरन्दरः अन्तः गच्छति)

**ब्राम्हणः** — अयि पुरन्दर अहं प्रयतिष्ये। पुनरागच्छेयम्। (इत्युक्त्वा निर्गच्छति)

(यवनिका पतति)

* * *

## पंचमं दृश्यम्

(रमा कङ्कतिकया शिरोजान् प्रसादयति ततः प्रविशति ब्राह्मणः)

**ब्राह्मणः** — भवति भिक्षां देहि।

**रमा** — नमस्ते ब्राम्हण।

**ब्राम्हणः** — भगवति अहं भिक्षार्थमागतोऽस्मि।

**रमा** — तिष्ठ, भिक्षामानयेयम्।

**ब्राह्मणः** — साधु मतल्लिके।

**रमा —** (अन्तः गत्वा एकं फलं गोधूमान्श्च आनीय तस्य भिक्षा गोण्यां निक्षिपति)

**ब्राम्हणः —** अयि मतल्लिके अहं संतुष्टोऽस्मि भवत्याः भिक्षादानेन। किन्तु मम—– (इत्यर्थोक्त्या)

**रमा —** किन्तु कथय किमपेक्ष्यते अधिकम् ।

**ब्राह्मणः —** अयि मातः अहं महत्तरां भिक्षां याचयामि ।

**रमा —** अयि ब्राम्हण, कीदृशीं भिक्षां तव याचसे ।

**ब्राम्हणः —** अम्बे, अहं मे पुत्रस्य मौञ्जीधारणव्रतं चिकीर्षामि तदर्थं धनमपेक्ष्यते मया। भवति धनं देहि ।

**रमा —** अयि ब्राम्हण नाहं धनं दातुं शक्ता भवामि, यतः धनं मम समीपे न विद्यते ।

**ब्राह्मणः —** अयि मातः त्वं जानासि वयं भूसुराः निर्धनाः केवलं वयं वेदपारगाः। अस्मत् समीपे न किमपि धनं विद्यते, तस्मात् मौञ्जी धारण व्रताय धनं याचे ।

**रमा —** त्वं किमपि वस्तु याचस्व अहं दास्यामि किन्तु न धनम् ।

**ब्राम्हणः —** भगवति, भवत्याः नाशिकापुढे विराजमानं वज्रखचित नाशिकाभरणं मे देहि ।

**रमा —** महाब्राम्हण गृहाण । (इति नासिकापुटात् शिथिलीकृत्य प्रयच्छति)

**ब्राह्मणः —** सौभाग्यवती भव । (इति आशीर्वादान् दत्वा निर्गच्छति)

**रमा —** अहो मे जीविते योग्यब्राम्हणाय अद्यैव दानं कृतम्। धन्यास्मि। (इति निश्वस्य निर्गच्छति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(पुरन्दरः वज्रवैडूर्याणां गणनां कुर्वन्नास्ते, तस्य पुरतः तुला विद्यते सः पूर्ववत् उपविष्टः आस्ते। ततः प्रविशति ब्राम्हणः)

ब्राह्मणः — अपिकुशलं पुरन्दर।

पुरन्दरः — (उन्नमित शिरः) नमस्ते ब्राम्हण।

ब्राह्मणः — ते साधु भवतु।

पुरन्दरः — किं साधु किं असाधु एषु दिवसेषु सम्यक् व्यापारः न चलति। तूष्णीं अहं अत्रोपविशामि।

ब्राह्मणः — अहं आगतोऽस्मि पुनः त्वां द्रष्टुम्।

पुरन्दरः — दर्शनेन किं प्रयोजनं भवति। त्वया यत् किमपि आनीतं किम्। अहं विस्मृतवानस्मि, किं पुत्रकस्य उपनयनं कृतं किम्?

ब्राह्मणः — एतावत्पर्यन्त न कृतं मया यतः बहु धनमपेक्ष्यते उपनयनस्य। तत् धनं अधुना अहं त्वत्तः गृहीतुं आगतोऽस्मि।

पुरन्दरः — उक्तं च मया विनाच न्यासं धनं न दीयते इति।

ब्राह्मणः — हां अहं उक्तोऽस्मि।

पुरन्दरः — तर्हि किमर्थमागत. विनाच न्यासम्।

ब्राह्मणः — अयि भोः न्यासं संस्थाप्य धनं ग्रहीतुं आगतोऽस्मि।

पुरन्दरः — हां तथा वद। दर्शयतु तत् वस्तु भवान्।

ब्राह्मणः — पुरन्दर, अस्य कृते कियत् धनं दास्यसि। (इति तत् वस्तु हस्तेन गृहीत्वा दर्शयति)

पुरन्दरः — देहि मे तत् वस्तु हस्ते।

ब्राह्मणः — (उत्तरीयाञ्चल ग्रन्थि विस्रस्य तस्मात् नाशिकाभरणं गृहीत्वा तत् पुरन्दर हस्ते निक्षिपति)

**पुरन्दरः** — (विकसितवदनः तत् वस्तु तदेकदृष्टया पश्यन् पुनः ब्राम्हणं पश्यन्) एतत् वस्तु अतीव सुन्दरं अमूल्यं च प्रतिभाति।

**ब्राह्मणः** — हा इदं नाशिकाभरणम्।

**पुरन्दरः** — तदेव अहमपि तर्कयामि इदं कस्याः नाशिकाभरणमिति।

**ब्राह्मणः** — पुरन्दर, महत् धनं प्राप्तुं आनीतं मया।

**पुरन्दरः** — कस्मात् उत कस्याः समानीतम्।

**ब्राह्मणः** — गृहिण्याः।

**पुरन्दरः** — (साशङ्कम्) किं तया दत्तं इदं, उत चोरयित्वा आनीतम्।

**ब्राह्मणः** — पुरन्दर त्वं अधिक प्रसङ्गं करोषि . तथामावद।

**पुरन्दरः** — परिहास विजल्पितं मया।

**ब्राह्मणः** — मौञ्जीं धारण व्रतार्थं दत्तवती सा।

**पुरन्दरः** — सत्यं इदं गृहिण्याः एव।

**ब्राह्मणः** — अहं गृहं गत्वा तामपृच्छम्। सा अनूपदमेव दत्तवती। एतत् न्यासरूपेण गृहीत्वा दीयतां धनं सत्वरम्।

**पुरन्दरः** — एतत् वस्तु अमूल्य विद्यते। अस्य कृते मम समीपे धनं नास्ति। एतत् वस्तु अत्रैव स्थापय। श्वः आगत्य धनं गृहाण।

**ब्राह्मणः** — तथा कर्तुं नोत्सहे। मम धनं अधुनैवापेक्ष्यते।

**पुरन्दरः** — तथा यदि त्वं अत्रैवोऽपविश। अहं अधुना प्रत्यागच्छेयम्।

**ब्राह्मणः** — अधुना त्वया कुत्र गम्यते?

**पुरन्दरः** — अधुना मया गृहं प्रति गम्यते। अहं पुनरागत्य धनं दास्यामि। (इति नाशिका भरणं पेटिकायां निक्षिप्य पेटिकाबन्धनं करोति) ब्राम्हण अहं गच्छामि त्वं अत्रैवोपविश। (इति निर्गच्छति)

**ब्राम्हणः** — ( विहस्य ) अरे पुरन्दर त्वं परम मूर्खोऽसि मूर्खशिरोमणिरसि। नश्वर संसार लम्पटोऽसि। इतः परं त्वं भक्तः भविष्यसि, दाससाहित्य सृष्टिं करिष्यसि। ते सर्वं शुभं भूयात्। ( इति वदन् हसन् निर्गच्छति )

( यवनिका पतति )

* * *

# सप्तमं दृश्यम्

( पुरन्दरः पिनद्ध कवाटं उद्घाटयितुं ताडयति, आह्वयति रमे इति, किन्तु कवाटोद्घाटनं न भवति )

**पुरन्दरः** — ( आत्मगतम् ) किं करोति एषा अन्तः। कतिवारं मया कवाटोद्घाटनाय ताडितम्। ( उच्चैः रमे इति आह्वयति )

( नेपथ्ये तिष्ठन्तु किञ्चित् कालं तत्रैव, अहं स्नामि इति रमायाः कण्ठध्वनिः श्रूयते )

पुरुषः सम्पादयति अतिकष्टेन गृहिणी व्ययीकरोति स्वेच्छया आर्जितं सर्वम्। कष्टालुः पुरुषः, सुखमनुभवति स्त्री, इयं लोकपरिपाटिः। यदि नाशिकाऽभरणं तस्याः समीपे न दृश्यते तर्हि अद्य तस्याः मरणमेव भविष्यति। अत्रैवोपविश्य पश्यामि सर्वम्। ( इति तत्र पीठे उपविशति )

**रमा** — ( कवाटं उदघाटयति, शिरोजान् वस्त्रखण्डेन घर्षयति ) भोः स्नाम्यहं तस्मात् आलस्यं जातं किमर्थमेवं कवाटताडनं आक्रोशनं च। अद्य कृत्थाः इव भवन्तः संदृश्यन्ते। कोऽत्र हेतुः ?

**पुरन्दरः** — हां सत्यमेव कृत्थोऽहम्। मम वचनस्य अनुपदमेव प्रत्युत्तरं देहि।

**रमा** — कोऽयं प्रश्नः पृच्छतु।

**पुरन्दरः** — ( तस्याः मुखं विलोक्य ) ते नाशिकाऽभरणं न दृश्यते कुत्र विद्यते तत् ?

**रमा —** स्नान समये नाशिकायाः शिथिलीकृत्य स्नानकोष्टे निक्षिप्तास्मि।

**पुरन्दरः —** त्वं गत्वा प्रथमतः नाशिकाभरणं आनय।

**रमा —** अधुना तेन तत्र किं प्रयोजनं विद्यते।

**पुरन्दरः —** हञ्जे, दिदृक्षामितत्।

**रमा —** आनयेयं अनन्तरं दर्शयेयं अधुना किमर्थम्।

**पुरन्दरः —** ( सक्रोधम् ) अहं त्वां पृच्छामि नासाभरणं आनय दर्शय इति। यदि त्वं न दर्शयसि तव यमसदनमेव शरण्यं भवति।

**रमा —** ( भीता ) आनयेयं। ( इति अन्तः गच्छति )

**पुरन्दरः —** ( तत्रैव तिष्ठति )

**रमा —** ( प्रविश्य ) गृहणातु। ( इति ददाति )

**पुरन्दरः —** ( गृहीत्वा ) अहं अधुनैवागच्छेयम्। ( इति निर्गच्छति )

**रमा —** ( आनन्दाश्रुपूर्णा तत्र विद्यमान श्रीकृष्णस्य मूर्तिसमीपं गच्छति तस्य विग्रहस्य पुरतः स्वात्मानं पातयित्वा कृष्ण त्वमेव मे रक्षकः इति नमस्करोति )

( यवनिका पतति )

* * *

## अष्टमं दृश्यम्

( ततः प्रविशति पुरन्दरः, उपविशति पेटिका समीपे, उदघाटयति पेटिकां, तत्र नाशिकाभरणस्य अभावं विलोक्य हस्ते विद्यमान नाशिकाभरणं विलोक्य आश्चर्य चकितः पुरतः विलोक्य तत्र ब्राह्मणाऽभावं विलोक्य अत्यन्तचकितः विस्फारित लोचनः भक्तिभावेन एवं कथयति )

**पुरन्दरः** —- अयं ब्राह्मणः नहि। ब्राह्मणरूपे आगतः श्रीकृष्ण परमात्मा एव। प्रभो वासुदेव त्वमेव पुत्रकस्य मौञ्जीधारणव्रतार्थं धनं पृष्टवानसि। त्वमेव मे गृहं गत्वा मे पत्न्याः इदं नाशिकाभरणं आनीतोऽसि। अहं मृत्पिण्ड बुद्धिः अभवम्। तव नाटकं अनवबोधितोऽस्मि। देव न कोऽपि जानाति ते अद्भुत रचनां मायां च वसुधातले। किमेतत् जीवितेन प्रयोजनं यदा साक्षात् भगवान् श्रीकृष्णः ब्राह्मणरूपेण मां प्राप्तः तदा अहं अन्धो भूत्वा तं द्रष्टुम शक्तोऽभवम्। धिङ्मे जीवितम्। धिङ् मे संपत्। धिङ्मे धनकनक लोलुपत्वम्। सर्वं धिक्। दृश्यमानं धिक्। रमे त्वं धन्याऽसि। त्वं श्रीकृष्णेन याचितं दत्तवती। ते जन्म सार्थकं बभूव। न मे रोचते इदं वस्तुजालम्। सर्वं नश्वरम्। परमात्मा अनश्वरः नित्यः, स्थाणुः अचलः सनातनः। अधुना परावर्तित जीवितोऽस्मि। तस्मादहं विठ्ठलं गानरूपेण स्तोत्रं विधाय मुक्ति प्राप्स्यामि। हे पुरन्दर विठ्ठल। कृष्ण, मुरारे, मधुकैटभारे, आनन्द, गोविन्द मुकुन्द, शौरे।

**सर्व भूतान्तरात्मानं। बहुरूप विलासितम्।**
**अणीयांसं च देवेशं। हृषीकेशं भजाम्यहम्॥**

( यवनिका पतति )



# ।। परीक्षितनाटकचक्रम् ।।

## 3. सामाजिक-नाटकानुक्रमणिका

२१) पानशाला

२२) प्रेम-परीक्षा

२३) परिणीता

२४) अपराजितम्

२५) मतिभ्रमणम्

२६) वयं पंचाधिकं शतम्

२७) न स्त्री स्वातन्त्र्यमर्हति

# समर्पणम्

३. कैलासवासिभ्यां मे श्वशुराभ्यां कुंचूरु रुक्मिणी-कृष्णराव दम्पतीभ्यां सभक्तिकं समर्पितमिदं सप्तसामाजिक नाटकऋक्षमालाचक्रम् ॥

# ॥ पानशाला ॥

( व्यवस्थापकः यवनिकापुरतः आगत्य ध्वनियन्त्रं हस्ते गृहीत्वा रसिकान् एवं संबोधयति )

**व्यवस्थापकः** — अयि भोः रसिकाः वयं अद्य सामाजिक नाटकं पानशाला नामकं प्रदर्शयितुं उद्युक्तास्मः। संस्कृतभाषायां एतादृशं नाटकं प्रदर्शयितुं वयं अहमहमिकया प्रयत्नं विधाय संफलाः अभवाम। संस्कृत सामाजिक नाटकेषु एतन्नाटकं अद्वितीयं अनुपमं इति नटकानां अभिप्रायः। अस्य नाटकस्य कर्ता पंडित ओगेटि परीक्षित् शर्मा। अयं गीर्वाणान्ध्र भाषा प्रवीणः। अयं नवीन भाव समलङ्कृतः क्रान्ति-कारकः कविः। अस्मिन् परीक्षिन्नाटकचक्रे संहत्य सप्त विंशति नाटकानि विद्यन्ते। तेषु नाटकेषु चतुर्दश नाटकानि पौराणिकानि षण्णाटकानि ऐतिहासिकानि सप्त नाटकानि सामाजिकानि च। तेषु सप्त सामाजिकेषु अयं प्रथमः नाटकविशेषः। तत्र भवन्तः नाटकं द्रष्टुं समागताः किन्तु न भाषणं श्रोतुं। तस्मात् अहं भाषणं विरम्य नाटक प्रदर्शने कृत प्रयत्नो भवेयम् नमांसि। ( इति नमस्कृत्य गच्छति )

( ततः यवनिका अपसार्यते )

तत्रैकस्मिन् पार्श्वे उन्नत वेदिकायां कपाटिकायां वशिकादि ब्राटिलानां श्रेणिः वर्तते। तत्रैव पार्श्वतः खाद्यविशेषाः सन्ति। तत्र मधु व्यवस्थापकः आसने उपविश्य सर्वं पश्यन् आस्ते। तत्रैव पार्श्वे एकः मधुवितरकः उपविष्टः अस्ति। एकः बालसेवकः इतस्ततः चरन् तत्र विद्यमान टेबुलानि स्वच्छयति। एकस्मिन् कोणे नाठ्यार्थं वाद्य-विशेषैः वेदिका भाति। वत्र अगन्तारः गन्तारः सन्ति। स्वल्पनादेन सर्वदा सातत्येन डिस्को वाद्य मिश्रित गानं पिशाचानां कोलाहलमनुकुर्वन्ती संश्रूयते। ततः प्रवि-शति एकः पाश्चात्यः तस्य नाम स्मितः। सः सन्ध्या शिरोवेष्टनेन ऊर्णवेषे विद्यमानः धूम्रपानं कुर्वन् वेत्रहस्तः शनैश्शनैः, चलन् पानशालान्तः प्रविशति। तस्य वयः पञ्चतिः। सः आगत्य तत्र एकस्यां कुर्च्यां उपविशति। ( धूम्रवर्तिकां प्रशाम्य जृम्भणं विधाय )

**स्मितः** — अरे बाल। ( इति बालसेवकं आह्वयति )

( बालः तस्य समीपमागत्य )

**बालः** — अहमस्मि भोः।

**स्मितः** — किं विद्यते रे।

**बालः** — वशिका, मदिरा, वधुका, मद्यं, मधु, सीधु, सोम, नीरा, सुरा, वैना, वीरपानम्।

**स्मितः** — ( स्तब्ध ) किं रे दण्डकं पठसि उत पाठं करोषि।

**बालः** — विद्यमान वस्तुचयं कथयामि भोः।

**स्मितः** — अथ किम्। पश्य वशिका बाटिलं आनय।

**बालः** — चित्तं भोः। यथाज्ञापयति भवान्।

**स्मितः** — ( धूमवर्तिकां अनलयति धूम्रं नाशिका रन्ध्राभ्यां मुखाच्च विसर्जयति )

**बालः** — भोः आगतोऽस्मि। ( इति तस्य पुरतः वशिका बाटिलं चषकं च संस्थाप्य निर्गच्छति )

**स्मितः** — ( बाटिलं उद्घाटय चशके वशिकां स्रावयति। आत्मगतम्) अद्याहं अतीव श्रान्तोऽस्मि अधुनाहं वशिकया अपगतश्रमः भवेयम्। आनन्दो ब्रह्मेति ज्ञास्यामि। ( इति किञ्चित् पीत्वा ) अरे बाल खाद्य विशेषं मांसापूपमानय, उत शूलमांसं आनय।

**बालः** — साधु आनयामि भोः। ( इति आनीय तत्र टेबुलोपरि निक्षिप्य गच्छति )

**स्मितः** — (किञ्चित् किञ्चित् पिबन् मध्ये मध्ये खादन् इतस्ततः पश्यन् आस्ते )

( ततः प्रविशति हरिहर शर्मा। सः श्वेतवस्त्रधारी, लंबमानश्वेतकञ्चुकेन भूषितः द्वारपर्यन्तमागत्य उपरि दृष्ट्वा ) पानशाला। ( इति पठित्वा किञ्चित् विचार्य ) पानार्थं शाला पानशाला। ( इति वितर्क्य ) अहं अन्तः गत्वा किञ्चित् पास्यामि। ( इति प्रविशति स्मिताभिमुखं कुर्च्यां उपविशति अनुपदमेव बालः समागच्छति )

**बालः** -- भोः किमपेक्ष्यते।

**शर्मा** — अरे बाल किं किं विद्यते।

**बालः** — भोः वशिका, मदिरा, वधुका, नीरा, सुरा, सोम, वैना, वीरपानं आसवश्च।

**शर्मा** — वत किं त्वं दण्डकं पठसि?

**बालः** — विद्यमान वस्तुसारणीं कथयामि भोः।

**शर्मा** कोला न विद्यते किम्?

**बालः** — नहि।

**शर्मा** — ऊर्ध्वाङ्गुष्टं विद्यते किम्?

**बालः** — किमेतत् भोः, नाहं जाने।

**शर्मा** — त्वं संस्कृतं जानासि?

**बालः** — हां अहं संस्कृतं जानामि।

**शर्मा** — ऊर्ध्वाङ्गुष्टं इति पदं Thums up इत्यस्य भाषान्तरीकरणम्।

**बालः** — तत् न विद्यते अत्र।

**शर्मा** — इयं पानशाला खलु' तत् स्थापनीयं भवति।

**बालः** — इयं पानशाला भोः।

**शर्मा** — किं रे त्वं मां अनुशास्ति। जानाम्यहं इयं पानशाला इति। अत्र कोला सोडा नारङ्गरसः तक्रम्, लिम्बफलरसश्च लभिष्यंति इति मत्वा पातुं समागतोऽस्मि। इयं पानार्थं शाला तस्मात् पानशाला इति कथ्यते। भारतदेशे पानशाला इत्यस्य पदस्य अयमेवार्थः।

**बालः** — एतत् सर्वं नाहं जाने भोः।

**शर्मा** — हां सोडा विद्यते किम्।

**बालः** — सोडा विद्यते भोः।

**शर्मा** — संतुष्टोऽस्मि आनय सोडाम्।

**स्मितः** — ( शर्माणं पश्यन् ) अयि भोः बालेनसार्थं पानशालाशब्दस्यार्थं विस्तृत्य कथयति भवान् कोऽस्ति भोः।

**शर्मा** — अहं संस्कृतपण्डितः। मम नाम हरिहर शर्मा।

**स्मितः** — बालसेवकेन सार्थं पानशाला शब्दस्य अर्थविवरणं करोषि, किं सः जानाति इयन्तं संस्कृतम्।

**शर्मा** — भवतां शुभनाम किं भोः।

**स्मितः** — मम नाम स्मितः।

**शर्मा** — अयि स्मित, भारतवर्षे सर्वोऽपि संस्कृतं जानाति यतः सा भाषा भारतीयानां भाषा विद्यते। तस्मात् कारणात् संस्कृत भाषायां बालेन सार्थं भणामि। अर्थ विवरणं च करोमि।

**स्मितः** — कथं सर्वे संस्कृतं जानन्ति।

**शर्मा** — पाश्चात्यभाषां भारतवर्षे रेथ्यासु गार्दभ सदृशाः अनभिज्ञाः अपि भाषन्ते। भारतीयाः भारतीय भाषां संस्कृतं न जानन्ति किम्।

**स्मितः** — तत्र उत्तरं प्रशंशनीयं अस्ति अयि भोः भवतां व्यवसायः कः।

**शर्मा** — मम व्यवसायः संस्कृत भाषाप्रचारः एव। कोऽस्ति भवान् भवतां पूर्ण परिचयः कः?

**स्मितः** — अहं अमेरिका देशीयः। अहं अस्मिन् भारतवर्षे एकस्मिन् विद्यालये आन्ग्ल विभागस्य प्रधानाचार्यः।

**शर्मा** — भारतवर्षे एकस्मिन् विद्यालये आंग्ल विभागे प्रधानाचार्यः भवान्। श्रुत्वाहं बहु प्रमुदितोऽस्मि। तस्मादेव भवान् वशिकां यथेच्छं पिबति।

**स्मितः** — अयं अस्मदीय देशीयाचारः।

**शर्मा** — देशीयाचारस्तु अवश्यं परिपालनीयः न केनापि देशद्रोहः कर्तव्यः। तस्मात् भवान्

**पीत्वा पीत्वा पुनः पीत्वा। वशिकां वश्यकारिणीम्।**
**धूम्रपानं करोष्येवं। भ्रमणं ते न जायते ?**

**स्मितः** — ( विहस्य ) अयि भोः शर्मन् भवान् आशु कविरस्ति।

**शर्मा** —- किमत्राश्चर्यं विद्यते। यदा केचन भारतीयाः अन्य भाषासु कवयन्ति किं नाहं भारतीय भाषायां सुरभाषायां कवयितुं न शक्तोऽस्मि ?

**स्मितः** —- हां सत्यमेव।

**शर्मा**—भवान् सम्यक् गीर्वाणीं जानाति। दृष्टा शृत्वाच मे परमामोदः भवति।

**स्मितः** — भवतां प्रशंसया अहं संतुष्टोऽस्मि धन्यवादाः। अहं मम बाल्ये लण्डन देशे एकस्यां पाठशालायां अमरभारतीमपठम्।

**शर्मा** — पाठशालायां कथम्।

**स्मितः** — लण्डन नगरे सर्वत्र सर्वासु पाठशालासु एषा अनिवार्य भाषा अस्ति। तस्मात् शालायां प्रथमकक्ष्यातः एकादश कक्ष्यापर्यन्तं गीर्वाणी अनिवार्या अस्ति। एषु दशवर्षेषु सर्वोऽपि बालः प्राथमिक भाषाज्ञान संराजितः भवति।

**शर्मा** — लण्डन नगरे गीर्वाणी अनिवार्या किमर्थम्।

**स्मितः** — भारतीज्ञानेन सर्वाणि शास्त्राणि गणितं च सुलभतया अवगाहनानि भवन्ति। मानवः संस्कारवान् भवति इति तत्र पालकानां आशयः तस्मात् एषा भाषा अनिवार्यत्वेन संस्थापिता।

**शर्मा** — अहो मे भवतां वचनं श्रुत्वा परमामोदः भवति। भवान् अभारतीयः तथापि भवान् सुरभाषायां भणति श्रुत्वैतत् अहं स्वात्मानं विस्मरामि।

**बालः** — भोः इयं सोडा। ( इति पात्रे प्रस्राव्य गच्छति )

**स्मितः** — अहं भवतां परिचयेन परमानन्दमनुभवामि।

**शर्मा** — लण्डन नगरे सुरभाषा अनिवार्यत्वेन शालासु निक्षिप्ता इति श्रुत्वा अहं भारतीयान् गर्हामि। यत् सुर भाषा कृते लण्डन नगरेण कृतं तत् भारत-

वर्षेण न कृतं इति विचार्य भारत देशीयाः गौर्वाणी द्वेषिणः संस्कृति द्रोहिनः इति भावयामि।

**स्मितः** — तथामावदतु भारतदेशेऽपि संस्कृतभाषा अनिवार्यभाषा सर्वासु दशासु भविष्यतीति ममाभिप्रायः।

**शर्मा** — तान् दिवसान् अहं द्रष्टुमिच्छामि। अहं भवतां भाषणेन अतीव संतुष्टो जातः।

**स्मितः** — अयि भोः शर्मन्, वशिकां किञ्चित् सोडा सार्थं मिश्रणं विधाय यदि पास्यसि आनन्दो ब्रह्मेति ज्ञास्यसि।

**शर्मा** — अयि भोः स्मित यूयं पाश्चात्याः भवतां वेषभूषादिकं अन्यत् अन्न-पानादिकं अन्यत् आवयोः संस्कृत्योर्मध्ये महदन्तरं विद्यते। युष्मदीय विद्यायाः स्वरुपः अन्यः अस्मदीय विद्यायाः स्वरुपः अन्यः। आनन्दो ब्रह्मेति वाक्यं अस्मिन् विषये योग्यं न भवति। युष्माभिः अस्यार्थः सम्यक् नार्धीतः। केवल पठन मात्रेण प्रमाणपत्र स्वीकारमात्रेण विद्यायाः स्वरुपः न ज्ञातः भवति।

**स्मितः** — किं भवान् वदति। अस्मदीय प्रभुता प्रपञ्चे सर्वत्र विद्यते। इयं आग्लभाषा जगति सर्वैरपि भण्यते। तस्याः भाषायाः स्वरुपः अन्यः। भारतवर्षे नकापि भाषा विद्यते तया भाषया संतोलयितुं उत उपमितुं।

**शर्मा** — (विहस्य) भवान् किं वदति। (इति सोडां पीत्वा एकमुद्गीर्य) यथा संस्कृत भाषायां प्रत्येक शब्दस्य शब्दोत्पत्तिः विद्यते तद्वत् जगति न कस्यापि भाषायाः विद्यतेति भाषा तज्ज्ञानां मतम्। इयं शास्त्रीय भाषा इति केषांचन मतम्। इयं भाषा सर्वासां प्रपञ्च भाषाणां जननीति सशोधकाः भाषातज्ज्ञाः भणन्ति किं त्वं न जानसि एतद्विषयम्।

(पानशाला व्यवस्थापकः ध्वनियन्त्रे एवं कथयति)

**व्यवस्थापकः** — अयि भोक्तारः पायिनः शृण्वन्तु भवन्तः। वयं अतीव प्रहृष्टा स्मः यतः हेलानाम भारतीय सुन्दरी अत्र अद्य यामिन्यां नाट्यं करिष्यति यूयं सर्वे तन्नाट्यं दृष्ट्वा पानशालां सार्थकतां कुर्वन्तु इति आशास्महे। अपिच अत्र सर्वदा विविध शिक्षण शाखासु सुप्रसिद्ध विद्वांसः आगत्य बहुविषय संवादकाः भूत्वा पानशालां

विद्याशालेति सुखशालेति मत्वा पानशालां जगत्प्रसिद्धां चारित्र्यशालिनीं कुर्वन्ति तस्मात् यूयं सर्वे धन्यवादार्हाः नमांसि। (इति विरमति)

(अत्रान्तरे षण्मुखोनाम एकः तमिल पण्डितः कण्ठेलम्बमानेत्तरीयः दीर्घ कञ्चुकः लुंगीवेष्टितः अपिच गान कलाकोविदः गन्धर्व नामकः द्रविड पण्डित वेषेण भूषितः प्रविशतः तौ स्मितशर्मणो पार्श्वतः उपविष्टौस्तः)

**षण्मुखः** — अरे बाल।

**बालः** —भोः एषोऽस्मि।

**षण्मुखः** — वधूकमानय।

**बालः** — आनयामि। (इत्युक्त्वा गन्धर्वं प्रति) भोः वः किमानयेयम्।

**गन्धर्वः** — मदिरामानय। (इत्युक्त्वा) स रि ग प ध स, स ध प ग रि स (इति मोहनरागमालपति)

**षण्मुखः** — अरे (गन्धर्वं विलोक्य) गन्धर्व इयं पानशाला नतु संगीतशाला

**गन्धर्वः** — न किमपि विद्यते अन्तरं द्वयोर्मध्ये।

**षण्मुखः** — किं वदसि। कथं न विद्यते अन्तरम्। तत् कथं कथय।

**गन्धर्वः** — संगीत चेतनानेचतनं सर्वं जगत् स्वर्गं नयति। इयं मदिरापि तथैव करोति।

**षण्मुखः** — अद्य रात्रौ हेलायाः नाटयं भविष्यति इति वृत्तपत्रे प्रसिद्धमासीत्।

**गन्धर्वः** — अथ किम्। अहो परमानन्दः यतः मदिरापानं मदवती मधुराधर निसृत गानं, विलास परिसर्पित लास्यम्। अतः परं किमपेक्ष्यते। इयं पानशाला आनन्दानां निलया प्रतिभाति।

**बालः** — भोः इयं वधूका। (इति षण्मुखस्य पुरतः स्थापयति) इदं मदिरा (इति गन्धर्वस्य पुरतः स्थापयति)

(षण्मुखगन्धर्वौ बातिलौ उद्घाटय चषकयोः स्रावयतः अनन्ततरं किञ्चित् किञ्चित् पिबतः)

**गन्धर्वः** — अरे बाल पिष्टकमानय।

**षण्मुखः** — अरे बाल अपूपमानय।

**बालः** — चित्तं भोः आनयामि। ( इति गच्छति )

**षण्मुखः** — शर्मन् सर्वेषां संस्कृत शब्दानां व्युत्पत्तिः विद्यते किम् ?

**शर्मा** — अयि स्मित महोदय संस्कृत भाषायां ईदृशी शक्तिः विद्यते या अन्यत्र भाषासु न विद्यते। सुर भाषायां व्युत्पन्न प्रातिपादिकाश्च विद्यन्ते। शक्यतः एकोनशत पर्यन्तं सर्वेषां शब्दानां व्युत्पत्तिः विद्यते। तस्मात् नूतन शब्दसृष्टि अपि कर्तुं अस्यां भाषायां शक्यं भवति। नान्य भारतीय भाषासु तादृशी शक्तिः विद्यते।

**स्मितः** — किन्तु इयं प्रवाहिनी देश्या, जनोपयोगी भाषा नहि। इयं न भवति, न भविष्यति ना भूत् इति मे विश्वासः।

**शर्मा** — अस्मिन् विषये केषांचन मानवानां भ्रान्तिः विद्यते। यथा आंग्ल भाषा सर्वसामान्य भाषा नहि तथा संस्कृत भाषापि नहि। लेखन व्यवहारः उच्चतम व्यवहारः आंग्ल भाषायां यथा भवति तथा गीर्वाण भाषायामपि भवति। तदर्थयेव पूर्वं सकलशास्त्रचयं अस्यां भाषायामेव प्रादुर्भूतम्। आसेतु हिमाचलं संपर्क भाषारूपेण संस्कृतं प्रसिद्धम्। श्रीआदिशङ्करभगवत्पादाः संस्कृत भाषायां सर्वं भारतं जित्वा भारतं सर्वं एक संस्कृतिसूत्रेण बद्धमिति घोषयामास।

**स्मितः** — एकदा अभूत्। अधुना तस्याः भाषायाः उपयोगः कुत्र विद्यते।

**शर्मा** — स्मित महाशय किं वदति भवान्। सर्वेऽपि भारतावनौ गीर्वाण सूक्तीः व्यापारार्थं वाणिज्यार्थं प्रयुञ्जते अधुना।

**स्मितः** — दृष्टान्तं देहि तत्कथम्।

**शर्मा** — सर्वे संस्कृतभाषा मृतभाषा इति कथयन्ति किन्तु सर्वेषां नामानि संस्कृत नामानि निक्षिपन्ति तैः नामभिः आह्वयन्ति। रामः कृष्णः शिवः गिरिजा रमा सुषमा वासन्ती इत्यादयः। अपिच भारतवर्षे सर्वे वाराः सर्वाणि नक्षत्राणि सर्वाः तिथयः सर्वे मासाः पूजा अभिषेकादयः विवाह उपनयन इत्यादयः अपर कर्म इत्यादयः वर्षश्राद्धादयः सुरभाषायामेव कुर्वन्ति। सर्वोऽपि मानवः ज्ञात्वा उत अज्ञात्वा स्वीय भाषणे विंशति अंशः गीर्वाणीमेव भाषतेति विदितमेव।

**स्मितः** — वाणिज्ये कथं उपयुञ्जते।

**शर्मा** — शृण्वन्तु, समानी वः आकूतिः सामाजिक समारम्भेषु। शीलवृत्त फलाविद्या इति विश्वविद्यालय भवनेषु। योगक्षेमं वहाम्यहं इति विमाकार्यालयेषु, अक्षय्यं ते भविष्यतीति ब्यांकु सौधेषु, अमृतंतु विद्या इति सर्वत्र सर्व भाषणेषु गीर्वाणमेव सुर भाषा द्वेषिणः अपि यथा संदर्भं उययोजयन्ति बहिरागत्य तां द्विषति।

**षण्मुखः** — अयि भोः भवन्तौ संस्कृतं संस्वृतं इति आवयोः शिरोवेदनां कारयतः। किमर्थं भवन्तौ शनैः शनैः पीत्वा शान्तमार्गेण न गच्छथः। एवं भाषणेन कोऽपयोगः।

**स्मितः** — कोऽस्ति भवान् आवां निरोध्दुं। इयं पानशाला अत्र सर्वमपि चलिष्यति। भवांन् यथेच्छं पीत्वा शान्तमार्गेण गच्छतु। आवयोः वाक् स्वातन्त्र्यं मा निरोधयतु भवान्।

**षण्मुखः** — क्षमस्व प्रमादः कृतः।

**स्मितः** — समीचीनम्।

**शर्मा** — अयि भोः। (इति षण्मुखं विलोक्य) त्वमपि भण यत्किमपि गीर्वाण मुद्दिश्य। तवापि वाक् स्वातन्त्र्यं विद्यते। विस्मृतोऽस्मि तव नाम प्रष्टुम्। किं ते नाम।

**षण्मुखः** — मम नामः षण्मुखः।

**शर्मा** — षण्मुखः। त्वं दाक्षिणात्यः असि।

**षण्मुखः** — अहं दाक्षिणात्यः। कथं त्वया ज्ञातम्।

**शर्मा** — नाम श्रवणेन तस्य प्रादेशिकता ज्ञायते। (स्मितं उद्दिश्य) श्रुणोतु भवान्। अस्य नाम षण्मुखः।

**स्मितः** — हां श्रुतं अस्य नाम षण्मुखः। (That means six faces)

**शर्मा** — भोः षण्मुख तव सख्युः नाम किम्?

**षण्मुख** — अस्य नाम गन्धर्वः अयं गायकः।

**शर्मा** — भवान् कः अस्ति।

**षण्मुख** — अहं तमिळ पण्डितः।

**शर्मा** — भवान् तमिळ पण्डितः (गन्धर्वं विलोक्य) अयं गायन् कला निष्णातः गन्धर्वः। (स्मितं विलोक्य) अयि भोः शृणोतु भवान् तव नाम स्मितः अमुयोः नामानि षण्मुख गन्धर्वौ। मम नाम हरिहर शर्मा। अस्याः शालायाः नाम पानशाला। अत्र सर्वेषां नामानि संस्कृतानि। संस्कृत भाषा जीवन्ती भाषा नहि किम्।

**षण्मुखः** — अयि भोः शर्मन्। तथा नहि।

**शर्मा** — तवाभिप्रायः कः?

**षण्मुखः** — मम तमिल भाषायां आरुमुगम् विद्यते तन्नामवाचकं विलोक्य सुरवाणी पण्डिताः षण्मुखः इति शब्दं अस्रुजन्। प्रथमतः बहुकालात् प्राक् भारतवर्षे तमिळ भाषा अवर्तत। सर्वेपि तमिळीयाः एव।

**स्मितः** — षण्मुख तवापि वाक् स्वातन्त्र्यं विद्यते तत् कथं भवति त्वं विस्तारय।

**षण्मुखः** — यदा आर्याः उत्तर ध्रुव प्रान्तात् भारतं आगताः तदा ते भारते विद्यमान भारतीयैः प्रयुध्य तान् दक्षिणापथं द्रावयामासुः। तस्मात् ते द्राविताः अभूवन्। तदेव अनन्तरं Dravidian बभूव।

**स्मितः** — त्वदुदीरितं सत्यम्। ततस्ततः।

**षण्मुखः** — तस्मात् भारतवर्षे सर्वासु भाषासु तमिळ भाषा आद्या भारतीय भाषा। अस्मदीय कानिचन अक्षराणि रे ळ इत्यादीनि नाग पूजा इत्यादि शब्दान् आर्याः संस्कृत भाषायां समावेष्टयन्।

**शर्मा** — अयि भोः षण्मुख तव तमिळ भाषायां सेन्दमिळ् कोडदमिळ् इति द्वे शाखे स्तः। तत्र प्रथम शाखायां संस्कृत शब्दाः विंशतिः शतं विद्यन्ते।

**षण्मुखः** — केवल कथने उपयोगः नास्ति। दर्शय शब्दान्।

**शर्मा** — (किञ्चित् विचार्य) मणिमेखला काव्यम्। अक्करै, नडनं, करुणाकरन्, गणेशन् इत्यादि शब्दाः तत्समाः विद्यन्ते। अपिच शीग्रं, अथ्य जलं इत्यादि शब्दाः बहवः सन्ति। नकापि भाषा विद्यते संस्कृत सम्बन्धं विना।

**षण्मुखः** — एते सर्वे शब्दाः तमिळ शब्दाः। एतान् शब्दान् आर्याः संस्कृत भाषायां समावेष्टेनं अकुर्वन् इति अहं कथयामि।

**शर्मा** — भवान् असंबद्धं अशास्त्रीयं कथयति। सुरभाषा भारतदेशाय यां संस्कृतीं दत्तवती तद्वत् भारत देशे विद्यमानाः सर्वाः भाषाः मिलित्वा अपि तादृशीं संस्कृतिं भारतवर्षस्य समैक्यता प्रतिपादनाय न प्रभवन्ति। यदि प्रयत्नः क्रियते सः प्रयत्नः विफलः भविष्यति। कालक्रमेण विषयमेतत् सर्वेषां अवगतं भविष्यति। विना संस्कृतेन भारतदेशस्य अस्तित्वं न भवति।

**गन्धर्वः** — शर्मन् सर्वमपि भारतेतिहासं पाश्चात्याः असंबद्धं असत्यं लिलिखुः। विचार्यमाणे संगीतंविना प्रपञ्चमेव नास्ति। सर्वं नादमयं जगत्। नादः ब्रह्म। केवलं सप्त स्वराणां तेषां ध्वनि विभेदानां च समवायेन अर्थात् अल्पाक्षरैः संगीतशास्त्रं अनन्तं भूत्वा जगति सर्व प्राणिनां हृदयङ्गमं भूत्वा चित्तचोरकं चित्ताकर्षकं भवति। तत् संगीतमेव भारत समैक्यतायाः उत प्रपञ्च मानव सौहार्द्रतायाः निदानं भवति। तस्मात् यः संगीतं न जानाति सः पशुप्रायः भवति।

**स्मितः** — (विहस्य) गन्धर्व भवान् किं वदति। सर्वोऽपि स्वमतानुकूलं प्रपञ्चं परिवर्तितुं प्रयतते। तथा मा कुर्वन्तु। यत् अहं कथयामि तत् भवन्तः विचारयन्तु। पश्य।

**आन्ङग्लत्वं आन्ङग्ल भाषाच। सर्वत्रैक्यं विधीयते।**
**तस्मादान्ङग्लीय भावेन। वर्तितव्यं सदा भुवि॥**

इति मे मतिः।

**शर्मा** — भारतवर्षे भारतीयाः पाश्चात्यान् अनुकुर्वन्ति सर्व विषयेषु। तेषां सा एका व्याधिः बभूव। सा व्याधिः चिकित्सानर्हा। मरणानन्तरमेव सा व्याधिः शममेष्यति। सर्वोऽपि देशभक्तिहीनः सुखलंपटो भूत्वा अमूल्य राष्ट्रीयपरम्परां नाशयन् जीवति। विना च सुरभारतीज्ञानं भारतीय परम्परा अवगाहनानर्हा। भुविविद्यमान सकल भाषा पारंगतोऽपि तस्य भारतीय अन्तरात्मा नावगाहनं भवति। तस्य देशभक्तिः न संजायते।

**स्मितः** — तत् कथम्।

**शर्मा**—विना च रामायण महाभारत उपनिषदादीनांपठनं कालिदास महाकवि प्रभृतीनांकवनं विनैव शब्दशास्त्र नाटचशास्त्र दर्शन वेदाङ्गानां परिचयेन देशभक्तिः न भवति। देशस्य संस्कृतिः वैभवः परम्परादयः देशीय भाषासु प्रतिबिम्बिताः भवन्ति। भारतीय प्राचीनपरम्परा समाजस्थितिः सकल शास्त्राणां सृष्टिः वेदोपनिषदां अपिच आयुर्वेद गणित नाटच खगोळ शास्त्रादीनां शब्दशास्त्र मीमांसादि शास्त्राणां सृष्टिः सुर भाषायामेव बभूव नान्य भाषासु। तस्मात् इयं भाषा भारतीय परम्परा प्रतीका अभूत्, भवति भविष्यति। केचन विध्वंसक भावना भूषिताः नेतारं मन्यमानाः विना संस्कृत भाषां, संस्कृतिं च भारत देशस्य समैक्यतां प्रतिपादयितुं साधयितुं च प्रयतन्ते तेषां प्रयत्नः विफलः भविष्यति।

**षण्मुखः** — विनाच संस्कृतज्ञानं सर्वाणि मम तमिळ भाषायां अहं पठितुं समर्थोऽस्मि।

**शर्मा** — प्रान्तीय भाषाः सर्वाः संस्कृत भाषायां विद्यमान काव्य नाटकादि अनुवादेन परिपुष्टिगताः। किन्तु वेदैः सर्वोऽपनिषद्भिः ब्राह्मणैः पुराणैः अन्य तंत्रविद्याभिः न परिपुष्टि गताः। तस्मात् ते राष्ट्रभाषा पदं आरोढुं अशक्ताः भवन्ति।

**स्मितः** — आङ्ग्ल भाषायां शब्दसंपत्तिः बहुला विद्यते तस्मात् सर्वं शास्त्रोपयोगिनी आन्ङ्ग्ल भाषा भारतीयानां राष्ट्रभाषा भवितुमर्हति।

**शर्मा** — आन्ङ्ग्ल भाषा परदेशीया। सा भाषा भारतीय भाषा कथं भविष्यति। तस्यां भाषायां भारतॉय जीवनं न दृश्यते। सा भाषा व्यवहार योग्या भवति। न किन्तु भारतीय संस्कृति प्रतिबिम्बिता भविष्यति।

**गन्धर्वः** — अयि महाशयाः भाषाविषये स्पर्धा मा भूयात्। संगीतंतु वस्तुतः सहजतया प्रकृति भाषा तस्मात् जगत्भाषा संगीतम्।

**शर्मा** — अयि गन्धर्व। तव भाषणे विचार सरणिः न संदृश्यते। पश्य संगीतें भाषा न विद्यते भांणितुम्। तस्मिन् केवलं सुस्वराणां संगमः विद्यते। सः स्वरसंगमः संस्कृतभाषया भूणितः सुमधुरं संगीतं भवति भाणितुं योग्यं गातुं सुकरं भवति। गायकः संस्कृतभांणाज्ञानं विना गातुं समर्थः न भवति।

स्मितः — तत् कथं भोः। गानस्य संस्कृतसंबन्धः कुतः ? सत्यं सर्वं भवान् संस्कृतस्य अनुसंधानं करोति।

शर्मा — अहं न किमपि अनुसंधानं करोमि। सः संस्कृतभाषायाः स्वभावः। संगीतस्य व्युत्पत्तिः सम्यक् गीयते इति संगीतम्। संगीते अनेके रागाः सन्ति। सर्वेषां रागानां नामानि संस्कृत शब्दाः एव।

स्मितः — भवतु नाम गायने संस्कृतस्यावश्यकता। अरे बाल।

बालः — अहमस्मि भोः। किमपेक्ष्यते।

स्मितः — एक चषकं वधूकामानय (शर्माणं विलोक्य) भवद्भ्यः किं रोचते :

शर्मा — अत्र मे रोचकानि न सन्ति। केबलं सोडा विद्यते।

बालः — कोकाकोला विद्यते भोः।

शर्मा — प्रथमतः न विद्यते इति उक्तवान् अधुना कोकाकोला कथं विद्यते।

बालः — अधुना नवीन वस्तुचयं समागतं भोः।

शर्मा — अपि च किं किं विद्यते।

बालः — आम्ररसः विद्यते नारङ्गरसः विद्यते।

शर्मा — आम्र रसमानय।

बालः — यथाज्ञापयति। (इति गच्छति)

शर्मा — शृण्वन्तु, हंसध्वनिरिति, शङ्कराभरणं इति, उमा भरणमिति, षण्मुखप्रियेति कल्याणीति, उदयचन्द्रिकेति, कलहंस इति, चारुकेशीति, अमृतवर्षिणी, जलार्णवम्, मेघदूतम् इति अनेकानि नामानि औडव षाडव शुद्ध बादि, संवादि इत्येषां शब्दानां अर्थज्ञानं विना कैशिकी, काकली, निषाद कोमल कंपित इत्यादि शब्दानां च अवगाहनं विना अर्थ ज्ञानेन विना संगीत गायनं गार्दभ स्वरमेव भवति। यदि रागस्य अर्थः ज्ञायतें तर्हि आनन्दः द्विगुणीकृतः भवति।

गन्धर्वः — शर्मन् भवता यत् प्रतिपादितं तत् सत्यमिति मे प्रतिभाति। विना संस्कृतवाण्या कण्ठगत स्वरमपि सुष्टु नोच्चारितं भवति। संस्कृत भाषा मानवं संस्कृतवन्तं करिष्यति तत् सत्यम्। अधुना अवगतं मया।

शर्मा — गन्धर्व।

संगीतमपि साहित्यं। सरस्वत्याः कुचद्वयम्।
एकमापात मधुरं। अन्यदालोचनामृतम्।।

गन्धर्वः — साधु शर्मन् साधु त्वामहं वन्दे। (इति हस्तावुद्यम्य नमस्कारं करोति)

स्मितः — शर्मन् भवान् सर्व विषयस्यापि दृष्टान्तं दर्शयति तदतीव हृदयङ्गमं भवति मे। कथं शक्यते भवता एवं कर्तुम।

शर्मा — संस्कृताभ्यासेन मानवस्य सर्व भाषाणां स्वरुपः ज्ञायते तादृशी शक्तिः तस्याः भाषायाः सहजालङ्कारप्राया भवति। न तु मम।

षण्मुखः — अयि शर्मन् द्राविड भाषा अपि संस्कृत भवः इति भवान् कथयति कथम्।

शर्मा — द्रविड भाषा, तमिळ भाषा संस्कृत भाषा इति नाहं कथयामि। किन्तु तस्याः अपि संस्कृत संबन्धः विस्तारेण प्राचुर्येण विद्यतेति कथयामि। विना च वेदवाङ्मय संबन्धः भाषाः परिपुष्टि न प्राप्नुवन्ति। तस्मात् सर्वसां भारतीय भाषाणां तज्ज्ञानां विना संस्कृत भाषा ज्ञानं तेषां तासु भाषासु पाण्डित्यं न भवतीति मे अभिप्रायः।

बालः — अयि भोः इयं वधूका। (इति स्मिताय ददाति) अयं आम्र रसः। (इति शर्मणे ददाति)

व्यवस्थापकः — अयि भोः पायिनः भोक्तारः श्रृण्वन्तु घोषणां। वयं अधुना हेला सुन्दर्याः मनोरंजक नाटचं दर्शयिष्यामः। सावधानतया युष्मदीय आसनेषु उपविशन्तु भवन्तः। नमांसि।

( पिशाच संगीतवत् वाद्यविशेषणां कलकलः तस्मिन् कलकले पैशाचीय कण्ठ स्वरः काम तृष्णां प्रजनयन् अस्ति हेलानांटयं करोति )

पिब पिब पिब। मधु मधु मधु
घूर्ण घूर्ण घूर्ण। सीधु सीधु सीधु। पत पत पत ध्रु.

आलिङ्गनं देहि रे। अधरपानं कुरु रे।
नखक्षतं कुरु रे। शुक्रच्युतिं कुरु रे १

देहि देहि बाहुबन्धनम्। दश दश पल्लवाधरम्।
आरोहरोह नितम्बम्। चुम्ब चुम्ब रागकपोलम्। २

पश्य पश्य मे कुचभारम्। स्पर्श स्पर्श मे कचभारम्।
पश्य पश्य मे ऊरुभारम्। भ्रम भ्रम मे पादपीठम्।। ३

( इति सा हेला नृत्यन्ती सर्वेषां सकाशं समागच्छति चेष्टादिकं करोति। सर्वे करतल ध्वनिं कुर्वन्ति, कश्चन मुखवेणु नादयति )

**स्मितः** — हेलानाटयं अतीव सुन्दरं वर्तते।

**शर्मा** — ( विहस्य ) एतत् पिशाच गानं पिशाच नाटयं अतीव जुगुप्साकारकं शिरोवेदना मूलभूतम्।

**षण्मुखः** — शर्मन् त्वं अतीव प्राचीन भावनुयायी पाषण्डः। भवान् जानाति खण्डनं न तु मण्डनम्। अधुना अहं ज्ञातोऽस्मि।

**शर्मा** — अयि भोः मित्रवराः अत्र अस्मिन् नाटये आङ्गिकाहार्य वाचका-भिनयानां सन्निवेशः नास्ति कथं इदं नाटयं भवति। युष्मदीय मते अर्धनग्न सुन्दरी यदि नर्तिष्यति तर्हि तत् नाटयं भवति। मम मते इदं नाटयं नहि इदं केवलं कामपि-शाचस्य नाटयम्। एषा कामुकी रूपाजीवा न तु नर्तकी। नात्र विद्यते ममलेशोऽपि आदरः। एवं इदं नाटयमिति प्रदर्शयित्वा व्यापारिणः कामुकाः धनं लभन्ते। अनया पद्धत्या एते कामुकाः व्यापारिणः भारतीय जीवनं नाशयन्ति। जनाः अविचार्य एता-

दृशं विलोक्य कामलोलुपाः भूत्वा स्वीय कुटुम्बं नाशयन्ति। देशः संकरः भवति कामुक भाव संपन्नः भवति। धिक् आधुनिकता जीवनम्।

**स्मितः** — भवतुनाम का हानिः। जनाः सुखमनुभवन्ति आनन्दमनु भवन्ति। कलानां अन्ततः आनन्ददायित्वमेव परमावधिः खलु।

**शर्मा**: — एवं यदि स्यात् भारतीय परम्परायाः हानिः भविष्यति। कालक्रमेण देशे सर्वे कामुकाः व्यापारिणः भविष्यन्ति। देशः अल्पहिन्दु संयुक्तः भविष्यति यत्र अधिक धार्मिकाणां भवितुं शक्यते। तस्मात् भारतीय कला संस्कृति रक्षणं भारतीयानां कर्तव्यमिति मे मनीषा। एतादृश कामपरीत व्यापारः क्षुल्लक नाटयकला च देशं नाशयिष्यतः। यत्र कालासु दिव्यत्वं न दृश्यते सा कला नहि भवतीति भारतीयानां साम्प्रदायः। तस्मात् सर्वत्र भक्तिभावं मेलयित्वा ते संस्कृति रक्षणमकुर्वन्। एतादृशी पवित्र भावना क्षुल्लकानां अल्पकानां देशद्रोहिणां न भवति।

**स्मितः** — एतत् सर्वं नाटयशास्त्रे भागः एव।

**शर्मा** — भवन्तः अन्य देशीयाः। संस्कृतं भवन्तः जानन्ति किन्तु तत्र आत्मा भवद्भिः न ज्ञातः। यूयं अर्थात् भारतभिन्न देशीयाः। प्रथमतः आरभ्य व्यापारिणः एव। भौतिकादन्यत् विद्यते न किमपि। पश्यत एक गानेन यदि संगीतं भवति, एक नृत्तनेन नाटय भवति सर्वमपि शास्त्रं निरर्थकं भवति। एतत् सर्वं अल्पज्ञानांमतम्। तत् मे न रोचते।

**स्मितः** — नाहं अवगतोऽस्मि का ते भावना इति।

**शर्मा** — प्राचीन भारतीय संस्कृतिः सकल विद्यानां समवायः। सः एव आनन्दस्य हेतुः भवति।

**षण्मुखः** — भवादृशाः विरलाः लोके।

**शर्मा** — एतादृशी भावनाभूषिताः बहवः सन्ति। यूयं द्रष्टुं अशक्ताः अभवन्।

**स्मितः** — आन्ङ्ग्लभाषां विना केवलं संस्कृतपठनेन विश्वव्याप्त भावना न भवति।

**शर्मा** — विश्वव्याप्तभावना संस्कृत पठनेन केवलं भवति नत्वन्यथा।

**गन्धर्वः** — तत् कथम्।

**शर्मा** — संस्कृतात्मा सर्वत्र आत्मानमेव पश्यति। अन्तर्बहिश्च तत् सर्वं व्याप्यनारायण स्थितः। एतादृशी भावना गीर्वाणभाषापठनेन भविष्यति नत्वन्यथा। आन्ङ्गलभाषा विश्वभाषासु एका।

**स्मितः** — अन्या विश्वभाषा विद्यते किम् ?

**शर्मा** — विश्वभाषा केवलं सुरभाषा एव भवति। आङ्ग्ल भाषातु व्यवहार भाषा भवति। भारतीय संस्कृति अवगाहनाय संगीत नाटय साहित्य इत्यादि ललित कलानां आनन्दानुभवाय, सकल शास्त्रज्ञान संपादनाय गीर्वाण भाषा ज्ञानस्य आवश्य-कता भवति। जागतिक विषय ज्ञानार्थं आङ्ग्ल भाषा अत्यावश्यकी। तस्मात् एते द्वे भाषे दृगिन्द्रिय समाने। प्रत्येक मानवस्य एते द्वे भाषे पर्याप्ते भवतः।

**षण्मुखः** — शर्मन् भारतवर्षे बहवः पदवीधराः विश्वविद्यालय प्रमाणपत्र धारकाः विभिन्न शाखासु निष्णाताः वर्तन्ते। किं ते पण्डिताः न भवन्ति।

**शर्मा** — पाण्डित्यं यदि प्रमाणपत्रेण भवति तर्हि भारते सर्व शाखासु विभिन्न विषयेषु विद्यमानाः सर्वे पण्डिताः भवन्त्येवा तद संभवम्। वयं सर्वे प्रमाणपत्र धारकाः उदरपोषणार्थं। किन्तु एषा सुशिक्षणा न भवति। या विद्या देशसंस्कृतिमुद्दिश्य न कथयति सा विद्या निरर्थका। सा विद्या न भवति। ते पौराः देशभक्ताः न भविष्यन्ति संस्कृति प्रेमिकाश्च न भवन्ति।

**स्मितः** — शर्मन् भवता प्रतिपादितं अङ्गी करोमि। अद्य प्रभृति अहमपि गीर्वाणं सम्यक् पठित्वा भारतीय संस्कृतिं अवगाहनं कर्तुं प्रयतिष्ये। देशभाषया देशीय जीवनं अवगाहितुं शक्यते।

**गन्धर्वः** — तस्मात् देशभाषां हिन्दीमकुर्वन्।

**शर्मा** — समस्त राष्ट्रस्य एका राष्ट्रभाषा अत्यावशकी विद्यते इति मत्वा, अपि च हिन्दी भाषा सर्वेषामपि सुलभ तया अवगाहनं भविष्यतीति राष्ट्रभाषा स्थानं अय-च्छन्। किन्तु राष्ट्रस्य परम्परा जीवनं तस्यां भाषायां नास्ति। भारतीय सांस्कृतिक भाषा गीर्वाण भाषा। भारतीय सामान्य जनानां संपर्क भाषा हिन्दी भाषा।

**स्मितः** — प्रपञ्चविज्ञानविषय स्वीकारार्थं आङ्ग्लभाषा।

**षण्मुखः** — सुलभ पद्धत्या सत्वरावगाहनाय मातृभाषा ज्ञानं आवश्यकं भवति।

**स्मितः** — संहत्य चतस्त्रः भाषाः अवश्यं पठनीयाः सन्ति।

**गन्धर्वः** — बालकानां अतीव भारहेतुः भवति एषा पद्धतिः।

**शर्मा** — तस्मात् अहं वच्मि सर्वत्र भारतवर्षे प्राथमिक शिक्षणा मातृभाषायां माध्यमिक शिक्षणादारभ्य आंङ्ग्ल गीर्वाण भाषयोः शिक्षणा भवितव्या इति मे मतिः।

**स्मितः** — संस्कृताग्ल भाषे अनिवार्यत्वेन विश्वविद्यालय पर्यन्तं ?

**शर्मा** — हां तावत्पर्यन्तम्।

**स्मितः** — शर्मन् तव कल्पना सम्यक् विद्यते। मध्ये हिन्दी भाषामानीय भाषा समस्यां जटिलां अकुर्वन्।

**शर्मा** — प्रान्तीय भाषापेक्ष्या प्रादेशिकमानुषापेक्ष्या भारतीयः प्रथमः। भारतीय भाषा प्रथमा। तस्मात् भारत राष्ट्र जीवनार्थं संस्कृतमावश्यकम्।

**षण्मुखः** — शर्मन् भवान् मूर्तीभूत भारतीय संस्कृति रिवाभाति।

**शर्मा** — अहं केवलं देशभक्तः देशं देश संस्कृतिं, संस्कृतंच रक्षयितुं इच्छामि।

**स्मितः** — अरे बाल।

**बालः** — एषोऽस्मि।

**स्मितः** — एकं गोल्डु फ्लाक्मानय।

**बालः** — हां भोः।

**स्मितः** — अधुना नव घण्टावादन समयः।

**शर्मा** — घण्टात्रयं अत्रैव कालयापनं कृतम् अस्माभिः।

(आकाशवाणी श्रूयते वार्ताः। इयं आकाशवाणी वार्ताः श्रूयन्तां प्रवाचिका विजयश्रीः एकोन विंशत्युत्तर चतुरशीति संवत्सरादारभ्य भारत राष्ट्रभाषा संस्कृत भाषा भविष्यतीति भारत शासनस्यादेशः। तदा प्रभृति सर्वासु शालासु विद्यालयेषु विश्व विद्यालयेषु सर्व शाखासु गीर्वाण प्रश्नपत्रं अनिवार्यत्वेन स्थापनीयं इति शासनस्यादेशः।

स्मितः — शर्मन् अहं त्वां अभिनन्दामि तव स्वप्नः फलितः।

सर्वे — सरकारः जिन्दाबाद। शरदां शतं जीवेत्।

शर्मा — (कुर्च्यां निश्चेष्टः उपविष्टः।)

षण्मुखः — किं भोः शर्मन् किमर्थं मौनमवलम्बसे। एतावत्पर्यन्तं भाषणं कुर्वन् अधुना स्तब्धोऽसि।

गन्धर्वः — एतत् आनन्दस्य पराकष्टालक्षणम्।

शर्मा — "रात्रिर्गमिष्यति भविष्यति सुप्रभातम्"।

स्मितः — शर्मन् नीचैर्गच्छत्युपरिच दशा चक्रनेमि क्रमेण। भवान् अस्माकं सर्वेषां चन्दनं कुरु।

शर्मा –– अरे बाल सर्वेषां हिमपुटिकां आनय।

बालः — हां आनयेयम्। (इति गच्छति)

व्यवस्थापकः — अयि भोः मित्रोत्तमाः अधुना सार्धनवघण्टा परिमितकालः समासन्नः भवति। पानशालायाः कवाटबन्धनं विधीयते। अद्य अस्मदीय पानशाला चारित्र्यात्मक संघटना भूषिता अस्ति। भारतीय राष्ट्र भाषा संस्कृत भाषा संजाता। इयं वार्ता अत्र पानशालायां श्रुतं अस्माभिस्सर्वैरपि, तस्मात् मे परमानन्दः समजनि। इतः परं इयं पानशाला पानशाला एव भविष्यति विनाच मादकता पेयम्। श्वः प्रभृति अत्र केवलं फलरसानां पेयं लभिष्यति। नत्वन्यत्। नाटचंतु भरतनाटचं कूचिपूडिनाटचं इत्यादि भारतीय पद्धत्या विराजमान नाटचादिकं भविष्यति। शुभरात्रिः।

## गीतम् (भैरवी रागे)

शर्मा — भुवि मे तिष्ठतु निर्मल जननी गीर्वाणी
कमलासन वदन प्रसारित परिमल सरणी ध्रु॰

वेद चतुष्टय वर्णित पावन रमणि
स्फाटिक निर्मल विलसित वीणापाणी
निर्जर वल्लभ त्रिदिवश्शासन पूतावाणी
नूनं भवति च शाश्वत भारत वाणी १

अनन्तोपनिषद् ब्राह्मण पूर्णा सुरवाणी
शीतल नगसेतु विशाले भुवि मन्जुल राज्ञी
प्राचेतस कविबर कीर्तित रामायण चित्रितवाणी
पाराशरमुनि विस्तारित भारत गीता वाणी २

पतञ्जलि पाणिनि वररचि कात्यायन संस्कृतवाणी
षडङ्गाकुल पातञ्जल योगायुर्वेदावृतस्ववर्वाणि
भास्कर मिहिर कुलार्चितागणित गणिता वाणी
निगमागम पदचय पूरित पारंपर्येणागतावाणी ३

भास कालिदास मायूरकदण्डि माघसंपूजित चरणा
भवभूति बाण मुरारि भारवि कीर्तित सुस्थिर चरिता
भरत प्रशिक्षित लीला हेवा नाट्यान्वित विभ्रमरुपा
जगन्नाथानन्द मम्मट विश्वनाथ भूषित रम्यालङ्कारा ४

लोके भाषा संवर्धन मूलापयोधररुपा जननी
भारत गौरव जीवन संस्कृति विद्या संदायिनी
शङ्कर रामानुज मध्वोदित वेदान्तावृत जीवन शालिनी
बिलसतु मे देशेऽच्युत भारतवाणी गीर्वाणी ५

मुनिजन पदगण जीर्णित देहा मे वाणी
अस्थिर रुपास्थिर भारत जीवन संजीविनी
अपगत गौरव जीवन दायिनी मधुसुरवाणी
नूनं भवति च भारत शासन वाणी नान्यावाणी ६

।। जय भारत ।।

(यवनिका पतति)



# ॥ प्रेमपरीक्षा ॥

( व्यवस्थापकः रङ्गमञ्चोपरि ध्वनियन्त्रं हस्ते गृहीत्वा )

अयि भोः सामाजिकाः अद्य वयं प्रेमपरीक्षा नाम नाटकं प्रदर्शयितुं उद्युक्ताः। आधुनिक प्रपञ्चे केचन युवकाः, युवत्यः वक्रमार्गे नेतुं स्वीय हृदय भावनां मधुर भावनारूपेण दर्शयित्वा ताः अनुभोक्तुं प्रयतन्ते। तेषां हृदयस्य भावनां परीक्षितुं युवत्यः अशक्ताः भवन्ति। केचन युवकाः सत्यं मनसा अनुरूपवत्यः युवतीः परिणेतुं अभिलषन्तः तेषां भावनां प्रकटी कर्तुं संकोचात्मानः भवन्ति। युवत्यः पुरुषान् परीक्ष्य तैस्साक परिणीताः भवितव्याः इति अनेन नाटकरूपेण प्रदर्शितं आसीत्। अस्य नाटकस्य कर्ता गीर्वाणान्ध्र भाषाप्रवीणः गेयचक्रवर्ती संस्कृत महाकविः पण्डित परीक्षित् शर्मा। अस्य कविता अतीव सरळा सर्व जनानानुमोदिनी। विंशति तम शताब्दे अयं सप्तविंशति नाटककर्ता। अस्य नाटकसमुदायस्य नाम परीक्षिन्नाटकचक्रम्। नाटकं दृष्ट्वैव भवन्तः अस्य कवेः भाषा सौन्दर्यं पात्र चालनदक्षतां च ज्ञास्यन्ति। नमांसि। ( इति निर्गच्छति )

( यवनिका अपसार्यते )

( रङ्गमञ्चे कामाक्षी ( माता ) सुन्दरी ( कुमारी ) स्तः। सुन्दरी कुर्च्यां उपविश्य टेबुलोपरि पत्र निचयं संस्थाप्य किमपि लिखन्ती आस्ते। कामाक्षी गृहकृत्यं कुर्वन्ती इतस्ततः वस्तुनिचयं सारयन्ती आस्ते )

**कामाक्षी** — सुन्दरि।

**सुन्दरी** — हाँ मातः।

**कामाक्षी** — अधुना दशघण्टाः अभवन्। त्वं कदा गमिष्यसि विद्यालयम्।

**सुन्दरी** — मे लेखन कर्म समाप्तं। अधुना गच्छामि। ( इत्युत्थाय स्कन्ध लम्बिनि गोण्यां निक्षिपति )

**कामाक्षी** — सुन्दरि, पाथेयपात्रं गृहाण। (इति अन्तः गच्छति आनेतुम्)

**सुन्दरी** — मातः।

**कामाक्षी** — परावृत्य) हां किम्।

**सुन्दरी** — मातः अद्य पाथेयपात्रं मा देहि।

**कामाक्षी** — किमिति।

**सुन्दरी** — अद्य शनिवासरः। अद्य एकघण्टावेलायां विद्यालयबन्धनं भवति।

**कामाक्षी** — विद्यालय बन्धनानन्तरं भोजनं कुरु पाथेयपात्रं गृहाण।

**सुन्दरी** — अद्य भोजनं मास्तु।

**कामाक्षी** — विना च भोजनं कथं। किमर्थमेवं वदसि अद्य।

**सुन्दरी** — अद्य मे एकस्य सहाध्यायिनः जन्मदिवसः भवति। वयं सर्वे सहाध्यायिनः मिलित्वा तस्य गृहं द्विघण्टावादन समये भोजनार्थं गमिष्यामः।

**कामाक्षी** — पुनरागमनं कदा।

**सुन्दरी** — पुनरागमनं सप्तघण्टावादन समये। (इति स्त्रीयालङ्करणं सम्यक् विधाय पादत्राणे धरति)

**कामाक्षी** — इयन्तमालस्यं किमर्थं भवति।

**सुन्दरी** — जननि, भोजनानन्तरं सन्ध्यासमये सार्धं पञ्चघण्टावादन समये सर्वेषां समक्षं जन्मदिवसदीपसभारम्भः भविष्यति। तदा यत्किमपि तस्मै उपायनमिव दातव्यं अस्ति। तस्मात् वयं विद्यार्थिन्यः समाहृत्य यत्किमपि वस्तु तस्मै दातुं उद्युक्ताः अभवाम। तदर्थं तद्वस्तुक्रेतुं विपणी गन्तव्यं विद्यते।

**कामाक्षी** — जगति एवं प्रथा विद्यते जन्मदिवसि यत्किमपि उपायनमिव दातव्यं इति।

**सुन्दरी** — तस्मात् वयं विद्यार्थिन्यः मे सखी वल्लरी इत्यादयः सन्ध्यासमये

विपणीं गत्वा ऊर्णवस्त्रं वेषार्थं क्रीत्वा आनयेम। सप्तघण्टावादनपर्यन्तं तत्रैव वयं स्थास्यामः।

**कामाक्षी** — एकैकस्य अंशदानं कियत् भवति।

**सुन्दरी** — एकैकस्य अंशदानं पञ्चतिरूप्यकाणि भवन्ति।

**कामाक्षी** — गच्छ। अप्रमत्ततया चलनं तरणं च कर्तव्यं रथ्यासु। यातायातया न विषयं लक्षीकृत्य व्यवहर।

**सुन्दरी** — तथैव मातः। ( इति गोणीं गृहीत्वा निर्गच्छति )

**कामाक्षी** — ( वस्तुचयं स्वच्छीकृत्य निक्षिपति अन्तः गच्छति )

( ततः प्रविशति भास्करः धूम्रपानवर्तिमुखः सः पादत्राणौ त्यक्त्वा शयन कुर्च्यां उपविशति )

**भास्करः** — हञ्जे कामाक्षि। ( इति आह्वयति )

**कामाक्षी** — ( प्रविश्य ) किं भोः एषास्मि कथयन्तु।

**भास्करः** — इतः एहि।

**कामाक्षी** — ( समीपमागच्छति ) किम् विद्यते रहस्यम्।

**भास्करः** — उपविश।

**कामाक्षी** — ( एकं त्रिपाद पीठं आनीय उपविशति )

**भास्करः** — किं श्रुतं भवत्या।

**कामाक्षी** — किमिति।

**भास्करः** — त्वया न श्रुतम्।

**कामाक्षी** — बत कथयतु भवान् सत्वरम्।

**भास्करः** — त्रिपाठी, पुत्रस्य विवाहं विनिश्चितवान्।

**कामाक्षी** — भवन्तः कथं जानान्ति।

**भास्करः** — मया अधुनैव ज्ञातम्।

**कामाक्षी** — केनोक्तम्।

**भास्करः** — त्रिपाठिनां।

**कामिक्षी** — तेन स्वतः उक्तम्।

**भास्करः** — हाँ स्वतः तेनैवोक्तम्।

**कामिक्षी** — कदा।

**भास्करः** — अधुना ममागमनसमये मे संमुखमागत्य नमस्कृत्य अयि भोः भास्करमहोदय किं ते कुमार्याः विवाहः न निश्चितः किं एतावत्पर्यन्तं, इति मां अपृच्छत्। एतावत्पर्यतं न निश्चितमिति मया उक्तम्।

**कामिक्षी** — तदा किं प्रत्युत्तरं दत्तं तेन।

**भास्करः** — तदा सः अवोचत् तस्य कुमारस्य विवाहः विनिश्चितः इति।

**कामिक्षी** — कुमारस्य विवाह निश्चये न किमपि कष्टं भवति। विद्यते खलु तस्य पुत्री, यदि तस्याः विवाहः निश्चितः भवति तर्हि अयं अदृष्टवान् महत् कार्यकर्ता भविष्यति।

**भास्करः** — सः अघटन घटनासमर्थः सः करिष्यति।

**कामाक्षी** — हां सत्ययेव सः अस्मादृशः नहि।

**भास्करः** — व्यङ्ग्य कथनं प्रारब्धं किम्।

**कामाक्षी** — नहि नहि। कुत्र विनिश्चितं अस्ति।

**भास्करः** — मद्रपुर्यां। ( मद्रासनगरे )

**कामाक्षी** — किं सा पदवीधरा।

**भास्करः** — हां सा वास्तुशास्त्रज्ञा। तत्रैव अशासकीय कर्मागारे कर्म करोति। तस्या मासिकवेतनं सहस्रद्वयमितिच प्रोक्तम्। सा तमिल मातृभाषिका।

**कामाक्षी** — त्रिपाठी महोदयः औत्तराही खलु।

**भास्करः** — हां सः औत्तराही।

**कामाक्षी** — एकः उत्तरध्रुवीयः अपरः दक्षिणध्रुवीयः द्वयोर्मध्ये महदंतरं विद्यते विवाहः कथं भविष्यति।

**भास्करः** — अधुना तादृश विभागः नहि। वयं भारतीयाः भारतीय संस्कृति प्रेमिणः। संस्कृतिज्ञाः। सर्वमपि भारतवर्षं एकमेव। विशिष्य ब्राह्मणानां संस्काराः आचारव्यवहारादयः एकसूत्रिताः भवन्ति। एतौद्वावपि ब्राह्मणौ।

**कामाक्षी** — अयं दक्षिणात्यः अय्यरमहोदयः त्रिपाठी औत्तराही कथं संबन्धः भविष्यति।

**भास्करः** — ( उत्थाय ) कामाक्षि त्वं अतीव पूर्वाचार परायिणी असि। शृणु भारतवर्षे आसेतुहिमाचलं सर्वे भारतीयाः एव। विशिष्य ब्राह्मणानां भावना वेदान्त सूत्रबद्धा। तस्मात् त्रिपाठीअय्यर महोदययोः समागमः शास्त्रबद्धएव।

**कामाक्षी** — गृहे ते विभिन्न भाषाः भाषन्ते। कथं हृदयाभिप्रायं अन्योन्यं ज्ञास्यन्ति।

**भास्करः** — हृदयभाव व्यक्तीकरणार्थं प्रथमतः दयार्द्रहृदयं विद्यते। द्वितीयं भारतीय संस्कृति भाषा संस्कृत भाषा विद्यते। तृतीयं प्रपञ्चभाषा आङ्ग्लभाषा विद्यते। व्यवहारभाषा हिन्दी विद्यते। एतत् भिन्नं किमपेक्ष्यते कथय।

**कामाक्षी** — अधुना भवतः हृदयं मम ज्ञातं आसीत्। एतादृश भावना परीतः भवान् स्वकुमार्याः विवाहकरणे विलम्बं कथं कृतवानसि। अहं बहुवारं कुमार्याः विवाहः करणीयः इति अवोचम् भवान् न श्रुतवानस्ति। एतादृशी भारतीय संस्कृति प्रेमिकः कुमार्याः विषये आस्थां दर्शितवान् इति अहं कथयामि।

**भास्करः** — त्वदुदीरितं सत्यमेव किन्तु त्रिपाठी अतीव धनसंपन्नः। अपिच अस्मदीय पुत्री एम्. एस. सी. पठति इति निर्लक्ष्यमकरवम्।

**कामाक्षी** — पश्य एतावत्पर्यन्तं भवता न किमपि कृतम्। भवान् व्यवहारानभिज्ञः।

**भास्करः** — कामाक्षि विवाहविषये समानशीलता समान आहार व्यवहारः युक्तो भवति इति मे अभिप्रायः।

**कामाक्षी** — अधुनैव भवता प्रोक्तं खलु वयं भारतीयाः एक संस्कृति सूत्रबद्धाः इति।

**भास्करः** — तत् सत्यमेव । श्रीमतां न किमपि कष्टं भवति । सर्वमपि मध्यम कुटुम्बीकानां कठिनं भवति इति मया अवगतम् । तस्मात् अहं माध्यस्तमबलम्बितोस्मि श्रृणु ।

**विरोधे च विवाहेपि । स्नेहेच समता सदा ।**
**पालनीयास्ति लोकेस्मिन् । सज्जनैस्संघवादिभिः ।**

अस्मदीय सुभाषिणी शतथा सुन्दरी तस्यै सुन्दरः कुमारः द्रष्टव्यः विद्यते न तु अत्यन्त श्रीमान् ।

**कामाक्षी** — त्वं सर्वदा एवमेव कथयसि ।

**भास्करः** — कथने किं विद्यते । विवाहस्य समयः समासन्नः भवितव्यः विद्यते ।

**कामाक्षी** — भवान् विचार्य सत्वरं सुन्दर्याः परिणयं समाचरतु ।

**भास्करः** — एषु दिवसेषु एषा यं कामयते तेन साकं विवाहं कर्तुं अहं उद्युक्तः अस्मि । वरमार्गणं न योग्यं भवति ।

**कामाक्षी** — मांस भक्षणेनापि विवाहः निर्णीयते ।

**भास्करः** — नहि । योग्येन येनकेनापि ब्राह्मण कुमारेण केवलम् सः यदि शाकाहारी भवति तदेव नोचेत् नहि ।

**कामाक्षी** — असंस्कारेणापि ।

**भास्करः** — तथा नहि यदि सः शाकाहारी भवति अपिच संस्कृति सभ्यताज्ञः अपिच भारतीय परम्परा प्रेमिकः अधुनातन जीवने वसन्नपि प्राचीन मार्गे जीवन संलग्नः भवति तर्हि, तदैव सुन्दर्याः विवाहं करिष्यामि न त्वन्यथा ।

**कामाक्षी** — वंशानुरोधेन गुणाः भवन्ति । वंशाचारः कुलाचारः नत्यक्तव्यः अस्ति ।

**भास्करः** — तदेवाहमपि चिन्तयामि । ( किञ्चित् विचार्य ) हां सुन्दरी गृहेनास्ति किम् ।

कामाक्षी—नास्ति, अद्य सा मित्रस्य जन्मदिवसार्थं मित्रगृहं गतवती।

भास्करः — कदा प्रत्यागमिष्यति।

कामाक्षी — सप्तघण्टावादन समये।

भास्करः — कामाक्षि, आधुनिकाः युवकाः संस्कारहीनाः निर्गन्ध कुसुमाः इव वर्तन्ते। समाजे सावधानतया व्यवहर्तव्या इति तां प्रति कथय।

कामाक्षी — अहं उक्तवती। सा न एकाकी गता तस्याः सखीभिः गता। अत्र चिन्ता न कार्या।

भास्करः — (उत्थाय) हञ्जे अद्य शाकपाकादिकं किं कृतम्।

कामाक्षी — वार्ताकिशाकः सूपः पोळिकाः ओदनं पायसान्नंच कृतानि वर्तन्ते।

भास्करः — वार्ताकिशाकः। अरे बा।

कामाक्षी — कदापि न भुक्तं किं वार्ताकम्।

भास्करः — बहुवारं भुक्तम्। तव किं ज्ञायते वार्ताकस्य स्वादुता।

कामाक्षी — नाहं जाने वार्ताकस्य स्वादुताम्।

भास्करः — श्रृणु। वार्ताकस्य स्वादुता वृन्तमूले, वनितायाः स्वादुता ऊरमूलेच वर्तेते इति रसिकानां समयः अस्ति।

कामाक्षी — (त्रपया हस्तेन मुखं पिधाय) भवान् वृद्धोऽपि कुमारायसे।

भास्करः — सर्वेऽपि वार्धक्ये कुमारायन्ते। चल अन्तः चल।

कामाक्षी — स्तब्ध निमेष पञ्चकम्।

भास्करः — बुभुक्षा मां पीडयति। भोजनं देहि कामाक्षि घृतसूप समन्वितम्। (इति अन्तः गच्छति कामाक्षी अपि अन्तः गच्छति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(सुन्दरी, वल्लरी, अनिलः, भार्गवी, अबिनाश, प्रभृतयः कुर्चीषु उपविष्टाः। एकस्मिन् टेबूल्यां केक् अपि च मेनवर्ती दीपिकाः वर्तन्ते सर्वेपि उपविष्टाः सन्ति)

**अविनाशः** — अयि भोः सुहृद अद्य मे पञ्चदशीय जन्मदिवसोत्सवे मम मैत्रिणी सुन्दरी गायनं करिष्यति। (सर्वेऽपि करतालध्वनिं कुर्वन्ति)

**सुन्दरी** — अरे अविनाश अत्र बह्वः सन्ति ते न गायन्ति किम्:

**अविनाशः** — अहं तव गानं अभिलषामि।

**सुन्दरी** — मया गातव्यं किम् ?

**अविनाशः** — त्वं सुन्दरी खलु। तवागमनेन अयं समारम्भः परिपुष्टिं प्राप्तः। तव गानामृतेन सर्वत्रापि मरन्दसेचनं भविष्यति।

**सर्वे** — हां सत्यमेव सुन्दरी गायस्व भवती।

**भार्गवी** — बाले सुन्दरी मम पुत्रस्य जन्मदिवसि तव गायनमेव योग्यं शोभामयंच भवति इति सर्वेषां मतम्।

**सुन्दरी** — मातृसमाना भवती कथयसि, हां सत्यं अवश्यं अहं गास्यामि।

**गीतम् (कल्याणी रागे)**

तव जीवनं सुखजीवनम्
भूयात् सदा कामितम्
शान्ति सुख पूरितम्
प्रेमभाव लता वेष्ठितम् ध्रु,

मित्र हृदय भावसून मण्डितम्
मधुर प्रेमरसाभि वर्धितम्
राजतेतरां शताब्दसीमितम्
वसतु भवान् मुदा निरामयम् १

सर्वं सुहृद मनोभिलाषितम्
शान्ति सौख्य विलासितम्
भस्वतु लोक संजीवनम्
लसतु जगति शरदां शतम् २

**भार्गवी** — बाले सम्यक् गीतं भवत्या। त्वं सर्वथा सुन्दरी। (इति तां स्वीय हस्तेन मस्तकं स्पृशति)

(अविनाशः दीपिकाः मुखवातेन प्रशामयति सर्वेपि करताल ध्वनिं कुर्वन्ति। अविनाशः मुष्टिधारया केकुं कटति एकैकः केकुं नीत्वा अविनाशाय यच्छति। अविनाशः एकं केकुं खादति सर्वान् नेतुं आदिशति। सर्वोपि केकुं गृहीत्वा अरे अविनाश शरदां शतं जीवतु भवान् इति आर्शीर्वादन् यच्छन्ति।

**अविनाशः** — (सुन्दर्याः समीपं आगत्य) सुन्दरि त्वं सत्यमेव गायनेऽपि सुन्दरी असि। तव गानेन मे जन्मदिवसः परिपूर्णतां गतः। त्वं आगत्य मे जन्मदिवसः कार्यक्रमं सौन्दर्यपूर्णं कृतासि।

**सुन्दरी** — अरे अविनाश, कृतार्थास्मि तव प्रशंसया। मम जीवने अहं ते अप्रियं न करिष्यामि। तव सन्तोषः एव मे सन्तोषः।

**अनिलः** — अरे अविनाश शतसंवत्सरं दीर्घमायुः भूयात् ते।

**सुन्दरी** — अरे अनिल ते जन्मदिवसः कदा।

**अनिलः** — आवयोः जन्मदिवसः एकस्मिन् वर्षैमासे भविष्यति। (सर्वेऽपि हसन्ति)

**सुन्दरी** — हञ्जे वल्लरि किं ते पतिः एतावत्पर्यन्तं नागतः। अद्य आगमिष्यति वा न वा ?

**वल्लरी** — त्वं गच्छ, अहं आगच्छेयम् इत्युक्तं तेन। नाहं जाने कुतः न आगतः।

**अविनाशः** — कार्यान्तरे निमग्नेन भवितव्यम्। तस्मात् आगतुं ना शक्नोत् इति मन्ये।

**वल्लरी** — हां तथैव संदृश्यते।

**अविनाशः** — सुन्दरि त्वया कथं गम्यते गृहम्।

**सुन्दरी** — अहं वल्लरीच बसयानेन उत त्रिचक्र यानेन गच्छेव।

**अविनाशः** — तथा मा गच्छ। युवां द्वावपि मम कारु याने गच्छतम्। अधुना सप्तघण्टाऽभूत्।

**सुन्दरी** — अरे अविनाश त्वं सर्वदा मद्विषये अतीव श्रद्धालु भवसि।

**अविनाशः** — सत्यं भवद्विषये मे अत्यन्य श्रद्धा विद्यते।

**भार्गवी** — बाले वल्लरी सुन्दर्यौ अधुना रजनी जाता भवत्यौ कारयानेन गच्छताम्। अस्यां रजन्यां युवतीनां गमनं न समीचीनं भवति। अयं प्रदेशः सर्वथा दुष्टशक्तिभिः कलुषितः। ( इति वल्लर्याः मुखेतिलकं निक्षिपति ताम्बूलं च ददाति अनन्तरं सुन्दर्याः फाले तिलकं निक्षिप्य तस्यै ताम्बूलं ददाति ) हञ्जे सुन्दरि सत्वरं त्वं कल्याणवती भव। ( इति आशीर्वादान् ददाति )

**सुन्दरी** — ( लज्जा विनम्रा ) वल्लरी एहि गच्छावः।

**अविनाशः** — अरे सिंग्।

( ततः प्रविशति सिंग् )

**सिंग्** — अयमस्मि भोः।

**अबिनाशः** — इमौ द्वे गृहं प्रापय कारयानेन।

**सिंग्** — बाढम्। (इति गच्छति )

**सुन्दरी** — जननि भार्गवि अरे अविनाश शुभरात्रिः। ( इति हस्तमुद्यम्य गच्छतः )

**अनिलः** — अरे अविनाश अहमपि ताभ्यां साकं गच्छेयम्।

**अविनाशः** — अरे अधुना ते अवसरः किम्। अधुना गृहं गत्वा किं करिष्यसि। उपविश किञ्चित्कालं अत्रैव इष्टागोष्ठिं कुर्याव।

**अनिलः** — अधुना गत्वा कविता कर्तव्या।

अविनाशः — अत्र कुरु कवितां। किञ्चित्कालं अत्रैव निवस लोकाभिरामायणं करिष्यावः।

अनिलः — हां वसेयम्। (इति कुर्च्यां उपविशति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(विश्वविद्यालयस्य पुरतः नारिकेळ वृक्षासमीपे अविनाशः अपिच सुन्दरी संभाषेते)

अविनाशः — हञ्जे सुन्दरि ह्यः तव गानं अतीव सुन्दरं जातम्।

सुन्दरी — न कोऽपि विशेषः अस्ति रे ह्यस्तन गाने। मम तत् गानम् साधारणं आसीत्।

अविनाशः — नहि ह्यः तव कण्ठे कलकण्ठ काकलींध्वनिविशेषः परमभूत्।

सुन्दरी — (विहस्य) अरे तव जन्मविशेषः खलु तस्मात् तव तथा आभासे।

अविनाशः — हसे सुन्दरी तव गायने कापि अनिर्वचनीय भावना मन्दं मन्दं किमपि उत कमपि शोधयन्ती मार्गयन्ती च आसीत्।

सुन्दरी — त्वं तथा मनुषे किम्।

अविनाशः — सुन्दरि त्वं मे जीवन सर्वस्वमिव ह्यः अथासथाः।

सुन्दरी — त्वमपि हयः नवमन्मथः इव दृष्टोऽसि।

अविनाशः — अहं त्वां परिणेतुं इच्छामि सुन्दरि का ते भावना।

सुन्दरी — (लज्जया) अरे अविनाश, किं वदसि रे त्वम्।

अविनाशः — हसे त्वया साकं भाषितुं तव गानं श्रोतुं अहं मे जन्मदिवसं अस्मिन् वर्षे व्यरचयम्।

सुन्दरी — ते प्रेमभावना परम स्तवनीया भवति।

अविनाशः — पुरुष प्रकृति विलसितोऽयं प्रपञ्चः। आवयोः समागमः गङ्गा सागर संगम सदृशः।

सुन्दरी — अरे अहमपि त्वयि लग्नमानसा संजाता।

अविनाशः — त्वामहं नित्यं पुष्पशय्यायां शाययित्वा सौख्योदधिं तारयेयम्।

सुन्दरी — अरे त्वं अतीव रसिकः। तव संगमेन अहं मां धन्यं मन्ये। त्वं एतादृश भावना भूषितः इति अधुना अवगतं मया।

अविनाशः — यत्र मनः रमते तत्र संगमः सख्यंच सौख्यं भजेते।

सुन्दरी — तत्र परिणयः सुखावसनं भविष्यति।

अविनाशः — साधु प्रतिपादितं भवत्या।

सुन्दरी — अहं सर्वं विचार्य कथयामि।

अविनाशः — मम जननी त्वां विलोक्य कैषा युवती मूर्तीभूत रतिरिव प्रतिभाति, तां द्रष्टुं पुनः पुनः मे मनः काङ्क्षते इति उक्तवती।

सुन्दरी — अहं त्वां कथयामि। अहं मम पितरौ मे निर्णयं उक्त्वा भवन्तं कथयिष्यामि।

अविनाशः — यदि आवयोः अङ्गीकारः भवति तर्हि पितरौ अवश्यं आवयोः कृतिमङ्गीकरिष्यतः।

सुन्दरी — प्रथमतः पितरौ निवेद्य अनन्तरं कथयेयम्। एतत् मम कर्तव्यं विद्यते।

**अविनाशः** — अहं तव संस्कारेण अतीव संतुष्टोस्मि।

**सुन्दरी** — अविनाश अधुना मम वर्गः प्रचलिष्यति गच्छेयम्।

**अविनाशः** — पुनः समागमः कदा।

**सुन्दरी** — पित्रोः अङ्गीकारानन्तरं समागमः भविष्यति। नमस्ते।

**अविनाशः** — ममापि वर्गः विद्यते अहमपि गच्छेयम्। श्रृणु अत्र वृक्षच्छायायामेव आवयोः समागमः सर्वदा भविता नमस्ते।

**सुन्दरी** — नमस्ते। ( इति निर्गच्छतः )

( यवनिका पतति )

* * *

## चतुर्थं दृश्यम्

( संध्यासमये सुन्दरी स्कन्धेलम्बमान पुस्तकगोण्या गृहं गच्छन्ती आस्ते तस्याः अभिमुखं अनिलः आगच्छति )

**अनिलः** — ( विलोक्य ) सुन्दरि !

**सुन्दरी** — अरे अनिल अहं त्वामुद्दिश्य चिन्तयामि।

**अनिलः** — मामुद्दिश्य चिन्तयसि कारणं किम्।

**सुन्दरी** — अयं सन्ध्यासमयः गृहगमनवेला अवश्यं आवयोः मेलनं भविष्यति अत्र इति।

**अनिलः** — सुन्दरि अविनाशस्य जन्मदिवसे त्वया गीतं गानं श्रुत्वा मे परमानन्दः अभूत्। तस्मिन् समये त्वया भाषितुं उद्युक्तोऽभवम्। किन्तु पार्श्वे वल्लरी विद्यते तस्मात् न किमपि भाषितोऽस्मि।

**सुन्दरी** — मयापि चिन्तितं त्वमपि अविनाशस्य कास्याने आवाभ्यां साकं आगमिष्यसीति, किञ्चित् संलापं करिष्यतीति।

**अनिलः** — अविनाशः अवोचत् अरे त्वं अत्रैव तिष्ठ किञ्चित्कालं इष्टागोष्टिं कुर्याव इति।

**सुन्दरी** — एवं जातं। भवतु नाम।

**अनिलः** — सुन्दरि त्वं मे हृदयसुन्दरी। त्वं मे हृदये सदा निवससि। अत्र कथं त्वं बहिः समागता नाहं जाने।

**सुन्दरी** — आहह। किं वदसि रे। त्वं सत्यं कविकुमारः।

**अनिलः** — अहं कविकुमारः एव। त्वामुद्दिश्य बहुगीतानि लिखितानि।

**सुन्दरी** — गायतु श्रोष्यामि। इति भूम्यां उपविशति)

**अनिलः** — श्रृणु। (इति भूमौ उपविश्य गायति)

**गीतम् (भीमपलास रागे)**

पठरे मनमोहन तरुणीकाव्यप्रपञ्चम्
अनुभव नित्यं रतिपतिभावनिकुञ्जम् ध्रु.

मन्मथ भावातप सान्द्र वितानम्
धरणीतल विचकित मरीचीजालम्
दर्शं दर्शं मे कामुक रागमयं चपलम्
धावति सारङ्गयित हृदयं तृष्णाकुलितम् १

किमिदं चित्रं किमिदं हृदयम्
केवल युवती सङ्गम चतुरम्
तरुणी हृदयाम्बर विहरित चन्द्रमसम्
जरा स्वर्भानुर्ग्रसति कदावा सम्पूर्णम् २

पिब रे मन रमणी मधुराधरसास्त्रम्
भज रे मन यौवत लास्याञ्चितरूपम्
स्मर रे मन परमानन्दावधिभूतं मणितम्
जप रे मन सुखकेन्द्रीभूतं यौवत निचयम् ३

एषा स्मर सङ्गर भौतिक भावना
अलौकिक मार्गण नान्दी स्मरणा
तरुणी स्तनभार पीवर सुषमाकामी
नूनं भवति च चरमे मोक्षदशागामी ४

सुन्दरी — अनिल सम्यक् कृतं गेयं अपिच अनुरुप रागेण च गीतम्।

अनिलः — सुन्दरि, केवल संलापेन प्रयोजनं न विद्यते त्वया सार्थं अहं जीवनं यापयितुमिच्छामि।

सुन्दरी — कथम्।

अनिलः — कथं किम्। विवाहेन।

सुन्दरी — अरे त्वं श्रीमान् असि। बह्वः ते परिणेयाः विद्यन्ते। अहं किमर्थम्।

अनिलः — यत् अहं त्वयि पश्यामि तत् अन्यत्र न विद्यते। त्व सर्व सुगुणराशिः असि।

सुन्दरी — अरे त्वं कवयसि। अतिशयोक्ति करोषि। सर्वोपि सर्वं भजते। सर्वमपि सर्वत्र विद्यते।

अनिलः — तथा मे न प्रतिभाति। यत् त्वयि अहं पश्यामि तत् अन्यत्र नास्ति।

सुन्दरी — अहमपि सर्वदा त्वामुद्दिश्य चिन्तयामि।

अनिलः — अहं त्वया सार्थं भाषितुमुद्युक्तोऽस्मि बहुवारं किन्तु समयः न समापन्नः।

सुन्दरी — अधुना समयः समापन्नः। (इति हसति)

अनिलः — सुन्दरि ते हसने अहं पुष्पगुच्छान् फेनिलंच अपिच चन्द्रिकांच विलोकयामि।

सुन्दरी — अरे। (इति अनिलं पश्यति लज्जा मन्थराभाति)

**अनिलः** — सुन्दरि, लज्जायां त्वं अतीव सुन्दरी भाससे। नारीणां भूषणं लज्जा इति प्रोक्त पूर्वसूरिभिः।

**सुन्दरी** — विलम्बः संजातः गच्छेयमहम्।

**अनिलः** — एहि मम कारुयाने अहं त्वां गृहे विसृजेयम्

**सुन्दरी** — नहि रे अहं बसयानेन गच्छेयम्।

**अनिलः** — पुनः ह्यः समागमः अत्रैव भविष्यति नमस्ते। (इति गच्छति)

**सुन्दरी** — नमस्ते। (इति गच्छति)

(यवनिका पतति)

* * *

## पंचमं दृश्यम्

(वल्लर्याः गृहं तत्र अनिलस्य माता मैथिली, वल्लर्या सार्धं उपविश्य संलपन्ती आस्ते)

**मैथिली** — वल्लरि अनिलः सदा त्वामुद्दिश्य ते मैत्रिणीं सुन्दरीमुद्दिश्य मे कथयति।

**वल्लरी** — वयं सर्वे एक कक्ष्या विद्यार्थिनः। ततः सा एवं कथयति।

**मैथिली** — सदा सुन्दरीं उद्दिश्य मे कथयति यत् तादृशी युवती विश्वविद्यालये न कुत्रापि संदृश्यते इति।

**वल्लरी** — अनिलः यत् कथयति तत् सत्यम्। सा अतीव सुन्दरी।

**मैथिली** — एतावत्पर्यन्तं तस्याः विवाहः न कृतः कारणं किम्।

**वल्लरी** — मातः मैथिलि, भवती कथयसि, सा अतीव सुन्दरीति तव पुत्रः सर्वदा तस्याः सौन्दर्यं वर्णयित्वा कथयतीति तस्याः अनुरूपः वरः लभ्यः यदि भविष्यति तर्हि अवश्यं विवाहः भविष्यत्येव।

**मैथिली** — तस्याः पितरौ न प्रयतेते किम्।

**वल्लरी** — प्रयतेते किन्तु तयोः पित्रोः सुन्दर्याः विवाहविषये न किमपि आग्रहः विद्यते। यदि कन्यावरयोः अङ्गीकारः भवति तर्हि तयोः इच्छानुसारं तौ दम्पती सुन्दर्याः विवाहं करिष्यतः इति एकदा तस्याः पितरौ अवोचताम्।

**मैथिली** — आधुनिकेषु दिवसेषु तथा करणमेव वरं भवति।

**वल्लरी** — उपविश अहमधुनैव चहपानादिकं आनयेयम्!

**मैथिली** — अहं करिष्यामि चहां आवां स्वयंपाक गृहं प्रविशावः एहि। (इति उत्तिष्ठतः)

(कवाट ताडनम् आह्वानघण्टानादौच भवतः) वल्लरि त्वं स्वयंपाक गृहं प्रविश। अहं कवाटमुद्घाटयिष्यामि। (इति कवाटं उद्घाटयति)

(ततः प्रविशति सुन्दरी)

**सुन्दरी** — नमस्ते इति। (मैथिल्यै नमस्करोति) नमस्ते वल्लरि। (इति वल्लर्यै नमस्करोति)

**वल्लरी** — (सन्तोषेण) हसे सुन्दरि हठात् त्वं कथमागतासि अत्र। (इति तस्याः हस्ते गृह्णाति)

**सुन्दरी** — (विहस्य) हठात् किं यस्मिन् कस्मिन् समये यदा कदापि विना च ते आज्ञां अहं तव गृहं आगन्तुं योग्याऽस्मि।

**वल्लरी** — अवश्यं मम गृहद्वाराणि त्वत्कृते सर्वदा विवृतान्येव।

**सुन्दरी** — को विशेषः। अपि कुशलम्।

**वल्लरी** — न कोपि विशेषः। सर्वं सकुशलमेव।

**सुन्दरी** — एषा द्वारकवाटोऽद्घाटिता का?

**वल्लरी** — एषा अनिलस्य माता मैथिली।

**सुन्दरी** — (आश्चर्येण) अहो अनिलस्य माता। नमांसि मातः। (इति नमस्करोति)

**मैथिली** — शीघ्रमेव कल्याण प्राप्तिरस्तु।

**सुन्दरी** — ( अधोमुखी तिष्ठति )

**वल्लरी** — सुन्दरि अन्तः एहि। अद्य मैथिलीमाता चहादिकं करिष्यति।

**सुन्दरी** — अद्य मातुः हस्तकृतचहां पास्यावः।

**मैथिली** — युवां द्वे अत्रैवोपविशताम्। अहं चहां कृत्वा आनयेयम्।

**वल्लरी** — मातः भवती अपिच सुन्दरी युवां द्वे संलपन्त्यौ अत्रैवोपविशताम्। अहं पञ्चनिमेषे चहां विधाय आनयेयम्।

**मैथिली** — तथैव। ( इति तत्रैव सोफ़ायां उपविशति )

**वल्लरी** — सुन्दरि, मैथिलीसाकं संलपन्ती उपविश। अहं अधुनैवा गच्छेयम्।

**सुन्दरी** — गच्छ तथैव। ( इति मैथिल्याः सकाशे सोफ़ायां उपविशति )

**मैथिली** — बाले तव वयः कियत्।

**सुन्दरी** — मम वयः विंशति।

**मैथिली** — तव पिता किं करोति।

**सुन्दरी** — मम पिता विधितज्ञः।

**मैथिली** — हां अनिलेन कथितम्। तव पितुः नाम भास्करः इति। अहं विस्मृतास्मि।

**सुन्दरी** — अनिलः मे मित्रम्।

**मैथिली** — अस्मिन् वत्सरे अनिलस्य विवाहः कर्तव्यः इति मे चिन्ता।

**सुन्दरी** — अवश्यं करणीया। अधुना अस्मिन् वत्सरे अनिलपिता पदवी निवृत्तः। अधुना करणं अवश्यमेव।

**मैथिली** — अनुरुपा युवती अपेक्ष्यते। सा सर्वथा दक्षतायुता भवितव्या। तस्मात् तस्य पिता अनुरुप वध्वे मार्गयति।

**सुन्दरी** — न कोपि क्लेशः विद्यते अनुरूपवधूप्राप्ति विषये। अनिलः सज्जनः मेधावी श्रीमान् सुन्दरः कविः गायकश्च नात्र चिन्ताकार्या भवत्या।

**मैथिली** — सर्वदा गृहे अनिलः त्वामुद्दिश्य कथयति।

**सुन्दरी** — अयं कविकुमारः।

**मैथिली** — गृहे सर्वदा कवितां कुर्वन् गायति। न किमपि पठति।

**सुन्दरी** — तस्य कवित्वं मह्यं अत्यन्त रोचते। एम्. एस्. सी. विद्यार्थिनां कविताभिलाषा विद्यते इत्यत्र प्रशंशनीयोयं विषयः।

**वल्लरी** — मातः मैथिलि, सखि सुन्दरि इदं पिष्टकं इदं चहपानं। (इति तत्र निक्षिप्य सापि उपविशति)

**मैथिली** — (एकं पिष्टकं गृहीत्वा चहायां मज्जयित्वा खादति सर्वाः अपि तथैव कुर्वन्ति)

**सुन्दरी** — असे वल्लरि तव पतिः कदा शार्यालयात् आगमिष्यति।

**वल्लरी** — सः षट्घण्टावादन समये आगमिष्यति।

**सुन्दरी** — अधुना पञ्चघण्टा जाता।

**मैथिली** — वल्लरि, अनिलः आगमिष्यति अपि च अनिलस्य पिता एकः एव गृहे बिद्यते। ममात्रगतय बहुकालः व्यतीतः। संध्यासमये गमनं सुकरं न भवति। रस्त्यायां सर्वत्र वाहनसंकुलमेव भवति। मार्गेषु चलनं तरणं अतीव कष्टं भवति।

**सुन्दरी** — किं बसयानेन गम्यते।

**मैथिली** — नहि त्रिचक्रयानेन गम्यते। सन्ध्यासमये बसस्थानके जनसंमर्दः अधिकः भवति।

**वल्लरी** — यदि त्रिचक्रयानेन गम्यते अधुना गमनं किमर्थं अर्धघण्टानन्तरं गच्छ

**मैथिली** — नहि अधुना गन्तव्यमेव। अनिलस्य पिता मह्यं कुप्यति गच्छेयम्। (इति उत्तिष्ठति)

**वल्लरी** — तिष्ठ मातः तिलकं करिष्ये। (इति अन्तः गच्छति)

**सुन्दरी** — मातः एकदा मम गृहमपि आगच्छतु भवती।

**मैथिली** — अधुना परिचयः जातः भवतीं दृष्टा अस्मि। गृहं अवश्यं आगच्छेयं कुशलं प्रष्टुम्। त्वमेव अस्मत् गेहं एहि।

**सुन्दरी** — अवश्यं अनिलेनसार्थं आगच्छेयम्।

**वल्लरी** — (कुङ्कुम भरणीहस्ता आगत्य) मातः तिष्ठ। (इति तस्याः फाले कुङ्कुमतिलकं करोति कदळीफलयुक्त क्रमुकचूर्णमिश्रित ताम्बूलं तस्याः हस्ताञ्जल्यां निक्षिपति सुन्दर्याः फाले तिलकं करोति)

**मैथिली** — वल्लरि, सुन्दरि गच्छाम्यहं पुनः दर्शनाय। (इति गच्छति)

**वल्लरी सुन्दर्यौ** — नमस्ते मातः। (इति नमस्कुरुतः)

(वल्लरीसुन्दर्यौ उपविष्ठे सोफायां)

**वल्लरी** — सखि सुन्दरि, कथय त्वं, कथं किं कथयितुं किं साधयितुं आगतासि।

**सुन्दरी**—सखि अहं त्वां एकं प्रश्नं प्रक्ष्यामि तस्य प्रश्नस्य उत्तरं देहि।

**वल्लरी** — कः ते प्रश्नः। का ते भावना। नाहं सक्षमा भवामि ते प्रत्युत्तरं दातुम।

**सुन्दरी** — त्वं ते अभिप्रायं कथय तदेवालं मे।

**वल्लरी** — किं तत् कथय।

**सुन्दरी** — एतत् विषयं कुत्रापि मा भण।

**वल्लरी** — सखि त्वं मे प्राणाः। अहं कुत्रापि कस्यापि न कथयेयम्।

**सुन्दरी** — अविनाशः मां कामयते।

**वल्लरी** — तदहं जानामि।

**सुन्दरी** — कथम्।

**वल्लरी** — जन्मदिवससमारम्भे आवां प्रेषयितुं कास्यानं प्रेषयामास। तदा ज्ञातं मे सः त्वयि लग्नचित्तः इति।

**सुन्दरी** — त्वं अतीव कुशाग्रबुद्धिः।

**वल्लरी** — किं त्वं कामयसे तम्।

**सुन्दरी** — हां अहमपि तं कामये।

**वल्लरी** — तर्हि तदा काहं युवयोर्मध्ये। तत्र प्रश्नानां मम उत्तरयितुं अवकाशोनास्ति।

**सुन्दरी** — तथा नहि। अत्र विद्यते अन्यः प्रश्नः।

**वल्लरी** — कोऽयं प्रश्नः।

**सुन्दरी** — अनिलः अपि मां कामयते।

**वल्लरी** — किं ते तस्मिन् अनुरागः वर्तते।

**सुन्दरी** — विद्यते। एतौ द्वौ आवयोः मित्रे।

**वल्लरी** — अस्मिन् विषये अत्र मां प्रष्टुं अवसरो नास्ति। तव इच्छानुसारं त्वं व्यवहरस्व।

**सुन्दरी** — वल्लरि, अत्र विद्यते किमपि रहस्यम्।

**वल्लरी** — किं तत्।

**सुन्दरी** — तौ द्वौ मनसा मां कामयेते वा उतनवा इति मे संशयः।

**वल्लरी** — अयं विचारणीयः प्रश्नः।

**सुन्दरी** — कः मां अतीव कामयते इति ज्ञातुं मे कुतूहलं भवति। अस्मिन् विषये अधुना मया किं कर्तव्यं विद्यते इति आलोचना भवति।

**वल्लरी** — सुन्दरि ! काहं निर्णेतुं युवयोर्मध्ये संजातं विषयम्।

**सुन्दरी** — जानामि तयोः कामना। केवलं कृत्रिम भावपूर्णा उत प्रेमपरीतावा इति नाहं ज्ञातुं समर्थः भवामि।

**वल्लरी** — त्वं कं कामयसे।

**सुन्दरी** — तौ द्वावपि समानौ। अहं द्वावपि कामये।

**वल्लरी** — कथं द्वावपि कामयसे।

**सुन्दरी** — तस्मादेव द्वैधीभावमनाः समस्या परिष्कारार्थं तव गृहं आगतास्मि।

**वल्लरी** — अहं किं कुर्याम्।

**सुन्दरी** — एनां समस्यां शिथिलयितुं त्वमेव शक्तासि इति मे मतिः।

**वल्लरी** — विचार्यमाणे मे कोप्युपायः न भवति।

**सुन्दरी** — असे वल्लरि त्वं अनुभवज्ञा विचारशीला त्वं कमप्युपायं सूचयिष्यसीति त्वत्सकाशं समागतास्मि।

**वल्लरी** — ( किञ्चित्कालं शान्तमनाः भूत्वा एकान्ते उपविश्य चिन्तयामि।

**सुन्दरी** — ( इतस्ततः चलन्ती विचिन्तयन्ती आस्ते )

**वल्लरी** — सखि सुन्दरि मे एका भावना मेधसि विद्युतायते।

**सुन्दरी** — ( तस्याः सकाशं आगत्य ) का सा भावना।

**वल्लरी** — श्रृणु नाटकं कुर्याव आवाम्।

**सुन्दरी** — किं तन्नाटकम्।

**वल्लरी** — त्वं समयं परिकल्प्य एकैकमुद्दिश्य एवं कथय।

**सुन्दरी** — किमिति।

**वल्लरी** — त्वं अन्तर्वत्नी संजाता इति।

**सुन्दरी** — अहो किं वदसि त्वम्। इयं भावना त्वया प्राप्ता किम्?

**वल्लरी** — एतत् नाटकमेव।

**सुन्दरी** — ( वल्लरीं हस्ते गृहीत्वा ) अहो अहं कथं कथयेयम्।

**वल्लरी** — धैर्यमवलम्ब्य कथय।

सुन्दरी — तदा किं भविष्यति ।

वल्लरी — अविनाशः चिन्तयिष्यति अनिलेनसार्थं त्वं अन्तर्वत्नी जाता इति ।

सुन्दरी — ततः ।

वल्लरी — त्वनिलेनापि एवमेव कथय । सः चिन्तयिष्यति अविनाशेन त्वं अन्तर्वत्नी जाता इति ।

सुन्दरी — कथं नटनीयम् । अहं नटी नहि । (इति भीता भवति)

वल्लरी — त्वं नटनं कुरु यथा कथंचित् । अन्ततः सर्वं तव इच्छानुसारं भविष्यति ।

सुन्दरी — नटनानन्तरं किं कर्तव्यम् ।

वल्लरी — नटनानन्तरं तयोः भावनाः तयोः ललाट भागयोः पठ ।

सुन्दरी — प्रथमतः अनिलं विचारयिष्यामि ।

वल्लरी — प्रथमतः अनिलमेव विचारय ।

सुन्दरी — प्रथमतः अनिलं विचार्य तस्याभिप्रायं ज्ञात्वा अनन्तरं अविनाशं विचारयेयम् ।

वल्लरी — अन्ततः यदि द्वयोर्मध्ये कलहः नोचेत् कोवा त्वां परिग्रहिष्यति, कोवा त्वां हृदयपूर्वकं कामयते ज्ञास्यति ।

सुन्दरी — कलहो मा भूयात् ।

वल्लरी — कलहः नहि ।

सुन्दरी — अयं कलहः एव ।

वल्लरी — प्रेमपरीक्षार्थं कलहः भवितव्यः एव ।

सुन्दरी — प्रेमपरीक्षा कर्तव्या किं मया ।

वल्लरी — प्रेममार्गः प्रथमतः कण्टकावृतः इव भासते । यदि सः हरितः पल्लवितः पुष्पितः फलितः भवति तदा अनुभुज्यते ।

सुन्दरी — सखि वल्लरि, ते भावना अतीव प्रशंसनीया। श्वः एव अहं नाटकं रचयेयम्।

वल्लरी — सखि त्वं प्रेमपरीक्षायां उत्तीर्णा भविष्यसि।

सुन्दरी — धन्यवादान् वितरामि तुभ्यम्। (द्वावप्युद्धाय परस्परं हस्तावबलम्ब्य तिष्ठतः। सुन्दरी गच्छन्ती) नमस्ते। (इति नमस्करोति)

वल्लरी — मनोरथसिद्धिरस्तु। (इति हस्तमुद्यम्य तां प्रेषयति)

(यवनिका पतति)

* * *

## षष्ठं दृश्यम्

(विश्वविद्यालयस्योऽद्यानवनं तत्र सुन्दरी अनिलयोः समागमः।)

सुन्दरी — अरे अनिल किं मां अदृष्ट्वैव गच्छसि।

अनिलः — अहं अदृष्ट्वा न गच्छामि दृष्टवैव गच्छामि।

सुन्दरी — तथा किमर्थं गच्छसि रे।

अनिलः — यदि त्वं मां कामयसेवा नवा ज्ञातुं तथा अकरवम्।

सुन्दरी — अरे त्वं मां परीक्षसे।

अनिलः — परीक्षा नहि। विडम्वनां करोमि।

सुन्दरी — इयं विडम्बना।

अनिलः — सुन्दरि एहि अत्र आवां किञ्चित्कालं उपविशावः। (इति उपविशतः)

सुन्दरी — अरे त्वं किं प्रष्टुमिच्छसि मां।

**अनिलः** — किं सुन्दरि, आवयोः विवाहः भविष्यति। उत न भविष्यति कथय।

**सुन्दरी** — यदि मनोनिश्चयः भवति तर्हि विवाहः भविष्यति।

**अनिलः** — अस्मिन् वर्षे निश्चित्य विवाहः कर्तव्यः एव।

**सुन्दरी** — त्वं मां कामयसे किम्।

**अनिलः** — कामयामि।

**सुन्दरी** — तर्हि विवाहसमयः निर्णीतव्यः।

**अनिलः** — यदि त्वं हां इति कथयसि तूर्णमेव विवाहः भविष्यति।

**सुन्दरी** — सत्वरं विवाहकरणे मनः मां प्रचोदयति।

**अनिलः** — त्वमेव कथय कदा विवाहः निर्णेतव्यः।

**सुन्दरी** — श्रृणु। अनुपदमेव कार्यमग्नो भव।

**अनिलः** — कथय श्रोष्यामि।

**सुन्दरी** — अहं अधुना अन्तर्वत्नी जाता।

**अनिलः** — (आश्चर्येण) अहो भगवन्। सुन्दरी सत्यमेव अन्तर्वत्नी जातासि।

**सुन्दरी** — अहं सत्यमेव अन्ततर्वत्नी जाता। मां वैद्यसकाशं नीत्वा परीक्षां कारय। यदि त्वं मां सत्यं इच्छसि तर्हि अनुपदमेव पाणिग्रहणं कुरु। अहं अधुना त्वया साकं विवाहितुं उद्युक्तास्मि।

**अनिलः** — (हस्तवस्त्रखण्डं गृहीत्वा मुखे तारकित घर्मबिन्दून् मार्जयति)

**सुन्दरी** — अरे त्वं किमर्थं कम्पसे। किं त्वं भीतोऽसि।

**अनिलः** — नहि।

**सुन्दरी** — किं विचारयसि।

**अनिलः** — नहि विचारयामि।

**सुन्दरी** — सत्वरं त्वं किमपि कुरु विवाहार्थम्।

**अनिलः** — मम किञ्चित् कालं समयं देहि। अहं मे पितरौ कथयित्वा ताभ्यां विचार्य श्वः कथयेयम्। अधुना मे सत्वरं गन्तव्यं विद्यते कार्यान्तरसमापनाय।

**सुन्दरी** — अद्य विद्यालयं ना गच्छसि।

**अनिलः** — अद्य मे विद्यालयस्य विरामः भवति।

**सुन्दरी** — किमर्थम्।

**अनिलः** — अद्य मे शरीरे प्रातः प्रभृति तीज्वरः अस्ति।

**सुन्दरी** — अरे अनिल त्वं मां मनसा कामयसे खलु।

**अनिलः** — अकामयम्।

**सुन्दरी** — अधुना।

**अनिलः** — अधुनापि कामये। नमस्ते अहं गच्छेयम्। (इति गच्छन् एकक्षणं स्थित्वा मनसि) एषा अविनाशेन सार्धं विचरति। सत्यमेव तेन साकं एषा अन्तर्वत्नी जाता। अधुना एषा पुंश्चली जाता। मां परिणेतुमिच्छसि। नाहं कामये एनाम्। (इति गच्छति)

**सुन्दरी** — अयं कामुकः। मां अनुभवितुं मह्यं स्निह्यति। मयि तस्य न लेशोपि प्रेमभावना विद्यते। आधुनिक युवकाः स्त्रीमानं नाशयितुं अग्रेसराः किन्तु विवाहकरणे अन्तिमाः भवन्ति संशयग्रस्ताः भवन्ति। अहं अविनाश समीपं गत्वा तेन साकं एवमेव व्यवहरिष्ये। (इति गच्छति)

(यवनिका पतति)

* * *

# सप्तमं दृश्यम्

(विश्वविद्यालयस्य समीपे नारिकेळ वृक्षच्छायायां सुन्दरी अविनाशौ संलपन्तौ आस्ताम्)

**अविनाशः** — अहं त्वां मनसा कामये इति कथनं पुनरुक्तिः भवति)

सुन्दरी — त्वां वहुकालदारभ्य अहं कामयमाना अस्मि। किन्तु मे भावनां न प्रकटी कृतास्मि ।

अविनाशः — सर्वस्यापि समयः भवति।

सुन्दरी —- अरे अविनाश, त्वं मदपेक्ष्या श्रीमान् विद्यादिकः सकल गुणोपेतः।

अविनाशः — तथा कथने त्वं त्वां न्यूनीकरोषि ।

सुन्दरी — इदं आत्मानं न्यूनीकरणं नहि। किन्तु अयं विनयवतीनां लक्षणम् ।

अविनाशः — जगति सर्वे समानाः सन्ति। न कोपि न्यूनः न कोप्यधिकः। आत्मानं न्यूनीकरणं अपिच अधिककरणं न युक्तं प्रज्ञावताम् ।

सुन्दरी — सत्यमेव तादृशाः भूतले बिरलाः सन्ति। त्वं तु मां न्यूमी करोषि।

अबिनाशः — त्वां न्यूनीकरणे को लाभः भवति मे। त्वं तु मे प्रेयसी।

सुन्दरी — पुरुषाणां प्रेम चञ्चलं भवति।

अविनाशः—तथा मावद सुन्दरि। अयं अविनाशः विचार्यकर्म करोति।

सुन्दरी — अहंमद्विषयमुद्दिश्य किञ्चित् वक्तुं कामये।

अविनाशः — कथय।

सुन्दरी — मे भीतिः भवति त्रपाच संजायते।

अविनाशः — मम सकाशे भीत्याः स्थानं नास्ति। त्रपाकुतः अहं ते मित्रम्। कथय यथेच्छं। मत्सकाशे गोपनस्यापि स्थानं नास्ति।

सुन्दरी — अविनाश अहं गुर्विणी संजाता।

अविनाशः — (साश्चर्यम्) कथम्। केन।

सुन्दरी — परपुरुष संपर्केण।

अविनाशः — किं अनिल संपर्केण।

सुन्दरी — नहि।

अविनाशः — त्वं मा विचारय। कन्यकाः जीवने अनालोच्य त्वरया का भावेशेन अकार्यं कुर्वन्ति। तत्र क्रोधो न कर्तव्यः। तत् विषयमुद्दिश्य न स्मर्तव्यम् विद्यते। अहं त्वां सर्वदा कामयामि, यदि त्वं सत्यं अन्तर्वत्नी उत मा परीक्षितुं नाटकं करोषि तं विषयं नाहं विचारयामि। अहं त्वां सम्यक् जानामि त्वं कदापि वक्रमार्गगामिनी न भविष्यसि। इदं सर्वं नाटकमेव। भवतु नाम सत्यं तथापि मे बाधा नास्ति। त्वामहं कामये। त्वं मे हृदय सुन्दरी असि। त्वमेव मे जीवन सहभागिनी असि।

सुन्दरी — अविनाश अस्यां दशायां त्वं मां परिणयिष्यसि।

अविनाशः — हां परिणेष्यामि। मम प्रेम निश्चलं पवित्रं नात्र शङ्का कार्या।

सुन्दरी — अविनाश त्वं मे प्रियः। अहं ते प्रिया। त्वं मे सत्यं कामयसि। त्वं धीरोदात्तोऽसि। पूर्वापर विचक्षणा ज्ञानी असि। (इति आनन्देन तस्य समीपं गच्छति)

अविनाशः — एहि सुन्दरि, त्वं मे प्रेयसी।

सुन्दरी — अविनाश, इदं सर्वं नाटकमिति त्वं जानासि। अनिलः मां अवगाहयितुं अनभिज्ञः बभूव।

अविनाशः — सः चञ्चलमनस्कः। उद्वेगपूरितश्च।

सुन्दरी — यदाहं अवोचम् अन्तर्वत्नीति सः कम्पितः बभूव। मया साकं भाषणं अकृत्वैव निर्गतः।

अविनाशः — भवादृशी कथं वक्रमार्गे चरिष्यति।

सुन्दरी — मे पितरौ मां अवोचताम् बाले त्वं यं कामयसे तेन साकं ते विवाहः भविष्यति।

अविनाशः — असंस्कारयुतेनापि।

**सुन्दरी** — तथा नहि। यः संस्कारवान् प्राच्यसंस्कृतिप्रेमी शाकाहारी भवति तेन साकं भविष्यतीति एकदा उक्तवान्।

**अविनाशः** — पित्रोः भावना अतीव कालानुयायिनी अस्ति।

**सुन्दरी** — अरे अविनाश गच्छावः श्वः एव आवयोः बाह्यविवाहः।

**अविनाशः** — का ते भावना? बाह्यविवाहः इति कथयसि।

**सुन्दरी** — अरे आवां परस्परं मनोभ्यां परिणीतौ अर्थात् आन्तरङ्गिक विवाहः पूर्वमेव समजनि। अधुना लोके दर्शयितुं बाह्यविवाहः कर्तव्यः इति मे अभिप्रायः।

**अविनाशः** — प्रेयसी ते भावना अतीव आदर्श प्राया स्त्रीजगति। पूर्वं उमा तपसा शङ्करं क्रीता आसीत्।

**सुन्दरी** — अधुना त्वं मां परीक्ष्य मनसा गृहीतोऽसि।

**अविनाशः** — त्वमेव मां परीक्ष्य मनसा गृहीतवती असि। त्वं प्रेम-परीक्षां कृतवती असि।

**सुन्दरी** — (विहस्य) अरे आवां अन्योन्यार्थं भगवता सृष्टौ एहि गच्छावः पितृभ्यां निवेदयावः। एहि। (इति हस्तावबलम्ब्य गच्छतः)

**(यवनिका पतति)**



# ।। परिणीता ।।

( ततः प्रविशतः यवनिका पुरतः व्यवस्थापक दर्शकौ )

**व्यवस्थापकः** —- ( ध्वनियन्त्रं हस्ते गृहीत्वा ) तत्र भवन्तः सामाजिकाः शृण्वन्तु भवन्तः । अद्य वयं परिणीता इति नामकं नाटकं प्रदर्शयितुं अतीव उत्साहिनः अभवाम । अहं अस्य नाटकस्य निर्माता । अयं अस्य नाटकस्य दर्शकः । अयं एतन्नाटकमुद्दिश्य कतिचित् परिचय वाक्यानि दास्यति । ( इति ध्वनियन्त्रं तस्य पुरतः निक्षिपति )

**दर्शकः** —- अयि भोः सामाजिकाः एतन्नाटकं गीर्वाणान्ध्र भाषाप्रवीणेन पंडित ओगेटि परीक्षित् शर्मणा विलिखितम् । अयं विंशतितम शताब्दे सुप्रसिद्ध संस्कृतकविः । अनेन अनेकानि काव्यानि विलिखितानि । एतन्नाटकं अनेन विलिखित सामाजिक नाटकेषु एकं वर्तते । अस्मिन् नाटके वरशुल्केन विना नायिका राधा परीणिता आसीत् । तत् कथं बभूव भवन्तः प्रत्यक्षं अधुना पश्यन्तु । धन्यवादाः । ( इति द्वावपि अन्तः गच्छतः )

( यवनिका अपसार्यते )

( रङ्गमञ्चे एकस्मिन् पार्श्वे टेबुलोपरि पुस्तकानि निक्षिप्तानि । एकत्र शयन कुर्चिका । तस्याभिमुखं उपवेष्टुं सोफादिकं वर्तते । )

( ततः प्रविशति कौटुम्बिकः गिरिधरलालः )

**गिरिधरः** — "चक्रार पङ्क्तिरिव गच्छति भाग्यपंक्तिः" हा सम्यगुक्तं भास महाकविना । ( इति शयन कुर्चिकायां उपविशति । आत्मगतम् ) समाजे सर्वदा स्थितिः परिवाहिनी भवति । अधुनातन दिवसेषु दैनंदिनकार्यक्रमकरणे जनाः बहु श्रान्ताः भवन्ति । चहपानादिकं करणानुपदयेव कार्यालयगमनं गृहेपि कार्यालयचिन्ता किं जीवितमेतत् । दैनंदिनकार्यं कारं कारं मे चित्तं शरीरं च बहु खिन्नं श्रमया च विदारितं आसीत् ।

**राधा** — ( चहामानीय पार्श्वे टेबुलोपरि निक्षिपति ) अयि भोः कार्यालयवेला भवति सत्वरं चहापानादिकं कृत्वा स्नात्वा कार्यालयं गच्छतु। किमर्थं उपविष्टाः। चहा सत्वरं पिबतु, नोचेत् शीतलं भविष्यति।

**गिरिधरः** — राधे अद्य वृत्तपत्रं आगतं किम्।

**राधा** — आगतम्।

**गिरिधरः** — तर्हि आनीय मह्यं देहि।

**राधा** — वृत्तपत्रमपि मया दातव्यं किम्? ( इति मुखं वक्रितं विधाय वृत्तपत्रं आनीय तस्मै ददाति )

**गिरिधरः** — किं रुष्टासि?

**राधा** — हसितव्यं किं। गृहे सर्व कर्म कर्तव्यं। युष्माकं वृत्तपत्रमपि दातव्यम्।

**गिरिधरः** — मह्यं वृत्तपत्र दानेन परिश्रान्ता भवेः किम्?

**राधा** — मे प्राणाः निर्गच्छन्ति गृहकर्म करणे। एकां पाचकां स्थापयतु गृहे।

**गिरिधरः** — जानकी किं करोति।

**राधा** — सा लिखति। तया गन्तव्यं वैद्य शालांप्रति।

**गिरिधरः** — सा ते गृहकर्मकरणे साहाय्यं करिष्यति।

**राधा** — मम तस्याः सहायोमास्तु। यदि सा स्वयं स्वीयकर्म करिष्यति तदेवालं मम।

**गिरिधरः** — किं तथा कृत्या भवसि अद्य। किं रक्तपीडनं भवति।

**राधा** — मनो वैक्लव्यं भवति मे। पुत्रिकायाः जानक्याः पञ्चविंशति वर्षाणि व्यतिष्यंति। सर्वदा तस्याः विवाहविषये चिन्ता भवति। तया चिन्तया अहं शिथिलिताङ्गी भवामि।

**गिरिधरः** — त्वं गच्छ। चिन्तां मा कुरु। सर्वमपि शान्तगत्या सुखमयं भविष्यति। त्वं अन्तः गत्वा कार्यतत्परा भव। नोचेत् चिन्ता चितिः भूत्वा शरीरं सर्वमपि दाहयिष्यति।

**राधा** — (मुखं संकोचयित्वा अन्तः गच्छति)

**गिरिधरः** — (वृत्तपत्रं पश्यन्) वधूः अपेक्ष्यते। वयः पञ्चविंशति वर्षाणि वैद्या एम्. बि. बि. एस्. अन्तिम वर्ष विद्यार्थिनी उत उत्तीर्णा वैद्या रुपवती गुणवती च अपेक्ष्यते। (उत्थाय) हञ्जे राधे इतः एहि।

**राधा** — (आगत्य) किमर्थं एवं आक्रोशति। किं वृत्तम्।

**गिरिधरः** — पश्य। (इति वृत्तपत्रं ददाति)

**राधा** — (वृत्तपत्रं गृहीत्वा पठति) वयः पञ्चविंशति वर्षाणि। वैद्यां एम्. बि. बि. एस्. अन्तिमवर्ष विद्यार्थिनी उत उत्तीर्णा वैद्या, रुपवती गुणवती च अपेक्ष्यते। बालस्य वयः त्रिंशतिः वैद्यः औषधतज्ञः। अमेरिका देशात् प्रतिनिवृत्तः सुन्दरः दत्ताङ्के पत्रव्यवहारः कर्तव्यः।

**गिरिधरः** — कथं विद्यते।

**राधा** — समीचीनं। अद्यैव पत्रं विलिखतु। नोचेत् गत्वा सर्वं तैस्साकं विचार्य बालकं दृष्ट्वा आगच्छतु। एषा पत्रिका प्रकटना जानक्यै कृता इव मे प्रतिभाति।

**गिरिधरः** — विवाह समयः समापन्नः। संप्राप्त समये वमन कल्याणयोः न कोपि निरोधः भवति। दशघण्टावादनं भवति। कार्यालयं गन्तव्यम्। इति अन्तः गच्छति।

**राधा** — अहं पाथेयपात्रं संसिद्धं करिष्ये। (इति अन्तः गच्छति)

**गिरिधरः** — (बूटुं टै बन्धयित्वा कोटुं धारयति) हञ्जे गच्छाम्यहम्।

**राधा** — (पाथेय पेटिकांदत्वा) पश्यतु भवान् कार्यालयवेला सामाप्त्यनन्तरं संध्यासमये दत्ताङ्क गृहं गत्वा सर्वं विचार्य आगच्छतु।

**गिरिधरः** — हञ्जे यादृशी शीघ्रता विद्यते ते कुमार्याः विवाहकरणे तादृशी शीघ्रता ममापि विद्यते। अहं सर्वं सम्यक् विचार्य निश्चित्य आगच्छेयं मात्र चिन्ता ते अस्तु। (इति गच्छति)

**राधा** — हे भगवन् यदि अयं विवाह संबन्धः भविष्यति तर्हि वयं सर्वे मिळित्वा अति वैभवेन सत्यनारायणपूजां करिष्यामः। (इति नमस्कृत्य अन्तः गच्छति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(उद्यानवनं तत्र एकस्मिन् कोणे एकस्य वृक्षस्य अधः उपविश्य जानकीरामौ संलपन्तौ आस्ताम्)

**रामः** — प्रेयसि जानकि अहं पञ्चवर्षाणि अमेरिका देशे न्यूयार्क नगरे अवसम्। किन्तु तत्र जीवनं भारतात् भिन्नम्। तत्र जीवनं अत्यन्त वेगपूर्णम। तत्र न विद्यते मनश्शान्तिः। तत्र सर्वे सर्वभक्षकाः। अहं तु शाकाहारी। मया न कदापि मद्यं सेवितम्। मम जन्मतः आरभ्य अहं भारतीय आर्ष परम्परागत साम्प्रदाय प्रेमिकः। तस्मात् तत्रस्य जीवनं मह्यं न रोचते।

**जानकी** — अरे राम, अद्यतन दिवसेषु सर्वोऽपि अन्यदेशं उद्दिश्य अतिशयोक्ति करोति। किं तत् असत्यम्।

**रामः** — तत् सर्वं असत्यमेव। तत्र मानव जीवनं नहि। तत्रत्यानां पशुप्रायता जीवनं अधिकं भवति। न शान्तिः विद्यते। केवलं सम्पादनं भौतिक सुखानुभवमेव तत्र भवति। नान्या चिन्ता विद्यते।

**जानकी** — त्वं पञ्चवर्षाणि तत्र स्थित्वा तत्रत्या युवत्या न विवाहितोसि।

**रामः** — तर्हि, भारतीय सौन्दर्यं अहं तत्र ना पश्यम्। भारतीयानां विलासादिकं ना पश्यमहं तत्र। ताः स्त्रियः पुरुषाः इव आचरन्ति। तस्मात् मे श्रृङ्गार भावादिकं न बभूव। सर्वदा अहं भारतमुद्दिश्यैव अचिन्तयम्।

**जानकी** — राम, केचन आधुनिकाः कथयन्ति तत्र जीवनं सुखमयमिति, स्वेच्छा जीवनमिति। तत् सर्वं असत्यं किम्।

**रामः** — सर्वेषां स्वेच्छा विद्यते। अशन पानादिकं अस्मदीय देशवासिनां अननुकूलं प्रतिकूलं च। भारतवर्षे सर्वेषां मानवानां स्वेच्छा विचारः नियमबद्ध वैयक्तिक स्वतन्त्रता च अवश्यं स्वीकरणीये।

**जानकी** — तत्र जीवनं अनुभोक्तुं आधुनिकाः अहमहमिक्या तत्र गन्तुं प्रयतन्ते। किं तत् अयोग्यम्।

**रामः** — उच्च शिक्षणार्थं वैज्ञानिक विषयान् ज्ञातुं तत्र गमनं आवश्यकमेव। किन्तु भारतीय जीवन सदृशं प्रपञ्चे कुत्रापि न दृश्यते। भारते ग्रामीणाः अपि स्वतन्त्रतया आनन्देन जीवंति विद्यमान संपच्चये। तत् तत्र ग्रामेषु न संदृश्यते। तत्र सर्वेषां अधिकाशा भवति। यदि मानवस्य सकाशे किञ्चित् धनं स्यात् तर्हि भारतदेश सदृशं देशं अन्यत्र नहि पश्यामः। तस्मादेव सर्वे भारतेतराः भारतं समागताः। वयं भारतीयाः कुत्रापि नागच्छाम। अधुना विज्ञान शिक्षणार्थं उच्च शिक्षणार्थं भौतिक सुखप्राप्त्यर्थं आधुनिकाः गच्छन्ति।

**जानकी** — अस्मद्देशीय जीवनमेव वरमिति ते मनीषा।

**रामः** — सत्यमेव महाकवि चटर्जी महोदयेन गीतं खलु वन्दे मातरं, सुजलां सुफलां मलयज शीतलां मातरं, वन्दे मातरम् इति। सा भावना शतथा सत्यं तथ्याच।

**जानकी** — भवदीय अनुभवेन अहं अत्यन्त प्रभाविता अस्मि।

**रामः** — असे सुन्दरि त्वादृश सौन्दर्यवतीं अहं अमेरिकादेशे नापश्यम्।

**जानकी** — त्वं वैद्योपि देशान्तर गतोपि त्वं सत्यमेव भारतीय जीवनाभिलाषी इति मे परमानन्दः भवति।

**रामः** — परदेशं गतोऽस्मीति परदेशीयः भवेयम् किम्? अहं देशद्रोही न भवेयम्। अहं सर्व सेवां भारतीय जनता कृते करिष्यामि।

**जानकी** — अरे राम, आवयोः विवाहः अतीव स्वल्प धनविनिमयेन भवितव्यः। भारतवर्षे दरिद्रतां भजन्ते, ततः विवाहार्थं अति स्वल्प धनं विनिमयं कर्तव्यमिति मे अभ्यर्थना।

**रामः** — आवयोः भावना साम्प्रदायः आचार व्यवहारः अशन पानादिकं भारतीयतां तन्वंति। आवयोः शरीरे स्त्रीपुरुष विलासिते। किन्तु मनोभावना आत्मा च एकः एव। अस्मदीय विवाहः जातः। किन्तु लोकाय दर्शयितुं यस्मिन् कस्मिन् अपि देवालये विवाहः शास्त्रपद्धत्या कर्तव्यः विद्यते।

**जानकी** — ममाभिप्रायः अपि स एव।

**रामः** — जानकी तव पितुः नाम किम्।

**जानकी** — गिरिधरः।

**रामः** — मातुः नाम।

**जानकी** — राधा।

**रामः** — मम नाम रामः। तव नाम जानकी। सर्वं भगवता निर्णीतमिव प्रतिभाति मे। पश्य विवाहः परम्परागत शास्त्रोक्तप्रमाणं करणीयः। सप्तपदीसहितः अग्निसाक्षिकं शास्त्रपद्धत्या सुस्पष्ट मन्त्रोच्चारणैः ब्राह्मणानां समक्षं करणीयः।

**जानकी** — ममापि एवमेव विवाहः कर्तव्यः इति विद्यते। आचारार्थं धनं व्ययीकरणं न योग्यं भवति। आवयोः विवाहमुद्दिश्य कुत्रापि न वक्तव्यम्।

**रामः** — नहि। एहि मत्सकाशम्।

**जानकी** — अरे राम, त्वं मे जीवनम्। (इति तस्य सकाशं गच्छति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(पशुपतिः गिरिजया उपविश्य संभाषते)

**पशुपतिः** — गिरिजे, पत्रिकायां विवाह प्रकटनां दत्वा एक सप्ताहः व्यतीतः।

बहूनि पत्राणि संप्राप्तानि न किमपि पत्रं तृप्तिं नाददत्। अनुरुप युवकस्य अमेरिकातः प्रतिनिवृतस्य अनुरुपकन्यका न संप्राप्ता भवति किमेतदाश्चर्यम्।

**गिरिजा** — द्वितीय सप्ताहे अवश्यं बहु संख्यकानि योग्य पत्राणि समागमिष्यन्ति। यदि अस्मिन् पत्तने यः कोऽपि स्यात् सः आगमिष्यति। अत्र चिन्तायाः स्थानं नहि।

**पशुपतिः** — न मे कापि चिन्ता विद्यते। मे केवलं आश्चर्यं भवति वर्तमानास्थितिमुद्दिश्य। केचन अमेरिकातः प्रत्यागतस्य युवकस्य कन्यां दातुं शङ्कितमनाः भवन्ति। तादृशानुद्दिश्य अहं आश्चर्यं व्यक्ती करोमि।

**गिरिजा** — अति शङ्किनां जगति शान्तिः कथं भविष्यति। केचन जगति अन्य देशेभ्यः प्रत्यागतान् अतीव गौरवपूर्णं पश्यन्ति। अन्येच बहुहीनं पश्यन्ति।

**पशुपतिः** — केचन अन्य देशानुद्दिश्य ऊहामपि कर्तुं असमर्थाः भवन्ति। केचन ऊहां कृत्वा अस्माकं तादृश जीवनं अयोग्यं अनवसरमितिच चिन्तयन्ति। केचन परदेशमुद्दिश्य श्रवणानुपदमेव उन्मत्ताः भूत्वा जीवने एकवारं गन्तुं चिन्तयन्ति इयं लोक परिपाटिः, वर्तमान स्थितिश्च। ( बहिः कवाट ताडनम् द्वारघण्टारावश्च )

**गिरिजा** — कवाटताडनं अपिच द्वारघण्टारावश्च भवतः। कोपि समागतः आसीत्।

**पशुपतिः** — बत विरामदिवशेषु अपि सन्ध्या समयेषु कवाटताडनं द्वारघण्टारावश्च अविरामं भवतः। आगन्तुकानां अवधिर्नविद्यते। ते केवलं आगच्छन्ति चहां पिबन्ति संलापं कुर्वन्ति गच्छन्ति।

( इति संतापेन उन्थाय अन्तः गच्छति )

**गिरिजा** — अहंगत्वाद्वारं उद्घाटयामि।

(इत्युत्थाय विवृतद्वारं करोति)

(ततः प्रविशति गिरिधरलालः)

अयिभोः महाशये। इदं पशुपति महाशयानां गृहं किम्।

**गिरिजा** — हा इदं तेषां गृहमेव।

गिरिधरः – ते गृहे सन्ति किम् ?

गिरिजा — सन्ति

गिरिधरः — किमहं अन्तः आगच्छेयम् ।

गिरिजा — आगच्छन्तु ।

(गिरिधरः अन्तः प्रविश्य कुर्च्यां उपविशति)

पशुपतिः — अन्तर्गृहात् प्रविश्य नमांसि ।

(इति नमस्करोति)

गिरिधरः — नमांसि । भवानेव पशुपति महोदयः ।

पशुपति — हां अहमेव पशुपतिः ।

गिरिधरः — अहं भवदीय पुत्रस्य वैवाहिक प्रकटनां वृत्रपत्रे विलोक्य भवद्भिः भाषितुं समागतोऽस्मि ममनाम गिरिधरः ।

पशुपतिः —- हञ्जे (इति पत्नीं आह्वयति)

गिरिजा — (प्रबिश्य) अधुनैव चहां आनयामि इति उक्त्वा अन्तः गत्वा चहाशूर्पेण प्रविश्य तत्र पीठोपरि निक्षिपति )

पशुपतिः — गृहणन्तु शीघ्रं । नोचेत् चहा शीतलं भविष्यति (इति गृह्णाति)

गिरिधरः — (गृह्णाति)

गिरिजा — (प्रविश्य चहां गृहीत्वां अन्यस्मिन् पीठे उपविशति)

(सर्वे चहापानं कुर्वन्ति)

पशुपतिः — गिरिजे एते गिरिधर महोदयाः । एतेस्स्वपुत्रिकायाः विवाहं निश्चितुं अत्रागतवन्तः त्वमपि आवयोः भाषणे भागस्वामिनी भव ।

गिरिजा — तदर्थमेव अहं अत्रोपविशम् ।

पशुपतिः — कन्यकामुद्दिश्य सविस्तरं कथयन्तु भवन्तः ।

**गिरिधरः** — कन्यकायाः नाम जानकी सा पञ्चविंशतिवर्षीया चरेम एम्. बि. बि. एस. कक्ष्यायां वर्तते। सा अतीव सुन्दरी, रूपवती गुणवती सर्वसद्गुणानां सन्निधिः। काकस्य शाबकः काकाय रोचते तथा नाहं कथयामि।

**गिरिजा** — अयि भोः गिरिधर महोदय। अहं पुत्रस्य गुणगाणान् कथयामि। पुत्रः अतीव सज्जनः। सः अमेरिकादेशे विद्यमानः अपि सः शाकाहारी भारतीय संस्कृति प्रेमिकः संस्कारयुतश्च। सः अधुनैव अमेरिकातः प्रत्यागतः। तस्य वयः त्रिंशति। सः वैद्यतज्ञः। वधूवरयो दर्शनानन्तरं विवाहः निर्णीतव्यः विद्यते।

**गिरिधरः** — सम्यक् विद्यते। भवतां अपेक्षा किं अस्मत्तः।

**पशुपतिः** — वैवाहिक सर्वसन्नाहाः भवद्भिः कर्तव्याः वर्तन्ते।

**गिरिधरः** — तथैव।

**गिरिजा** — वधूवरयोः परस्परदर्शनानन्तरमेव तयोः अनुमति प्रमाणं विवाहः भवितव्यः वर्तते।

**पशुपतिः** — किं भावता अभिप्रायः।

**गिरिधरः** — अङ्गीकार्यः एव। एकस्मिन् शुभमुहूर्ते वधूवरयोः दर्शन शुभमुहूर्तः निर्णीतव्यः विद्यते।

**पशुपतिः** — अवश्यं तथैव कुर्मः।

**गिरिधरः** — वरशुल्कं कियत् दातव्यं इति भवतां आग्रहः।

**पशुपतिः** — गिरिधर महाशय पश्य। आधुनिकेषु दिवसेषु धनस्य मूल्यं विद्यते। सर्वोऽपि मूढः विवाहसमये कनिष्ट प्रमाणेन दशसहस्रं भजते। अत्र अयं सर्व लक्षणोपेतः वैद्यः अमेरिकातः प्रतिनिवृत्तः तस्य कृते कनिष्ट प्रमाणेन पञ्चति सहस्र रूप्यकाणि दातव्यानि अनन्तरं तदितर वस्तु क्रेतुं उपरि दशसहस्राधिकं दातव्यं विद्यते। अपिच प्रथममेव प्रोक्तं सर्व वैवाहिक मङ्गलकार्याः सर्व समारम्भाः भवद्भिः करणीयाः इति।

**गिरिधरः** — कतिपय दिवसानन्तरं भवन्तः सर्वे संहत्य विवाहार्थं कति जनाः समायान्ति पत्रद्वारा ज्ञापयन्तु। अपिच वधूवर दर्शनार्थं समयं चापि निश्चित्य ज्ञापयन्तु।

**पशुपतिः** — अहो भवतां कथनस्यावश्यकता नास्ति। सर्वमहं सम्यक् विधास्यामि।

**गिरिधरः** — ( उत्थाय ) गच्छेयमहम्।

**पशुपतिः** — ( उत्थाय ) द्वारपर्यन्तं गच्छति।

**गिरिजा** — ( द्वारपर्यन्तं गत्वा ) नमस्ते गिरिधर महोदय पुनरागमनाय निरीक्ष्यामहे।

**गिरिधरः** — नमोवः। ( इति गच्छति )

**गिरिजा** — संहत्य विवाहार्थं सार्धलक्षरूप्यकाणि भविष्यन्ति।

**पशुपतिः** — सार्ध लक्ष रूप्यकाणि अस्मिन् काले अतीव लघु निनिमयमेव भविष्यन्ति।

**गिरिजा** — आयान्तु अन्तः भोजनार्थम्। ( इति अन्तः द्वावपि गच्छतः )

( यवनिका पतति )

* * *

# चतुर्थं दृश्यम्

( राधा एकाकिनी उपविश्य पठन्ती आस्ते। द्वार घण्टा नाद्यते )

**राधा** — ( उत्थाय द्वारसमीपं गच्छति कपाटोद्घाटनं विदधाति )

( ततः प्रविशति गिरिधरः )

**राधा** — भवदुपयानं चिन्तयामि।

**गिरिधरः** — किञ्चित् विलम्बः संजातः अद्य।

राधा — किं भवन्तः दत्ताङ्क गृहं गतवन्तः।

गिरिधरः — गत्वा आगच्छम्। तस्मादेव विलम्बः संजातः। (इति शयनकुर्च्यां उपविशति बूटुं शिथिलयति टैं शिथिलयति)

राधा — (तत्रागत्य बूटुं टैं च गृहीत्वा अन्तः निक्षिपन्ति)

गिरिधरः — किंचित् पानीयं आनय राधे।

राधा — पानीयं चहां च आनयेयम्। (इति अन्तः गच्छति)

गिरिधरः — कल्याणकरणं गहनिर्माणं च अतीव कष्ट भरिते आधुनिकेषु दिवसेषु।

राधा — (चहां पानीयं च आनीय तत्र निक्षिपति तत्रैव गिरिधरस्य पुरतः एकस्यां कुर्च्यां उपविशति) अधुना कथयन्तु किं वृत्तं सविस्तरम्।

गिरिधरः — कथनें न किमपि विद्यते। सत्वरं करणीयं विद्यते।

राधा — सर्वं सम्यक् दृष्टं किम्।

गिरिधरः — हां दृष्टम्।

राधा — कीदृशोयं कुटुम्बः।

गिरिधरः — कुटुम्बस्तु समीचीनः संदृश्यते। ते संपन्नाः सुशीलाः सज्जना इव आभान्ति।

राधा — अत्रैव अस्मिन् पत्तने कियत् कालादारभ्य निवसन्ति।

गिरिधरः — तदहं ना पृच्छम्।

राधा — जानकी विषयः आलोचितः तैः।

गिरिधरः — हां सविस्तरं मया तामुद्दिश्य प्रोक्तम्।

राधा — वरशुल्कं कियान् विद्यते।

गिरिधरः — वरशुल्काः पञ्चति सहस्रपर्यन्तं विद्यते।

राधा — अहो पञ्चति सहस्रपर्यन्तं विद्यते।

**गिरिधरः** — अपिच सर्वसन्नाहाः अस्माभिः कर्तव्याः विद्यन्ते।

**राधा** — आहत्य सार्धलक्ष रूप्यकाणां विनिमयः भवति। बालः कथं विद्यते।

**गिरिधरः** — बालस्तु न दृष्टः। किन्तु वधूवरदर्शनानुपदमेव लग्नः निश्चितः भविष्यति।

**राधा** — सत्वरं विवाहः करणीयः अस्ति।

**गिरिधरः** — ममाभिप्रायः अपि तथैवास्ति।

(द्वारघण्टिका नाद्यते)

**राधा** — जानकी समागता इति मन्ये। (उत्थाय द्वारसमीपं गत्वा कवाटोद्घाटनं करोति। ततः प्रविशति जानकी)

**गिरिधरः** — बाले जानकि किं विलम्ब्य समागतम्।

**जानकी** — पितः मे मित्रस्य जन्मदिवसः अद्य समजनि। अहं मम वयस्याभिः जन्मदिवसार्थं। अम्बां कथयित्वा आगच्छम्।

**गिरिधरः** — बाले अन्तः गच्छ।

**राधा** — जानकि अहं तुभ्यं साधु वार्तां कथयिष्यामि।

**जानकी** — का वार्ता कथयतु जननि।

**राधा** — आवां तव विवाहं कर्तुं उद्युक्तौ अभवाव।

**जानकी** — मम विवाह विषये इयती त्वरा कथं मातः। अहं एम्. डि. परीक्षायां उत्तीर्णा भूत्वा परिणयिष्ये।

**राधा** — बालः अतीव सुन्दरः आजानुबाहुः इति ते पिता अवदत्।

**जानकी** — किं सः युवा पित्रा दृष्टः।

**गिरिधरः** — बाले मया सः न दृष्टः किन्तु तस्य पितरौ अवोचताम्। अपिच वधूवरयोः अङ्गीकारावन्तरमेव विवाहः भविष्यति तत्पूर्वं नहि।

**राधा** — तौ दम्पदी पञ्चतिसहस्र रूप्यकाणि वरशुल्कं अपृच्छन्। सर्वे सन्नाहाः अस्माभिः करणीयाः सन्ति।

**जानकी** — मातः पिता इयन्तं धनं कथं दास्यति।

**गिरिधरः** — बाले तव किमर्थं एतत्। त्वं वरदर्शनानन्तरं तवाङ्गीकारं विशदय। यदि तुभ्यं रोचते सः, विवाहकरणे बाध्यता मम विद्यते।

**जानकी** — पितः इयन्तं धनं त्वं दातुं उद्युक्तः। पितः किं त्रिंशति सहस्र रूप्यकाणि दत्वा तं बालं क्रेष्यसि किं मदर्थम्।

**गिरिधरः** — बाले अत्र क्रय विक्रयस्य संबन्धो नास्ति। तौ दम्पती संपन्नौ। तयोः महान् प्रासादः वर्तते। तयोः महत् भूखण्डं च विद्यते। बालः अमेरिका देशात् प्रत्यागतः। एम्. डि. प्राचार्यः।

**जानकी** — ते संपन्न कुटुम्बीकाः तथापि इयन्तं धनं काङ्क्षन्ते। ते सत्यं अत्याशा पूरिताः।

**गिरिधरः** — आशायाः अवधिः नास्ति जगति बाले।

**जानकी** — यदि इयान् वरशुल्कः भवता दीयते तर्हि अयं विवाहसम्बन्धः मम अनपेक्षितः भविष्यति।

**राधा** — बाले राधे किं त्वं पाषण्डा भवसि। ते सुसंपन्नाः भूखण्ड सहिताः योग्याः। भवतु नाम। आवां कुर्वः ते विवाहं। तव चिन्त मास्तु।

**जानकी** — मम विवाहं कृत्वा भवन्तौ भिक्षापात्रं गृहीत्वा भिक्षाटनं करिष्यतः। मे अनुजौ पाठशालां विसृज्य भिक्षुकौ भविष्यतः। माता यस्य कस्यापि गृहे पात्र प्रक्षाळनं कृत्वा जीवितं यापयिष्यति। अहं श्वशुरगृहे सुखमनुभवन्ती वसिष्यामि। भवतोः अभिप्रायः सम्यक् विद्यते।

**राधा** — किं ब्रवीषि जानकि।

**जानकी** — नहि श्रृणोमि भवतां वाक्यं। न मे रोचते वरशुल्कं दत्वा परिणय करणम्।

**गिरिधरः** — जानकि श्वः अहं गत्वा जन्म पत्रिकादीन् विलोक्य योग्य वधू-वर दर्शन वेलां विनिश्चित्य आगच्छेयम्।

**जानकी** — इयन्तं धनं कुत्र विद्यते पितः।

**गिरिधरः** — अद्यैव मम भविष्य निर्वाहकनिधिः मे संप्राप्तः। अपिच विद्यते बांक्यां लक्षपर्यन्तं सर्वमपि व्ययीकृत्य तव विवाहं करिष्यावः।

**जानकी** — इयन्तं धनं दत्वा विवाहकरणं न मे रोचते पितः।

**गिरिधरः** — त्वं न जानासि वाले। "अर्थोऽहि कन्या परकीय एव"।

**जानकी** — पितः त्वं तवेच्छानुसारं कुरु अहं ममेच्छानुसारं कुर्याम्।

**राधा** — जानकि किं ते इच्छा।

**जानकी** — विना वरशुल्कं विवाह करणम्।

**राधा** — तत् कथं साध्यं भवति अस्मिन् वर्तमानयुगे।

**जानकी** — सर्वं साध्यं भविष्यति।

**गिरिधरः** — राधे त्वं अन्तः गच्छ।

**राधा** — बाले पितः लग्नपत्रिकां विलिखितुं प्रकटयितुं समीहते। त्वं किमपि व्यतिरेकं मावद।

**जानकी** — पितः तवच्छेनुसारं त्वं लग्नपत्रिकां मुद्राप्य आनय।

**गिरिधरः** — अहं अद्यैव गत्वा सर्वं विनिश्चित्य आगच्छेयम्।

**जानकी** — (मातुः समीपं गत्वा) मातः किं मत्कृते इयन्ती परिवेदना क्रियते।

**राधा** — जानकि त्वं न जानासि पित्रोः हृदय बाधां। त्वं अङ्गीकुरु यत् पिता कथयति त्वत्कृते। भिन्न वैरुध्यं मा कथय। (इति माता पुत्र्यौ अन्तः गच्छतः, गिरिधरः सर्व सन्नाहोभूत्वा बहिर्गच्छति)

(यवनिका पतति)

* * *

# पंचमं दृश्यम्

**जानकी** — (तत्र टेबुलोपरि उपविश्य पुस्तकात् एकं छाया चित्रं बहिराकृष्य पश्यन्ती गायति)

**गीतम् (भीमपलास रागे)**

पश्यति मित्रं काञ्चनमाला। भूषित वेषा काचन बाला
प्रियतम चिन्तन रागकपोला। कुन्तल निर्जित नीरदमाला ध्रु.

प्रतिपद जल्पन वीणा तन्त्री। पृथुल नितम्ब पराजित धात्री
कुवलय मञ्जुल चञ्चल नेत्री। चञ्चल चालन वैद्युत गात्री १

ज्योत्स्नालिङ्गन मधुर हसन्तम्। चन्द्रं मनुते कालकृतान्तम्
कुरुते प्रियतम चिन्तन सान्तम्। विरहितबाला तपति नितान्तम् २

पीन पयोधर चञ्चल हारा। निश्चल लोकन स्तम्भित तारा
भावज रूपित कृत सुस्मेरा। मनसिज पत्नी निभ साकारा ३

तटिदिव गौरी कुचभर भद्रा। सुन्दर हेला भावज मुद्रा
प्रियतम संगम समयेऽतन्द्रा। रतिपतिलीला जनित सुनिद्रा ४

गण्डस्थल बिम्बित कर्णाभरणा। प्रियतम मर्दन रक्तिमवर्णा
नीलाम्बरवेष्टित सुप्रावरणा। कबरीभर मञ्जुल सूनाभरणा ५

**राधा** — (गीत प्रारम्भ समये आगत्य निश्शब्दं श्रृण्वन्ती आस्ते। गीतावसाने प्रविश्य) जानकि गीतं अत्युत्तमं विद्यते, त्वयापि सम्यक् गीतम्।

**जानकी** — मह्यं रोचते गीतमेतत्।

**राधा** — केन विरचित मिदम् ?

**जानकी** — गीर्वाणगेयचक्रवर्तिना विरचितमिदम्।

**राधा** — सत्यमेवायं गौर्वाण चक्रवर्ती। संस्कृत भाषायां एतादृशानि गीतानि कदापि मया न श्रृतानि।

**जानकी** — मातः न केवलं त्वया। न केनापि एतादृशानि गीतानि श्रृतानि रचितानि च आधुनिक दिवसेषु संस्कृत भाषायाम्।

**राधा** — जानकि पिता बहिर्गत्वा बहुकालमभूत्। एतावत्पर्यन्तं नह्यागतः किमर्थंमेवं विलम्बः संजातः अद्य।

**जानकी** — पिता कुत्र गतः मातः।

**राधा** — तव विवाह लग्नं निर्णेतुं वधूवर दर्शन योग्य वेलां निर्णेतुं गतः।

(बहिः कवाट ताडनम् भवति)

**जानकी** — पिता आगतः। (इत्युत्थाय विवृत द्वारं करोति)

**गिरिधरः** — (प्रविश्य) बाले जानकि तव लग्नसुमुहूर्तः विनिश्चितः।

**जानकी** — कदा।

**गिरिधरः** — माघमासे शुक्लपक्षे दशम्यां गुरुवासरे गोधूळिसमये परस्परदर्शन शुभसमयः विनिश्चितः। अनन्तरं लग्नवेळा निश्चिता भविष्यति।

**राधा** — अहं शर्करां आनयेयं मुखं मधुरं कर्तुं। (इति अन्तः गच्छति)

**जानकी** — (कृत्था अन्तः गच्छति)

**गिरिधरः** — श्वः दुहित्रे किं किं अमेक्ष्यते सर्वमपि क्रेतव्यं विद्यते।

**राधा** — गृहे कार्य समारम्भः कर्तव्यः।

**गिरिधरः** — जानक्याः सौवर्ण कङ्कणानि नाशिका भरणं कर्णा भरणौ च। अन्य अलङ्कार संचयं च क्रेतव्यं विद्यते।

**राधा** — तदहं करिष्यामि। भवन्तः सर्वं बन्धून् तस्मिन् दिवसे आगन्तव्यमिति पत्रादिकं प्रेषयन्तु।

(बहिः द्वारघण्टा नाद्यते)

**गिरिधरः** — बाढ़ जानकि। कोत्रा समागतः गत्वा कवाटं उद्घाटय।

**जानकी** — (गत्वा पुनः प्रत्यागच्छति) पितः पत्राहरः आगत्य पत्रं दत्वा जगाम। इदं पत्रं। (इति तस्मै ददाति अन्तः गच्छति)

**गिरिधरः** — (तत्पत्रं उद्घाटय पठति)

महोदय,

वयं सर्वे सोमवासरे युष्मद्गेहं आगमिष्यामः। सर्व सौकर्याणि कुर्वन्तु। अस्मात् पक्षात् बहवः पदवीधराः महान्तः सन्तः समागच्छन्ति। तेषां किञ्चिदपि न्यूनता मा भूयात्। वयं सर्वे आहत्य द्विशतकाधिकाः भोजनार्थं आगच्छामः। तस्मात् यूयं सावधानतया सर्वमपि कुरुत इति वार्तयामि।

एवं
पशुपतिः

**गिरिधरः** — (पत्रं पत्रकञ्चुके निक्षिप्य) अयं सत्यमेव पशुपतिः। वर्तमान दिवसेषु आहारन्यूनता वर्तते। अधिक भोजन पदार्थान् व्यर्थं मा कुर्वन्तु इति शासनस्य आदेशः। तथापि एते द्विशतकाधिकाः भोजनार्थं आगच्छन्ति। अयं बुद्धिहीनः। डाम्बिकोयं मानवः।

**राधा** — किं उच्यते भवद्भिः पञ्चति सहस्रात्मक रूप्यकाणि वयं वर शुल्कं यच्छामः किन्तु द्विशताधिकजनेभ्यः भोजनं न दास्यामः। मा विचारयतु भवान्।

**गिरिधरः** — यूयं नार्यः न जानन्ति। पश्य वयं उद्युक्ताः भोजनं दातुं। किन्तु शतापेक्ष्या भोजनार्थं विवाहेषु न गन्तव्यमिति खाद्य पदार्थान् व्यर्थं न कर्तव्यं इति शासनादेशः। यदि शताधिकं भोजनं दीयते तत् कृत्यं शासन धिक्कारितं भविष्यति।

**राधा** — उच्चैः न वक्तव्यं। जानकी श्रोष्यति सर्वमपि अस्तव्यस्तं भविष्यति।

**गिरिधरः** — राधे अहं विपणीं गत्वाऽऽगच्छेयम्। (इति निष्क्रमति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

( राधाजानकीगिरिधराः एकत्रोपविश्य विवाहार्थं अपेक्षित वस्तुचयं चीरादिकं गणयन्ति )

**राधा** — अयं चीराऽऽभरणादिसमूहः कन्यादानसमये दातव्यः। अयं ताम्बूल विनिमय दिवसे वराय दातव्यः अस्ति। इदं वराय दातव्यं अङ्गुलीयकम्। (इति निक्षिपति )

**गिरिधरः** — जानक्याः पादाभरणौ हस्तकङ्कणादिकाः एकत्र स्थापनीयाः।

**राधा** — हां जानामि। अहं तथैव स्थापयिष्ये।

**जानकी** — पितः अहं त्वया साकं रहसि भाषितुमुत्सहे।

**गिरिधरः** — मत्सकाशे तव रहस्यं कथं बाले। अत्रैव प्रत्यक्षं वद किं ते भाषणीयं विद्यते।

**जानकी** — पितः किमर्थं भवान् मदर्थं कष्टमनुभवसि। पञ्चतिसहस्र रूपकाणां राशिं दत्वा भवान् वरं क्रीणाति। अनन्तरं शताधिक मूर्खेभ्यः भोजनं ददाति। एवं विवाह करणे न मे रुचिः विद्यते। सर्वमपि आहत्य लक्षाधिकं धनं भविष्यति तत् मे वरं न भवति।

**गिरिधरः** — बाले आवां पितरौ त्वां इयन्तीं विद्यावतीं विधाय यदि सम्यक् समीचीन कुटुम्बेन सार्धं अपिच समीचीन वरेण सार्धं विवाहं न कुर्याव लोकः आवां निन्दिष्यति। इयं लोक परिपाटिः। एतत् अस्मदीय कर्तव्यं विद्यते वासु।

**जानकी** — मे विवाहयत्नः विरमतु।

**गिरिधरः** — कथं भविष्यति विरमणम्। त्वां पतिगृहप्रेषणं अस्मदीय कर्तव्यं विद्यते।

**जानकी** — पितः भवन्तौ मे पितरौ मे जन्मदातारौ मा क्रुद्धौ भूयास्ताम्।

**राधा**—जानकि किं ते कथनीयं कथय सत्वरम्। किमर्थं एवं विलम्बः।

**जानकी** — पितः अहं परिणीतास्मि।

**गिरिधरः** — (क्रोधाश्चर्याभ्यां) वासु किं वदसि केन साकं वदसि। त्वं उन्मत्ता आसीः किम्।

**जानकी** — पितः मां क्षमां करोतु।

**गरिधरः** — (कुर्च्यां शयित्वा) हां बत किमापतितं बाले, किं व्यवसितं त्वया। असाधु कृतं त्वया। (इति नेत्र निमील्य शयन कुर्च्यां आस्ते)

**राधा** — किं ते मौर्ख्यं। त्वं अबाल्यात् मूर्खासि। स्वच्छन्द चारिणी असि। आवयो. वचनं न शृणोसि। (शिरसि हस्तं निक्षिप्य) अहो बत किं कृतं त्वया। वंशमर्यादा अतिक्रान्ता भवत्या। वंशगौरवः मृत्तिकायां ममज्ज।

**गिरिधरः** — कथंभूतोऽयं विवाहः। केन सार्धं कृतः।

**जानकी** — अहं एकेन वैद्यप्राचार्येण सार्थं विवाहितः। आवयोः विवाहः प्रेमविवाहः।

**राधा** — अहो प्रेमविवाहः। वयं न जानीयावहे प्रेम। अद्य प्रेम श्वः प्रेतः। अद्य सन्तोषः श्वः दुःखम्। त्वं मम गर्भात् राक्षसीव जाता।

**गिरिधरः** — किं वदसि बाले। त्वं परिणीता। किमर्थं नोक्तवती भवती प्रथमतः। कदा परिणयः कृतः। कुत्र।

**जानकी** — मुम्बापुर्यां मुम्बादेवी सन्निधौ एकेन पुरोहितेन विवाहः कारितः। मे विवाह समारम्भविषयः राजपत्रे अपि प्रकाशितः आसीत्।

**गिरिधरः** — राधे अधुना वरपर्क्षीयान् किं कथयेयम्। (इति बाधां प्रकटयति) अस्मिन् विषमकाले युवतीयुवकाः पित्रोः वाक्यं न शृण्वन्ति, न परिपालयन्ति च।

**राधा** — कथं परिपालयिष्यन्ति कलाशालाः सर्वाः विश्वविद्यालयाः सर्वाः वेश्यागृहसंतुलिताः भवन्ति। ताः सर्वाः सत्यं कलाशालाः भवन्ति।

**गिरिधरः** —- साम्प्रदायमनुसृत्य विवाहः कर्तव्यः। न केवलं युवती युवकयोः मेलनम्। विवाह इति पदस्य विपुलार्थः विद्यते। आधुनिकाः साम्प्रदायं न जानन्ति। जीवन मूल्यानि अपि न जानन्ति। केवलं अशमं चित्र विचित्र वस्त्रालङ्करणं कृत्वा वीथिनाटक नटकाः इव रथ्यासु आहिन्डन्ते। तेषां संस्कृतिः नास्ति परम्पराच नास्ति। धिक् नवीन जीवनम्। जीवने आनन्द एव नास्ति। (इति चिन्ताक्रान्तः आस्ते)

(द्वार कवाट ताडनम्)

**राधा** – (उत्थाय गत्वा द्वारं उद्घाटच पत्रं आनयति तत् पत्रं गिरिधराय प्रयच्छति)

**गिरिधरः** — (गृहीत्वा) अहो ते पशुपतादयः विवाहार्थं आगच्छन्तीति मन्ये। अधुना किं कर्तव्यं। (इति वदन् पत्रं उद्घाटच पठति)

अयि गिरिधर महोदय,

भवन्तः विवाह प्रयत्नान् मा कुर्वन्तु मे चिरंजीवः विवाहितः। सः वरशुल्क विरोधी, तस्मात् अस्मदीय सहायं विना एम. डि. वैद्य विद्यार्थिन्या परिणीतवान्। तयोः विवाहः प्रेम विवाहः। एकस्मिन् देवालये शास्त्ररीत्या पुरोहित समक्षं परिणयकार्यक्रमः समाप्तः आसीत्। तस्मात् वयं नागच्छामः। अस्मिन् बिषये क्रोधस्तु मा कार्यः। यतः अस्मदीय दिबसाः गताः। आधुनिकाः स्वेच्छया स्वमनोनुकूलं कुर्वन्ति। तेषां विषये अस्मदीय शिरप्रवेशः मास्तु। सरसं विरसं भविष्यति, क्षमध्वम्।

एवम्
पशुपतिः

**गिरिधरः** — अहो किमापतितम्। किं कष्टम्।

**राधा** — जानकि त्वं वंशे राक्षसी जाता। त्वं गृहात् अपेहि। (इति तां भर्त्सयति)

**जानकी** — पितरौ अहं भवन्तौ प्रणमामि। मां क्षमेथाम्। अहं परिणीता। अहं मम गृहं गच्छेयम्। तत्रैव वसेयम्। अत्र वसितुं मम अधिकारः

नास्ति। भवन्तौ पितरौ ममाभ्युदयाय सर्वं सुखात्मकं कर्तुं व्यवसितौ। अहं वरशुल्क विरोधिनी तस्मात् एवं अकरवम्। ममापि स्वतन्त्रता विद्यते साधुकर्म करणे। पुरा पार्वती अपि स्वतपसा स्वनिश्चयेन चन्द्रशेखरं विचिक्रिये। अहमपि मम विद्यया विद्वासं परिणीतास्मि। मातः अहं मम पतिगृहं गच्छेयम्। तत्रैव वसेयम्।

**गिरिधरः** — जानंकि जीवने यत् कष्टं सुखं वा भवति तत् त्वया अनुभोक्तव्यं विद्यते। अस्माकं तव सुखदुःख विषये न कोपि संबन्धः विद्यते।

( बहिः कपाट ताडनम् )

**राधा** — कोवा समागतः। ( इति गत्वा द्वारं उद्घाटयति )

**रामः** — अयि मातः इदं गिरिधर गृहम्।

**राधा** — हां एतत् गृहं गियिधर गृहमेव।

**रामः** — किं ते गृहे सन्ति ?

**राधा** — सन्ति। अन्तः प्रविशतु भवान्।

**रामः** — धन्यवादाः। प्रविशामि। ( इति प्रविशति ) अयि भोः नमांसि। (इति नमस्करोति )

**गिरिधरः** — उपविशतु भवान्। कोस्ति भवान्।

**रामः** — अयि भोः अहं एम्. डि. वैद्य प्राचार्यः।

**गिरिधरः** — तव नाम किम्।

**रामः** — मम नाम रामः।

**गिरिधरः** — त्वं कस्य पुत्रोऽसि।

**रामः** — अहं पशुपतेः पुत्रः।

**गिरिधरः** —भवान् किमर्थमागतोऽस्ति। तव विवाहः संजातः इति तव पिता पत्रं लिखितम्।

**रामः** — हां अहं अनुक्त्वा मम इच्छानुसारं विवाहमकरवम्।

**राधा** — अयि भोः राम, का ते कान्ता। तस्याः नाम किम्।

**रामः** — मम कान्तायाः नाम जानकी।

**राधा** — स कस्याः पुत्री।

**रामः** — सा राधायाः पुत्री।

**राधा** — कस्य पुत्री गिरिधरलालस्य।

**गिरिधरः** — किं मम पुत्र्या ते विवाहः संजातः।

**रामः** — हां।

**गिरिधरः** — किं विचार्य कथयसि।

**रामः** — हां विचार्य कथयामि।

**राधा** — किं जानकी भवता परिणीता।

**रामः** — सत्यं जानकी परिणीता।

**जानकी** — राम प्रणम्य। (पित्रोः सकाशं आगत्य) अयं मे पतिः अहं परिणीता। युवयोः न किमपि बाधा स्यात्।

**गिरिधरः** — बाले अयमेव संबंधः मम दृष्टः निश्चितश्च। आवयोः सम्बन्धं विना युवां द्वावपि परिणीतौ। एवमेव प्रपञ्चे विवाहः भवेत् यदि पित्रोः दुखं न भवति कष्टं न भवति। जानकि त्वं स्वयं परिणीताऽसि। पुत्रि अस्मद्गेहे कतिचन दिनानि यापयित्वा अनंतरं तव गृहं त्वं गच्छ। साधु कृतं भवता। तव इच्छानुसारं त्वं परिणीतासि। अहं युवयोः दम्पत्योः यत् मया भवतोः विवाहे व्ययीकर्तुं निश्चितं तत् सर्वमपि धनं उपायनमिव युवाभ्यां ददाति।

**जानकी** — पितरौ नाहं स्थातुमिच्छामि अत्र। मां नेतुं भवतोः जामाता आगतः। गच्छेयमहं अधुना मे भर्त्रा सार्थम्।

**गिरिधरः** — बाले अधुना का ते चिन्ता भवति। दिवसत्रयं उषित्वा गच्छताम्।

**जानकी** — पितः "अर्थोहि कन्या परकीय एव" इति भवद्भिः एकदा उक्तम्। तस्मात् अहं अधुना परकीया संवृत्ता।

**गिरिधरः** — यथेच्छं गच्छतां भवन्तौ "शुभास्ते पन्थानः सन्तु"। (इति आशीर्वचनान् विदधाति)

(यवनिका पतति)

* * *



# ॥ अपराजितम् ॥

( यवनिकायाः बहिः आगत्य ध्वनियन्त्रं हस्ते गृहीत्वा )

**व्यवस्थापकः** — सहृदय रसिकेभ्यः स्वागतं व्याहरामि। ( इति किञ्चिन्नामित शरीरपूर्वकायः ) अयि भोः रसिक प्रेक्षकाः अद्य वयं अपराजितं नाम नाटकं प्रदर्शयितुं अतीव उत्सुकास्मः। एतन्नाटकं हिन्दु बौद्ध जैन धर्माणां कलासंगमभूतं अजन्ता एल्लोरा सौन्दर्यसंगममुद्दिश्य कृतम्। अस्य नाटकस्य नाम अपराजितं किमर्थं कृतम्? इत्यस्य प्रश्नस्य एतत् प्रत्युत्तरं भवति, यत् इदं कलास्थानं जगति न केनापि कलाखण्डेन उत स्थानेन पराजितमभूत्, तस्मात् इदं अपराजितं अभूत् इति। अस्य नाटकस्य कविः पण्डित परीक्षित् शर्मा। अयं गीर्वाणान्ध्र भाषाप्रवीणः। अनेन संस्कृत भाषायां महती काव्य सृष्टिः कृता। अस्मिन् नाटके अजन्ता एल्लोरामुद्दिश्य जनानां अनुमेयं अपिच तेषां विभिन्न अभिप्रायानुद्दिश्य अस्मिन् नाटके कविः संभाषणारूपेण चित्रणां नाटकीयतां चक्रे। तत्र भवन्तः श्रद्धया निश्शब्दं नाटकं पश्यन्तु इति आशास्महे। नमस्ते। ( इति अन्तः गच्छति )

( यवनिका अपसार्यते )

( रङ्गमञ्चे द्वौ टेबुलौ वर्तेते तयोः उपरि श्वेतवस्त्राच्छादनं दृश्यते। तत्र टेबुलोपरि चहपानार्थं चषकाः सासराः एकं बृहत् झरीपात्रं च विद्यन्ते। ततः प्रविशति अभिनय दर्पणे )

**अभिनयः** — दर्पणे अद्य गृहे सर्व व्यवस्था समीचीनतया सुष्टु शोभायमाना कर्तव्या अस्ति। ( इति सर्व परिकराणि सुसर्जति )

**दर्पणा** — को विशेषः।

**अभिनयः** — अद्य अतिथयः आगच्छन्ति अस्मद् गेहम्।

**दर्पणा** — तस्मात् स्वच्छता अद्यैव कर्तव्या किम्?

**अभिनयः —** स्वच्छता सर्वदा कर्तव्या न तु अद्य केवलम्।

**दर्पणा —** के ते अतिथयः। ( इति सा एक वस्त्रखण्ठेन सर्वं स्वच्छति )

**अभिनयः —** दर्पणे अद्य चहपानार्थं संस्कारयुताः विद्वांसः अस्मद्गेहं आयान्ति।

**दर्पणा —** के ते।

**अभिनयः —** ते विदेशेषु वसन्तः भारतीयाः।

**दर्पणा —** तेषां चहापानेन किं प्रयोजनम्?

**अभिनयः —** किं दातव्यम्। ( इति हसति )

**दर्पणा —** तेषां पातुं व्रशिका, मदिरा, बीर इत्यादिकमपेक्ष्यते। तेषां चह-पानेन नोपयोगः।

**अभिनयः —** ते अस्मत् गृहं आयान्ति। अस्माभिः यत् पीयते तदेव दातव्यं विद्यते। नत्वन्यत्।

**दर्पणा —** किं दातव्यम्? कथय त्वमेव।

**अभिनयः —** चहांवा उत कार्फीवा।

**दर्पणा —** ते यत् खादन्ति, पिबन्ति तत् दाने अतिथ्यं भवति।

**अभिनयः —** तथा नहि।

**दर्पणा —** तर्हि कथम्।

**अभिनयः —** वयं यत् ददामः तत् तैः गृहीतव्यम्। ते भारतीयाः एव।

**दर्पणा —** ते विदेशेषु निवसन्ति बहुकालात्। तस्मात् ते विदेशीयाः एव।

**अभिनयः —** ते सर्वे अत्रैव बाल्ये भारतवर्षे उषित्वा विद्यामभ्यस्तवन्तः आसन्।

**दर्पणा —** विदेश निवासिनां अखाद्यं न विद्यते जगति।

**अभिनयः —** तथा मा वद। तेभ्यः यत् रोचते तत् ते खादन्ति। वयं व्यक्तिगत इच्छानुसारं न किमपि कर्तुं क्षमाः। भिन्नरुचिर्हि लोकः।

दर्पणा — आगन्तूणां नामधेयं किम्। ते कथं भूताः।

अभिनयः — ते परिणीताः। दम्पती द्वयं समागच्छति।

दर्पणा — दम्पत्योः नाम यथाक्रमं कथय।

अभिनयः — शशिः चन्द्रिका च।

दर्पणा — तौ दम्पती ?

अभिनयः — हां तौ दम्पती।

दर्पणा — अपिच।

अभिनयः — अरुणः छाया च।

दर्पणा — तौ दम्पंती ?

अभिनयः — हां तौ दम्पती।

दर्पणा — तेषां नामधेयानि भारतीय नामान्येव।

अभिनयः — हां तेषां नामध्येयानि भारतीयान्येव।

दर्पणा — तेषां नामधेयानां अर्थः कः।

अभिनयः — शशि इत्यस्य चन्द्रमाः इति चन्द्रिका इत्यस्य ज्योत्स्ना इति अर्थः।

दर्पणा — इदमर्थंद्वयं समींचीनं विद्यते :

अभिनयः — अरुणः इत्यस्य सूर्यः इति। छाया इत्यस्य प्रतिबिम्बः इति।

दर्पणा — सर्वाणि नामानि अतीव सुन्दराणि।

अभिनयः — भारतीयसंस्कृत्यां, भारत देशेच किं न सुन्दरं किं न मधुरं भवति। भारतीय संस्कृतिमवगाहितुं कलात्मक हृदयमत्यावश्यम्।

दर्पणा — किं ते चीरं धरन्ति उत पेन्टुं धरन्ति।

अभिनयः — नाहं जाने।

दर्पणा — आधुनिकेषु दिवसेषु वेषभूषाधारणे प्रजानां न नियमः वर्तते।

अभिनयः — तस्मात् अहं वच्मि नाहं जाने इति।

दर्पणा — अधुना द्रक्ष्यावः।

अभिनयः — भवती चषकादीन् अत्रैव स्थापय। उपवेष्टुं एकं वर्तुल फलकं अपिच तं परितः षट् कूचिकासनानि स्थापय।

दर्पणा — वर्तुलफलक समावेशः भविष्यति किं अद्य। (इति व्यवस्था करोति)

अभिनयः — (विहस्य) तद्वत् भविष्यति।

दर्पणा — सर्वं व्यवस्था कृता समीचीना।

अभिनयः — दर्पणे बहिः कवाट ताडनं भवति।

दर्पणा — (आकर्ण्य) द्वार घण्टानादमपि भवति।

अभिनयः — हञ्जे दर्पणे भवती गत्वा कवाटमुद्घाटयतु।

दर्पणा — अरे भवान् गत्वा द्वारमुद्घाटयतु।

अभिनयः — स्त्रीणां स्वागतव्याहरणं सुन्दरं आकर्षणात्मकं भवति।

दर्पणा — हां अहमेव गच्छेयम्। (इति कवाटोऽद्घाटनं करोति)

(ततः प्रविशन्ति क्रमेण अतिथयः। शशिः, चन्द्रिका, अरुणः, छायाच। शशिः घण्टा पेन्टुं अन्तः षर्टुं कृत्वा कलाकार शिरोजैः पूर्णपादत्राणे बध्वा प्रविशति। चन्द्रिकापि तथैव प्रविशति। अरुणः आपाद मस्तकं सूटधां धूम्र नळिकां मुखे निक्षिप्य पीयमानः प्रविशति। छाया बाहुहीन निचोलं धृत्वा सिगरेटुं पिबन्ती प्रविशति)

दर्पणा—सुप्रभातं अतिथिभ्यः। सुस्वागतम्। आयान्तु प्रविशन्तु अन्तः।

सर्वे — गुड् मार्निन्ङ्। (इति कथयन्ति)

अभिनयः — (तेषां अभिमुखं गत्वा) अभिवादये अतिथयः। (इति नमस्करोति)

**सर्वे** — (तस्य हस्तावलम्ब्य) हावु डु यु डु। (इति कथयन्ति)

**अभिनयः** — अत्रोपविशन्तु भवन्तः। (इति आसनानि दर्शयति)

**सर्वे** — वयं अनुगृहीतास्मः। (इति कुर्चीषु उपविशन्ति)

(अभिनयः दर्पणाच उपविष्टे)

**अभिनयः** — किं जलं अपेक्ष्यते।

**शशिः** — नहि।

**दर्पणा** — धूम्रवर्तिकायाः भस्मपेटिका इयं गृह्णातु। (इति भस्मपेटिकां तत्र स्थापयति)

**शशिः** — भोः अभिनय वः गृहं अत्यन्त सुन्दरं कलामयं अस्ति।

**चन्द्रिका** — सत्यमेव एतत् भवनं भुवनमिव प्रतिभाति।

**अभिनयः** — गृहमार्गणे परिश्रमा कृता किम्।

**शशिः** — नहि। भवद्भिः दत्तसंकेत पत्रं विद्यते खलु। अस्माभिः न कोपि परिश्रमः कृतः।

**अरुणः** — भवतां गेहः राजप्रासादः इव राजते।

**छाया** — (मुखात् धूम्रं विसर्जयन्ती) इदं गृहं कलाराधकानां गृहमिव प्रतिभाति।

**अभिनयः** — सत्यमेव अयं गेहः कलाराधकानां गेहः।

**शशिः** — भवन्तः कलाकाराः किम्।

**दर्पणा** — हां वयं कलाकाराः एव।

**शशिः** — अभिनयमहाभाग न प्रोक्तं भवता इतः परम्।

**अभिनयः** — अनागतसंदर्भः आसीत्।

**चन्द्रिका** — अजन्ता एल्लोरा दर्शनसमये अपि भवता न प्रोक्तम्।

**दर्पणा** — अजन्ता एल्लोरा दर्शनेन सर्वं इहलोकजीवनं व्यस्मरम्।

**छाया** — अयि अभिनय अहं एकं प्रश्नं त्वां प्रष्टुं इच्छामि।

**अभिनयः** — कस्ते प्रश्नः।

**छाया** — अजन्ता अजन्ता इति सर्वोपि कथयति पदस्यास्य कः अर्थः।

**शशिः** — छाये अजन्तापदस्य अर्थं न जानासि भवति।

**छाया** -- नाहं जाने। यदि त्वं जानासि तर्हि कथय।

**शशिः** — न+ज = अज+अन्त = अजान्ता। ज ह्रस्वीकरणे अजन्ता इति मे प्रतिभाति।

**चन्द्रिका** — अर्थः कः।

**शशिः** — ज इत्यस्य जन्म न व्यतिरेकार्थकः अर्थात् जन्मरहिता।

**चन्द्रिका** — पुनर्जन्म रहिता।

**शशिः** — अन्तः नाशनमपि न विद्यते। तस्मात् अजन्ता।

**चन्द्रिका** — अहो अद्भुतम् ते भाषणम् कथनम् च।

**अरुणः** — शशिमहोदय त्वं संस्कृतपण्डितः किम्।

**शशिः** — नाहं संस्कृत पण्डितः। किन्तु पञ्चम कक्ष्यातः एस. एस. सी. पर्यन्तं संस्कृतं सम्यक् अपठम्। तेन परिमित ज्ञानेन अहं एवं वच्मि।

**अभिनयः** — शशि महोदय भवान् एस. एस. सी. पर्यन्तं संस्कृतमधीतवान् अस्ति। अहो ते विद्या संपूर्णतां प्राप्ता।

**शशिः** — (विहस्य) अभिनय मे संस्कृत विद्या वर्षाकाल विद्या। तस्यां गंभीरता नास्ति।

**छाया** — दर्पणे महोदये। मम किञ्चित् पानीयमपेक्ष्यते।

**दर्पणा** — ददामि। (इति झरीपात्रात् पानीयं किरति)

**छाया** — (पीत्वा) प्रसादन कक्ष्या कुत्र विद्यते दर्शय दर्पणे।

**दर्पणा** — महाभागे एहि मया सार्धं। (इति उत्तिष्ठति)

**छाया** — हां। (इत्युथाय गच्छति तयासाकम्)

**अभिनयः** — शशि महोदय भवतः संस्कृताभ्यासमुद्दिश्य अजन्ता दर्शनवेलायां न प्रोक्तम्।

**शशिः** — भवन्तमिव अहमपि अजन्ता दर्शनेन आश्चर्यचकितः भूत्वा सर्वमपि जगत् व्यस्मरम्।

**अरुणः** — जगति प्रायेण सर्वेषां कलाराधकानां समागमः अजन्ता एल्लोरायामेव भवति। एतत् कलाराधकानां संगमस्थानं भवति।

**दर्पणा** — अस्माकं सर्वेषां समागमः अजन्तायां संजातः। अजन्ता समागमः मित्रसमागमाय हेतुः भवति।

**अभिनयः** — अजन्ताएल्लोरासंबन्धेन विना अस्मत् समागमस्य संभवः न भवत्येव अद्य।

**अरुणः** — अजन्ता शब्दस्योत्पत्तिः साधु इति मे भावना।

**अभिनयः** — अनेके नैक मार्गेषु व्युत्पत्ति कथयन्ति।

**शशिः** — किं ते अभिप्रायः। (इति अभिनयं पश्यति)

**अभिनयः** — ममाभिप्रायस्तु सुदीर्घः भवति। अधुना वक्तुं समयः अन्यः भवति। चहां शीतलतां प्राप्नोति प्रथमतः चहपानं कुर्वन्तु। दर्पणे चहां वितरतु भवती।

**दर्पणा** — अवश्यं कुर्याम्। (इति चहां सर्वेषां वितरति)

(सर्वे चहा पिबन्ति पिण्टकं खादन्ति)

**शशिः** — (क्रमुकचूर्णभरिणीं स्वकञ्चुकस्थानात् नीत्वा क्रमुकं खादति, सर्वेषामपि वितरति। सर्वे गृहीत्वा खादन्ति)

**चन्द्रिका** — अयि भोः अभिनय भवान् अजन्तामुद्दिश्य भवदीय व्युत्पत्ति कथयतु।

छाया — अयि भोः अभिनय भवान् संस्कृतं जानाति ।

अभिनयः — जानामि किञ्चित् ।

दर्पणा — किञ्चित् नहि बहु जानन्ति ।

शशिः — भवान् एम्. ए. परीक्षायां उत्तीर्णः अस्ति ।

दर्पणा — अयं पण्डितः ।

छाया — किं ? पण्डितः ?

अरुणः — पण्डिताः संस्कृतं सम्यक् जानन्ति ।

चन्द्रिका — एते एम् ए. नहि किम् ?

दर्पणा — एते एम्. ए. अपि अकुर्वन् ।

चन्द्रिका —- संस्कृत एम्. ए. किम् ?

दर्पणा — हां संस्कृत एम्. ए. अपिच भाषाशास्त्रे अपि एम्. ए. अकुर्वन् ।

छाया — अहो एम्. ए. द्वयम् ।

अरुणः — अभिनये गाने च निष्णाताः इति मे मतिः ।

चन्द्रिका — तत् कथम् अनुमीयते भवता ।

शशिः — अस्य रूपमेव तस्य पाण्डित्यं महिमानं च घोषयति ।

छाया — वयं भवन्तमुद्दिश्य सविस्तरं ज्ञातुं उत्सुकास्मः ।

शशिः — अयि भोः अभिनय भवतां संपूर्ण परिचयः ।

अभिनयः — दर्पणे ते पृच्छन्ति प्रत्युत्तरं देहि ।

दर्पणा — एते अभिनये संगीतेच लालसाः संस्कृत पण्डिताः । एते भारतीय परम्परां अभिलषन्ति । एते सर्वदा गृहं कलामयं कर्तुं इच्छन्ति । एते कविवराः ।

**शशिः** — अभिनयः इत्यनेन नाम्ना केवलं अनुमीयते अयं एकः उत्तम कलाभिमानी इति ।

**अरुणः** — अद्य अत्रैव आकण्ठं पर्वभोजनं करिष्यामः यतः अयं उत्तम कलाभिमानी इति ।

**छाया** — अवश्यं अत्रैव भोक्ष्यामः। (सर्वे हसन्ति)

**चन्द्रिका** — अभिनय महोदय अजन्तां वयं सर्वे द्रष्टुं गताः। अजन्ता व्युत्पत्तिमुद्दिश्य को भवतां अभिप्रायः।

**अभिनयः** — अजन्ता इत्यस्य पदस्य अर्थः एवमिति मे मतिः।

**शशिः** — कथयन्तु अस्मान्, प्रकाशितवतः कुर्वन्तु।

**अभिनयः** — चिन्त धातुः विद्यते। सः धातुः चुरादि गणीयः। तस्मात् धातोः नामवाचक रुपः चिन्ता भवति। न+चिन्ता=अचिन्ता अर्थात् अत्र निवसतां जनानां लौकिक चिन्ता न भवति।

**छाया** — अजन्ता किम्।

**अभिनयः** — अचिन्ता अपभ्रंशरुपेण जाता अजन्ता। यत् शशिना प्रतिपादितं तदपि सत्यमेव। इयं व्युत्पत्तिः चिन्त धातोः समुत्पन्ना इति मे मतिः।

**शशिः** — भवद्भिः सम्यक् प्रतिपादितं यतः जगति यत् दृश्यं तन्नश्यं भवति तस्मात् मम व्युत्पत्तिः असाधु रिति मे प्रतिभाति। अयि भोः भवतां अभिप्रायः कः अजन्ता सौन्दर्यमुद्दिश्य।

**चन्द्रिका** — भवान् पण्डितः कलाकारः कविश्च। यदि भवान् वक्तुं न समर्थः अन्यः कः कथयितुं समर्थः भवति।

**अभिनयः** — अजन्ता कुडचचित्रं सौन्दर्याणां आयतनम्। मानवस्य चित्रकलायाः पराकाष्टास्थानं इदम्। अजन्ता सुन्दरी सदृशाः जगति स्त्रियः न विद्यन्ते। एतत् सर्वं चित्रितमपि सहजसौन्दर्य शोभितमिवाभाति। मे अजन्ता चित्रकलापेक्ष्या एल्लोरा शिल्पकला अतीव रोचते।

**शशिः** — अहं एल्लोरामुद्दिश्य प्रष्टुं उद्युक्तः अभवम्। किन्तु अजन्तामुद्दिश्य कथनानन्तरं तं प्रश्नं प्रष्टुं निश्चितोऽस्मि। किन्तु प्रसङ्गवशात् भवानेव वक्तुं प्रयतते।

**अभिनयः** — एल्लोरा शिल्पकलायाः आयतनम्। जगति शिलासु शिल्पाः न कुत्रापि एल्लोरां अतिक्रामन्ति सौन्दर्ये।

**चन्द्रिका** — एल्लोरायाः अर्थः कः।

**अभिनयः** — वेरूळ् ग्रामसकाशे विद्यते, तस्मात् सः प्रदेशः वेरूळ प्रदेशः। तत्र द्वादश ज्योतिर्लिङ्गेषु एकः विख्यातः वैद्यनाथ नामकः शिवालयः वर्तते। वेरूळ शब्दः इल्वलपुर शब्दात् प्रादुरभूत् कालक्रमेण एल्लोरा अभूत् इति केषांचन मतम्।

**अरुणः** — तत्र अनेक धर्माणां मूर्तिकळाः संदृश्यन्ते। तासां कलानां माहात्म्यं सविस्तरं कथय।

**अभिनयः** — तत्र धर्मत्रयाणां अमर सौन्दर्य संगमः जातः।

**छाया** — के ते धर्माः।

**अभिनयः** — हिन्दुधर्मः। बौद्धधर्मः। जैनधर्मश्च।

**अरुणः** — ते कथं विभक्ताः आसन्।

**अभिनयः** — मध्ये हैन्दवधर्म शिल्पकलाः राजन्ते। तस्य धर्मस्य उभयतः बौद्धधर्म शिलाखण्डाः जैनधर्म शिल्पखण्डाश्च राजन्ते।

**शशिः** — हिन्दु धर्म कलाखण्डस्य आयतनस्य नाम किम्।

**अभिनयः** — आयतनस्य नाम कैलास देवालयः इति। स देवालयः एकस्मिन् महाशिलाखण्डे तक्षितः। तत्र सर्वे शिल्पाः नृत्यन्ति गायन्ति हसन्ति विलपन्ति, विचारयन्ति च। सर्वोऽपि देवालयः कलायतनं भाति।

**चन्द्रिका** — कथं अस्मदीय पूर्वजाः तं देवालयं अतक्षन्।

**अभिनयः** — केवलं सत्वेन ते पूर्वजाः अकुर्वन्। पूर्वजानां शक्तीनां अवधयः न आसन्। ते कथं क्षपासु अन्धकारबंधुरकाननेषु, वर्षासु, आतपेषु शीतवातेषु, निर्जनारण्येषु अद्रिषु कैः साधनैः कथं कतिवत्सराणि अतक्षन् न कोपि जानाति।

**अरुणः** — अधुना विज्ञानशास्त्रं प्रगति रूपं भेजे। अधुना तादृशं कर्तुं सुकरं भवति।

**अभिनयः** — अधुनापि सुकरं न भवति। यदि सुकरं भवति तर्हि तादृश शिल्पसृष्टि कर्तुं अशकताः भवन्ति। सः युगः अन्यः। तेषां अभिरुचिः अन्या। सा अपरा सृष्टिः। इयं शिल्पकला इयं कुड्य चित्रावलिः अपिच सर्व भारतीयकला अपराजिता भाति।

**छायाः** — आधुनिकाः न करिष्यन्ति। आधुनिकाः कलां न जानन्ति।

**अभिनयः** - केवलं आधुनिकाः विडम्बनां करिष्यन्ति नान्यत्। आधुनिकाः कलामुद्दिश्य न जानन्ति।

**छाया** — अजन्ता चित्रकलापेक्ष्या एल्लोरा शिल्पकलापेक्ष्या लोके आधुनिक वेषभूषासु विद्यमानाः सुन्दर्यः मे परं शिल्पकलाः कुड्य चित्राणीव संदृश्यन्ते। आधुनिकाः सुन्दर्यः परं सौन्दर्यवत्यः इति मे प्रतिभाति।

**अभिनयः** — छाये त्वं सौन्दर्यमुद्दिश्य न किमपि जानासि।

**शशिः** — सौन्दर्यस्य व्युत्पत्ति का।

**दर्पणा** — अयि अभिनय एतावत्पर्यन्तं अजन्ता प्रकरणमुद्दिश्य अपिच एल्लोरा प्रकरणमुद्दिश्य यत् अस्माभिः चर्चा कृता मया सा सर्वा सम्यक् लिखिता। अधुना सौन्दर्य प्रकरणं प्रारंभिष्ये।

**अभिनयः** — यत् विलिख्यते त्वयाऽधुना तत् सर्वं एक नाटकरूपेण भावि कलाकारैः प्रयोगरूपेण प्रदर्शयितुं योग्यं भवतीति मे अभिप्रायः।

**दर्पणा** — अस्मदीय भाषणं सर्वमपि नाटकरूपेण यथा प्रयोक्तुं योग्यं भवति तथा अहं लिखामि।

**छाया** — सौन्दर्यस्य व्युत्पत्ति कथयन्तु भवन्तः।

**अभिनयः** — हां कथयामि सौन्दर्य व्युत्पति श्रृण्वन्तु भवन्तः। सुन्दरतायाः भावः सौन्दर्यम्।

**छाया** — सौन्दर्ये प्रकाराः सन्ति किम्।

**शशिः** — यदि प्रकाराः सन्ति सविस्तरं कथयतु भवान्।

**अभिनयः** — चतुर्विधानि सौन्दर्याणि सन्ति।

**अरुणः** — तानि सर्वाणि कथं संक्रमिष्यन्ति चेतनाऽचेतनानां जगति।

**अभिनयः** — सौन्दर्यं न कोऽपि क्रेष्यति। तत् आपणे न लभते। तत् जन्मतः संक्रामितं भवति।

**छाया** — भवान् एतत् सुन्दरं इति कथं निर्णयिष्यति। केवलं वदनं आकर्षणात्मकं विद्यते इति सा नारी उत सः पुरुषः सुन्दरी सुन्दरः इति कथयति किम्।

**अभिनयः** — सौन्दर्यं एकत्रैव न धनी भवति तत् सर्वव्याप्तं देहे उत वस्तुनि दृश्यते। केचन सौन्दर्यं भावयितुं अशक्ताः भवन्ति कथ्यमानाः अपि ते अवगाहितुं असमर्थाः भवन्ति।

**अरुणः** — तस्मात् कथं तैः अवगाहियिष्यते।

**अभिनयः** — पश्य। अजन्ता एल्लोरा दर्शनेन कजुराहो दर्शनेन मानवः सौन्दर्यमित्यस्य पदस्य अर्थं विचारयिष्यति।

**छाया** — विना च एल्लोरा अजन्ता दर्शनं मानवः सौन्दर्यं प्रति न चिन्तयिष्यति।

**अभिनयः** —- न चिन्तयिष्यतीति नाहं कथयामि। किन्तु कलाखण्डस्य दर्शनेन विचारहीनोऽपि पूर्णतया अवगाहनं कर्तुं प्रयतिष्यति।

**अरुणः** — अयं उत्तरः अर्थरहितः।

**अभिनयः** — यूयं किमर्थं आगतवन्तः अजन्तां द्रष्टुम्।

**अरुणः** — लोकः मुक्तकण्ठं अजन्तां एल्लोरामुद्दिश्य कथयति तस्मात् द्रष्टुं आगतास्मः।

**अभिनयः** — किं दृष्टानि भवता? किं तृप्तिः संजाता?

**अरुणः** — कथने कीदृशः उत्साहः, श्रवणे कीदृशः आनन्दः, वर्तते तादृशः आनन्दः दर्शने न विद्यते।

**चन्द्रिका** — अरुण, तथा मा वद कतिचित् चित्राणि अतीव हृदयङ्गमानि सन्ति। कानिचन साधारणानि वर्तन्ते।

**शशिः** — ममापि न किमपि आश्चर्यकारकं विद्यते।

**अभिनयः** — आधुनिकाः जनाः स्वतः ते सुन्दराः न सन्ति। सौन्दर्यं न विचारयिष्यन्ति। सौन्दर्यं विलोक्यापि विचारधारां न प्रसारयन्ति। ते अतीव जीवन लोलुपाः भवन्ति।

**चन्द्रिका** — आधुनिकानां विमर्शनात्मका बुद्धिः वर्तते तस्मात् ते सर्वं सुन्दरमिति नाङ्गीकुर्वन्ति।

**अभिनयः** — (विहस्य) अधुना प्रपञ्चः विज्ञानं इति मोहान्धकारे पतित्व सर्वं विज्ञानेन बध्वा सर्वं विमर्शयन्ति तत् न योग्यम्।

**शशिः** — भवान् आधुनिकान् नाङ्गीकरोति।

**अभिनयः** — तथा नहि। अधुना प्रपञ्चे एकः व्याधिः प्रसृता अस्ति।

**शशिः** — का व्याधिः।

**अभिनयः** — आधुनिकाः प्रपञ्चे सुन्दरं असुन्दरं मन्वते। असुन्दरं सुन्दरं मत्वा कथयन्ति। सौन्दर्यं सर्वस्य कथं भवति इति न कदापि चिन्तां कुर्वन्ति। सर्वोऽपि अनुकरण व्याधिना पीडां भजते। अनुकरणेन सौन्दर्यं कथं भवतीति न कापि उत न कोपि चिन्तयति। काकः न कुक्कुटायते न मयूरायते इति न कोपि चिन्तयति।

**शशिः** — सर्वोऽपि सुन्दरः सर्वापि सुन्दरी न भवतः किम्।

**अभिनयः** — नहि!

**शशि:** — सुन्दरतां कथं निर्धारयिष्यति भवान्।

**अभिनय:** — सौन्दर्यं एक अवयवाश्रितं न भवति। तत सर्वत्र सर्वावयेषु प्रसारितं व्याप्तं भविष्यति। एकमात्र दर्शनेन प्रथम दर्शनेन केवलं आपादमस्तकं यत् आकर्षणात्मकं दृश्यते अपि च चलनेषु विभिन्नासु भङ्गिमासु आह्लादात्मकं भवति तदा तत् सौन्दर्यात्मकं भविष्यतीति रसिकानां अभिप्राय:।

**अरुण:** — भवता प्रोक्तं सौन्दर्यं चतुर्विधं वर्तते इति तत् कथं प्रतिपादयतु।

**अभिनय:** — अहं संस्कृत भाषायां सौन्दर्यमीमांसा इति पुस्तकमेकं विलिखामि। तस्मिन् ग्रन्थे मया बाह्य सौन्दर्यमुद्दिश्य एवं प्रतिपादितम्।

(१) जन्मत: सर्वाङ्गविकासेन संक्रामितम्।
(२) पोषण व्यायाम संवर्धितम्।
(३) स्नान विलेपनाहार्यादि प्रभासितम्।
(५) विडम्बना वर्धितम्।

**चन्द्रिका** — यदि भवतां आलोचनानुसारं पश्येम सुन्दर पुरुषा: सौन्दर्यवत्य: स्त्रिय: अतीव विरला: भविष्यन्ति।

**अभिनय:** — सौन्दर्यं सर्वत्र न भवति।

**दर्पणा** — स्त्रीणां केशसंपत सौन्दर्य साधनं भवति।

**अरुण:** — येषां केशसंपत् विरलं भवति तेषां सौन्दर्यं नास्तीति भवतां अभिप्राय: किम्।

**अभिनय:** — प्रपञ्चसाहित्ये शिरोजानुद्दिश्य सर्वे कवय: अधिकतरं सुन्दरं वर्णयामासु:। सौन्दर्यस्य शिरोजसम्पत् अङ्गं भवति। न कापि तन्वी शिरोजान् तृणी करिष्यति।

**अरुण:** — तस्मात् ते सम्यक् केशकर्तनं विधाय शिरोजान् अलं कुर्वन्ति।

**अभिनय:** — शिरोज कर्तनेन अलङ्कार: कथं भवति। तथा कर्तनमेव अयोग्यमिति मे अभिप्राय:। शिरोज कर्तनं नारीणां न्यूनसौन्दर्यस्य हेतु: भवति। तत् न जानन्ति मौढ्या: नार्य:।

**चन्द्रिका** — बह्व्यः स्त्रियः अर्धशिरोज कर्तनेन अत्यन्त सौन्दर्ययुक्ताः इव दृश्यन्ते ।

**छाया** — शिरोज कर्तनं सर्वेषां मण्डनं न भवति। कासांचन अतीव सुन्दरं भवति यदि ते स्वतः आजन्मतः सुन्दर्यः चेत् ।

**अभिनयः** — तत् सत्यं । सहज सौन्दर्यवतीनां शिरोजकर्तनं शिरोज मण्डनं सम्यक् सुन्दरं च भवति न तु सर्वासाम् ।

**दर्पणा** — शिरोज सम्पत् येषां विद्यते ते शतशः सौन्दर्यवर्धन कारक वेणीबन्धनानि करिष्यन्ति । शिरोज कर्तनेन एकमेव सौन्दर्यं भवति पिशाचानां इव ।

**अरुणः** — दर्पणे तथा मा वद । आङ्गलेयाः शिरोज कर्तनेन सुन्दर्यः भवन्ति ।

**अभिनयः** — आङ्गलेयानां अन्यपाश्चात्यानां तत् सम्यगेव भवति । यतः ताः सर्वाः पुरुषवेषे विडम्बमानाः धूम्रपानं कुर्वन्ति। तेषां शरीरधर्मः पुरुषाणामिव प्रतिभाति । तत् सौन्दर्यं नास्ति । भारतीयानां सौन्दर्य विषये अनेके ग्रन्थाः विलिखिताः । भारतीयानां सौन्दर्य विषये अनन्य साधारण आलङ्कारिक परम्परा विद्यते ।

**चन्द्रिका** — का सा परम्परा ।

**अभिनयः** — चीरधारणं, शिरोजालंकरणं, शृङ्गार चेष्टादिक करणं इत्यादिकम् । अपि च स्त्रीणां शरीरंतु पुरुषाणामपेक्ष्या भिन्नतया दृश्यते । तत् पाश्चात्य स्त्रीपुरुषेषु न संदृश्यते ।

**दर्पणा** —- तस्मादेव सकल धरातलं अजन्तां आगत्य प्राचीन संस्कृतिं ज्ञात्वा भारतीय सौन्दर्यस्य दासतां भजते । षेक्स्पियर महाकविः एकस्मिन् नाटके भारतीय स्त्रीणां सहज सौन्दर्यं चीरवेष्टने भ्राजते इति उल्लेखितवान् ।

**छाया** — तत् कथम् ।

**अभिनयः** — शरीरस्य विना चीर वेष्टनं अर्धनग्न वस्त्राच्छादनेन

मण्डनं भवति तर्हि तत् मण्डनं नहि तत् जुगुप्सा कारकं मण्डनं भवति। साधारणतः गोपित वस्तुषु उत्सुकता, रसिकता, अधिका प्रतिभाति। बहिः प्रकटीकृत वस्तुषु उत्सुकता न भवति किन्तु जुगुप्सा भवति। केषांचन सहज सुन्दरीणां सर्वावयव पोषणेन मांसवसादि बिकारेण लावण्येन शरीर धर्मः सम्यक उत्तेजात्मकं भवति। तादृशाः स्त्रियः यत् किमपि कुर्वन्ति यत् किमपि धरन्ति तत् सर्वं सुन्दरं भवति। न तु सर्व्रासाम्। मूढाः जनाः तत् न पश्यन्ति अपि च न विचारयन्ति।

**शशिः** — तस्मात् शिरोजालंकरणं, चीरमण्डनं अन्यालङ्करणानि स्त्रीणां सौन्दर्यं विषये उत्तम स्थानमभजन्।

**दर्पणा** — शिरोज कर्तनेन सर्वाः सौन्दर्यवत्यः न भवन्ति।

**अभिनयः** — यदि शिरोज कर्तनेन सोन्दर्याधिक्यं भवेत् तर्हि निकृन्त शिरोजालङ्कृतवत्यः नार्यः सर्वाः सुन्दर्यः भवेयुः एव। किन्तु तथा न भवन्ति। भूत प्रेत पिशाचादीनां दृश्यं कल्पयन्ति।

**छाया** — बालिकानां शिरोज कर्तनं सम्यक् भवति।

**दर्पणा** — बालिकानामपि शिरोज कर्तनं न सौन्दर्य प्रसादनं भवति।

**अभिनयः** — शिरोज कर्तनम् एक व्याधि रूपेण प्रसारिता। सौन्दर्यं वितर्कितवत्यः युवत्यः पाश्चात्य व्यामोहेन कुर्वन्ति। ताः न जानन्ति सौन्दर्य मुद्दिश्य किमपि। "किमवहि मधुराणां मण्डनं नाकृतीनाम्।"

**छाया** — सौन्दर्यमुद्दिश्य कानि पुस्तकानि उत काव्यानि विद्यन्ते।

**अभिनयः** — संस्कृत भाषायां सर्वमपि अलंकार शास्त्रं सोन्दर्यमुद्दिश्यैवास्ति। साधारणतः संस्कृत भाषायां सर्वेपि कवयः यथासंदर्भं सौन्दर्य शास्त्रमुद्दिश्य अकथयन्। तत् सर्वमपि शास्त्रं पठित्वा विलोक्य च शिल्पिनः शिल्पकलां अवर्धयन्। सौन्दर्यशास्त्रं संस्कृतभाषायां परिपुष्टं परिपूर्णं विद्यते।

**दर्पणा** — सर्वेपि अजन्ता गुहाः एल्लोरागुहाश्च बहुकालात् प्राक् सौन्दर्यप्रसाराय पूर्वजैः चित्रिताः शिल्पिताश्चाभवन्। अल्पज्ञाः मूढाः पाश्चात्या

व्यामोहे बंभ्रम्यमानाः अन्धाः परम्परागत संस्कृतिं अलङ्कारचयं च नाशयन्ति इति मे मनीषा।

**अभिनयः** — हां सा एव मम मनीषाऽपि।

**छाया** — शिरोज कर्तनं नारीणां असौदर्यस्य हेतुः इति भवतां सिद्धान्तः।

**दर्पणा** — इयं सर्वेषां मनीषा न केवलं आवयोः।

**अभिनयः** — जगति सर्वं सौन्दर्ययुक्तं न भवति।

**अरुणः** — (जलं झरीपात्रात् सर्वेभ्यः वितरति) अद्य सौन्दर्यमुद्दिश्य बहु विषयाः ज्ञाताः आसन्। तथैव यदि नाटयमुद्दिश्यापि किञ्चित् ज्ञाप्यते तर्हि वयं किञ्चित् भारतीयतां ज्ञास्यामः।

**अभिनयः** — नाठ्यमुद्दिश्य कथयितुं अयं समयः नहि। अनन्तरं यदा कदापि कथयेयम्।

**छाया** — तथा मा वदतु भवान्। इयन्तं विषयं कथयन्तु यत् यः कोऽपि सम्बन्धः विद्यते वा नाटयसौन्दर्ययोर्मध्ये।

**अभिनयः** — द्वयोर्मध्ये बहुसम्बन्धः विद्यते। सौन्दर्यस्य यथा चतुर्विध रीतयः वर्तन्ते तद्वत् नाटयस्यापि चतुर्विध रीतयः वर्तन्ते।

**छाया** — कास्ताः। (इति धूम्रवर्तिं ज्वालामति धूम्रं पिबति नाशापुटाभ्यां धूम्रं त्यजति)

**दर्पणा** — (धूम्रपात्रं तस्याः पुरतः निक्षपति)

**अभिनयः** — कथयामि श्रृणु। आङिगक आहार्य वाचक अभिनयमिति नाटयं चतुर्विधं वर्तते।

**अभिनयः** — अङग सम्बन्धि अर्थात् करचालन शरीराकुञ्चनमित्यादिकं आङिगकं भवति। आहार्यं यथारसं वेषभूष कबरीभर धारणम्। वाचकमित्यस्य कुत्र कदा कथं विचार संचार प्रयत्नैः यथाभिनयं भाषणं कर्तव्यं तत् वाचकं भवति। अभिनयं नाम भाव प्रकटनया नवरसोन्मेष शालिन्या यदि कथावस्तु नटः अभिनयति सः अभिनयः भवति।

**चन्द्रिका** — अत्र सौन्दर्यस्य आवश्यकः कथम् भवति। सर्वोऽपि उपरोक्त प्रकारेण चतुर्विधाभिनयं करिष्यति।

**अभिनयः** - जगति सर्वे सर्वेषां नहि। कानिचन केषांचन अन्ये च अपरेषां भवन्ति।

**चन्द्रिका** — नाटयं सुन्दराः सुन्दर्यः केवलं करिष्यन्ति ?

**अभिनयः** — केवलं सुन्दर्यः सुन्दराः अपि नाटयं न करिष्यन्ति।

**छाया** — भवदीय भावनां विशदयन्तु।

**अभिनयः** — विना च सौन्दर्यं चतुर्विधाभिनयम् पराकाष्ठां न भजते।

**चन्द्रिका** — नाटयं कर्तुं सुन्दर शरीरयष्टिः अपेक्ष्यते किम्।

**अभिनयः** — चञ्चलचालन गात्री सौन्दर्यमूर्तिः नाटयं कर्तुं सक्षमा भवति। यदि सौन्दर्यं नास्ति सा नाटयं कर्तुं अयोग्या भवति अनर्हा भवति।

**छाया** — सर्वाः स्त्रियः पुरुषाः सर्वे कर्तुं न शक्ताः किम् ?

**अभिनयः** — सर्वाः स्त्रियः कर्तुं शक्ताः भवन्ति। किन्तु सुन्दर स्त्रीणां नृत्यं नाटयं लास्य प्रेक्षकानां आनन्ददायकं भवति। न तु सर्वासाम्।

**छाया** — तस्मात् सुन्दर्यः केवलं नाटयशिक्षिताः भवितव्याः इति भवतां अभिप्रायः।

**अभिनयः** — हां सुन्दर्यः नाटयशिक्षिताः भूत्वा नाटयकलां स्वीय सौन्दर्य हावभावादिभिः दर्शयित्वा रसिकजन मनोभिरामां करिष्यन्ति। अन्याः याः सौन्दर्यहीनाः सन्ति ताः सम्यक् शिक्षणां गृहीत्वा शिक्षिकाः भूत्वा कलां सर्वव्यापिनीं कुर्वन्तु इति ममाभिप्रायः। विना च सौन्दर्यं, समस्सम विभक्ताङ्गं विद्युदीव स्फुरणं, शीघ्र कर चालनादिकं, ताल राग भावज्ञानं, कला क्लिष्टेन अभ्यस्तापि सा सौन्दर्यहीना भवति।

**छायाः** — विना सौन्दर्यं नाटयं न भवति किम्।

**दर्पणा** — सौन्दर्यहीनं नाटयं लावण्यहीन वपुरिव भवति।

**अभिनयः** — तन्नाटयं कदापि मनमोहनं न भवति।

अरुणः — पाश्चात्य देशेषु सर्वेपि नाटचं कुर्वन्ति तत् सम्यगेव भवति ।

अभिनयः — अधुना लोके सर्वोऽपि पाश्चात्य व्यामोह व्यधिना पीडितः अस्ति । सः सर्वं सर्वदा पाश्चात्य जीवनपद्धत्या तोलयित्वा पश्यति । एतादृश्य चिन्तना देशद्रोहकारी भवति । सर्वोपि देशः स्वत्वेन विराजते । किन्तु वयं भारतीयाः स्वत्वं निहाय परान् अनुकुर्मः । इयं स्थितिः पतनोन्मुखी भवति ।

अरुणः — भवन्तः किञ्चित् आवेशेन कथयन्ति सर्वमपि ।

अभिनयः — आवेशेन नहि महदाशयेन कथयामि । शृणु । पाश्चात्यानां नाटचेषु भावः नास्ति । तेषु नाटचेषु केवलं चलनचालनं भवति । तन्नाटचं व्यायाम पूर्णम् ।

अरुणः — नाटचशास्त्रं सर्वं व्यायाम परिपूर्णं दरी दृश्यते ।

अभिनयः — अङ्गी करोमि किन्तु व्यायामेपि भाव प्रकटना कथा वस्तुमाश्रित्य सर्वरससंकुला सामाजिकान् आनन्द पारवश्याम् करोति । तादृशी भावना रसपूर्णता तेषु नाटचेषु शून्या भाति । तत् नाटचं कामगुणं प्रकोपयति । नाटचमुद्दिश्य भारतीय कल्पनाः अन्याः । भारतीयानां सर्वाः कलाः श्रृङ्गारपूर्ण भक्तिभावैः परिपूर्णाः भूत्वा शान्ते पर्यवसिताः भवन्ति । एतादृशी भावना तेषां न विद्यते । ते केवलं कामावाञ्छा अभिवृद्धयर्थं नाटचं कुर्वन्ति । तत् सामूहिकं ।

छाया — द्वयोर्नाटचोः मध्ये महदन्तरं विद्यते ।

अभिनयः — पाश्चात्यानां नाटचेषु भावः नास्ति । तेषु नाटचेषु कामुकता वर्तते । तेषां नाटचानां सौन्दर्य प्राधान्यं नास्ति तत्र सर्वेपि नाटचं कर्तुं सक्षमाः भवन्ति । ते सामूहिक नाटचं करिष्यन्ति । मम दृष्टचा तन्नाटचं नाटचं नहि । तच्चशास्त्रं नहि । तन्नाटचं सर्वोऽपि करिष्यति ।

छाया — भारतीयानां कथं वर्तते ।

अभिनयः — भारतीय नाटचं जन्मतः याः सुन्दर्यः अत्यन्त उत्साहिन्यः विद्यन्ते तासामेव नाटचं योग्यं भवति न तु सर्वासाम् ।

**छाया** — तथा यदि स्यात् भारतीयानां नाटचं सर्वेषां नोपयोग्यं भवति। सर्वेपि तस्मिन् नाटचे निष्णाताः न भविष्यन्ति।

**अभिनयः** — सर्वेणापि नाटच निष्णातः भवितुं शक्यते। किन्तु ते नाटच करणे अयोग्याः भवन्ति। यदि तादृशाः सौन्दर्यहीनाः भावनारहिताः नाटचं करिष्यन्ति तर्हि सामाजिकेषु न कोपि रसग्राही भविष्यति। सर्वे सामाजिकाः कुडचस्तम्भाः एव भविष्यन्ति। न केवलं भारतीय नाटचं, किन्तु जगति सर्वे सर्वेषां न भवन्ति। सर्वोऽपि सर्वं प्राप्तुं यत्नः करणं अयोग्यं भवति।

**अरुणः** — कथं तादृश नियमः विनिमयाश्च विद्यन्ते।

**अभिनयः** — सर्वं जगत् नियम विनियमाधीनं वर्तते तस्मात् जगति विद्यमानेष्वपि नियम विनियमाः वर्तन्तें यतः वयं जगति वर्तामहे।

**दर्पणा** — यदि त्वं आपणं गत्वा किमपि वस्तुक्रयणे सर्वाङ्ग सुन्दरं वस्तु शल्य परीक्षां कृत्वा आनंददायिनं वस्तु आकर्षणात्मकं वस्तु क्रीणासि किमर्थम्? तथैव जगति सर्वे आनन्दाकर्षणात्मक युवतीनां नाटचमेव द्रक्ष्यन्ति आनन्दमनुभविष्यन्ति। इयं लोकपरिपाटिः। इयं कला।

**अरुणः** — सौन्दर्य नाटचयोर्मध्ये अत्यन्त सन्निहितत्वं विद्यते इति अधुना मया ज्ञातम्।

**अभिनयः** — तस्मादेव अजन्ता कुडचचित्राणि एल्लोरा शिल्पानि कजुराहो शिल्पानि अचेतनानि किन्तु सर्वरसिकानां हृदयाह्लादकानि भवन्ति। यदि तानि सर्वाणि चलेयुः तर्हि तानि देवता मूर्तयः भूत्वा सर्व प्रपञ्चं उन्मत्तं करिष्यन्ति। एतादृश सौन्दर्यं जगति न कुत्रापि विद्यते। शिरोज कर्तनेन चित्रविचित्र वेष्टनेन अङ्गरागादीनां उपयोगेन सौन्दर्यवत्यः न भवन्ति।

**चन्द्रिका** — तर्हि केन प्रकारेण सौन्दर्मवत्यः भवन्ति।

**अभिनयः** — जन्मतः संक्रामित सौन्दर्य नृत्य नाटच संगीत कवितादिभिः संमिश्रितं वपुः सुन्दरं भवति। यदि एतादृशं सौन्दर्यसंपत् युवत्यां उत पुरुषे वर्तते तत् सौन्दर्यं दिव्यमेव भवति।

**शशिः**—तस्मात् चित्रलेखनशिल्पकवितानृत्यगायनमित्यादि ललितकला सांज्ञिकं इति कथयन्ति।

**दर्पणा** — तादृश सौन्दर्य संगीत कविता नाट्य शिल्पादीनां अभ्यसनं प्रशिक्षितत्वं च पूर्वजन्म सुकृदादेव संजायेते नत्वन्यथा।

**अभिनयः** — चतुष्षष्टि कलानां समवायः एव नाटयं। नाटये कवितायां च सर्वकलाः संदृश्यन्ते।

**छाया** -- अन्ततः निष्कर्षः कः। का सुन्दरी भवति जगति। कथयन्तु।

**अभिनयः** — जगति अजन्ता, एल्लोरा, कजुराहो इत्येतत सौन्दर्य त्रयं अपराजितं भवति नत्वन्यत्। सर्वमपि भारतं कलामयं भवति। भारतस्य भरतखण्डमिति नामान्तरं विद्यते। अधुना अहं नामान्तरं करोमि तत् भारतं कलाखण्डं इति।

**अरुणः** — अधुना अभिनयः स्वीयरचित गीतिकाभ्यः एकां गीतिकां श्रावयिष्यति गानरूपेण।

**छाया** — वयं सर्वे श्रोतुं उत्सुकाः स्मः गायन्तु अभिनय महोदयाः।

**अभिनयः** — अधुना मया गातव्यं किम्?

**छाया** — हां गातव्यम् इति सर्वेषां आग्रहः।

**अभिनयः** — अधुना नाहं गास्यामि। मया एकदा गीतं तां गानध्वनि मुद्रिकां चालयेयम्।

**चन्द्रिका** — तथैव ध्वनिमुद्रिकां चालयन्तु।

**अभिनयः** — दर्पणे ध्वनिमुद्रिकां चालय।

**दर्पणा** — यथाज्ञापयति भवान्। (इति अन्तः गत्वा चालयित्वा आगच्छति)

**गीतम् (भैरवी रागे)**

रमते कैषा वर्षा तरुणी
वर्षासिञ्चित गात्री श्यामा
मलयाशानिल ज्वालितकामा
तटिदिव पीता चञ्चल रामा ध्रु.

ग्रीष्मातप ग्लापित मानसरङ्गे
भावजवल्ली वलयित तुङ्गे
केवल मन्मथ सहचर सङ्गे
संतत चिन्तनकर्शित मदङ्गे १

उद्धृत वसनात् दर्शित वर्तुलजङ्घा
वेणीबन्धन छलनात् दर्शितकक्षा
अधरस्पन्दन दर्शित चुम्बनशिक्षा
मनसिज कुडमल रुपितवक्षा २

अम्बरगलिता चान्द्रमसीशकला
जलधरगर्जन विगलितचपला
रम्भानर्तन स्रस्ता काञ्चीमाला
रमते युवजन भावजशाला ३

( सर्वे करताल ध्वनिं कुर्वन्ति )

**शशि:** — ( उत्थाय ) तत्र भवन्तो रसिकाः मित्रोत्तमाः। अद्य अभिनय दर्पणे स्वकलात्मक दृष्ट्या भावनया च अस्माकं अजन्तामुद्दिश्य एल्लोरामुद्दिश्य सौन्दर्यं नाट्यमुद्दिश्य इष्टागोष्ठिषु सविस्तरं अवोचताम्। तस्मात् अस्मत् पक्षात् ताभ्यां धन्य-वादान् वितरामि।

**दर्पणा** — ( उत्थाय ) अस्मदीय भाषणं सर्वमपि अपराजितम् इति नाटक रूपेण मम लेखिनीद्वारा परिसमाप्तम्। युष्मान् सर्वान् एतादृश सुसमय कारकान् च संश्लाघ्य शुभास्ते पन्थानः सन्तु इति अहं परिसमापक वाक्यानि ब्रवीमि। ओशम्।

( सर्वे उत्थाय एकैकशः हस्तचालनं विधाय गच्छन्ति, रमते कैषा ध्वनिमुद्रिका चलति सर्वे गानं शृण्वन्तः सरन्ति )

( यवनिका पतति )

## ।। मतिभ्रमणम् ।।

(ततः प्रविशति घूर्णितशरीरः पिबन् सुमतिः)

**सुमतिः** — तमहं मारयेयम् । तं जीवन्तं न पश्यामि । तेन मित्रद्रोहः कृतः । सः पापात्मा । सः चिरकालं जीवितुं नार्हः । मधुरं जल्पन् मे उदरे छुरिकामचालयत् । सर्वं मे समक्षं वृत्तम् । मे मतिभ्रमणं जातम् । अहं सुमतिः । मे मतिः कलङ्किता । मे मतिः भ्रमते । मे निस्सारे संसारे शान्ति र्नास्ति । इयं पत्नी दुष्टा । अति कामतृष्णाभूयिष्टा । अत्याशा पूरिता । जगति अत्याशा दुःखास्पदा भवति । एषा पुंश्चली । अस्मिन् काले निरोधः व्यभिचाराय आस्पदं भवति । अयं मे मित्रं इति मया व्यवहृतम् । सः पातकं चकार । अहं कुत्र वसेयम् । अयं संसारः निस्सारः । जगत् सर्वं मायावृत्तम् । (इति अधः पतति)

(यवनिका पतति)

(ततः प्रविशति यवनिकापुरतः व्यवस्थापकः ध्वनियन्त्रं हस्ते गृहीत्वा)

**व्यवस्थापकः** — अयि भोः रसिकसामाजिकाः । अधुना युष्माभिः दृष्टं कथं सुमतिः जीवनें भ्रामितमतिः संजातः । केन कारणेन तस्य मतिभ्रमणं जातम् । इत्येतत् सर्वं प्रत्यक्षं यूयं द्रष्टुं उपविष्टाः । नाटकदर्शने, नाटक प्रारम्भे अतिक्रान्तवेला माभूयात् । अहं नाटक कर्तारं परिचयं विधाय नाटकमुपक्रमिष्ये । एतन्नाटकं गीर्वाणान्ध्र भाषाप्रवीणेन परीक्षित् शर्मणा कृतम् । अनेन आन्ध्र गीर्वाण भाषयोः महती सृष्टिः कृता । अनेन विविध काव्यानि विलिखितानि । सप्तविंशति नाटकानि परीक्षिन्नाटकचक्रं इति नाम्ना प्रकाशितानि । अस्य गीर्वाण गेय चक्रवर्ती इति द्वितीयं नाम विद्यते । अयं अखिल भारतीय कालिदास पुरस्कार ग्रहीता । अयं महाकविः । एतन्नाटकं अनेन महाकविना कथं चित्रितं भवन्तः प्रत्यक्षं पश्यन्तु

अनुभवन्तु । इति अहं आशासे । नमांसि । (इति अन्तः गच्छति)

(ततः अपसार्यते यवनिका)

(सुमतिः, गायत्रीगौरीभ्यां क्रीडन् आस्ते)

**सुमतिः** — बाले गायत्रि त्वं विष्णुस्तोत्रं शान्ताकारं भुजग शयनं श्लोकं कथय ।

**गायत्री** — (उपविश्य नमस्कुर्वन्ती कथयति)

**शान्ताकारं भुजग शयनं पद्मनाभं सुरेशम् ।**
**विश्वाकारं गगन सदृशं मेघवर्णं शुभाङ्गम् ।**
**लक्ष्मीकान्तं कमल नयनं योगिहृध्यान गम्यम् ।**
**वन्दे विष्णुं भवभयहरं सर्व लोकैकनाथम् ।।**

**सुमतिः** — एहि मम समीपं अहं त्वां चुम्बेयम् ।

**गायत्री** — (आगत्य पितरं चुम्बति, पिता पुत्रिकां चुम्बति)

**सुमतिः** — बालें अहं सर्वं जगत् विस्मरामि तव चुम्बनेन ते पितुः जन्म सार्थकं बभूव ।

**गौरी** — पितः अहं त्वां चुम्बेयम् । (इति पितुः समीपं गच्छति)

**सुमतिः** — बाले गौरि, त्वं प्रथमतः या कुन्देन्दु तुषारहार श्लोकं उक्त्वा मां विचुम्ब ।

**गौरी** — (भूमौ उपविश्य नमस्कुर्वन्ती)

**या कुन्देन्दु तुषारहारधवला या शुभ्रवस्त्रावृता ।**
**या वीणा वरदण्ड मण्डितकरा या श्वेतपद्मासना ।**
**या ब्रह्माच्युत शङ्करप्रभृतिभिर्देवैस्सदा पूजिता ।**
**सामांपातु सरस्वती भगवती निश्शेष जाड्यापहा ।।**

( इत्युक्त्वा धावन्ती पितरं गत्वा तं चुम्बति )

**सुमतिः** — ( तां उद्धृत्य स्कन्धे निक्षिप्य चुम्बति सापि पितरं चुम्बति ) बाले गायत्रि त्वं अन्तः गत्वा मातरं अत्राहूवय।

**गायत्री** — तथैव पितः। ( इति अन्तः गच्छति )

**सुमतिः** — ( गौरीं हस्ताभ्यां उद्धृत्य ) एहि एहि चन्द्रभोः। मा बिभेहि चन्द्रभोः उदय शिखर हिण्डमाना चारु चन्द्रभोः यामिनी चुम्बनेन रागि चन्द्रभोः:। एहि एहि। ( इति तां कन्दुकवत् उपरि कृत्वा हस्ताभ्यां गृहणाति )

**गायत्री** — ( हठात् प्रविश्य ) पितः माता वमति।

**सुमति** — किं माता वमति ? ( इति गौरीं अधः संस्थाप्य अन्तः गच्छति ) किञ्चित्कालानन्तरं तया सह प्रविशन् ) हञ्जे कथं वमनमभूत्।

**सुषमा** — याथार्थ्येन वमनं नहि किन्तु वमन शङ्का अभूत्।

**सुमति** — बाले युवां अन्तः गच्छताम्। ( द्वावपि अन्तः गच्छतः ) सुषये पश्य, अस्माकं अधुना पुत्रिका द्वयं वर्तते।

**सुषमा** — अधुना किमासीत्।

**सुमति** -- तृतीयवारं पुत्रोवा भवति, पुत्रिका वा भवति। इति मत्वा इतः परं संततिः मास्तु इति प्रथमतः एव निरोध शस्त्रक्रिया कारिता।

**सुषमा** — ( सोफायां उपविश्य ) उदरे अवकलनं भवति। किमपि उदरे परिभ्रमति।

**सुमतिः** — कथं ते उदरे परिभ्रमति ? किमर्थं अवकलनं भवति। अन्तर्वत्नी त्वं तु न भवति। गच्छ त्वं स्वप। अहं मे मित्रं सुधीर समीपं गत्वा तं आनयेयम्।

**सुषमा** — गच्छन्तु भवन्तः तं आनयन्तु।

**सुमति** — पादत्राणे धृत्वा बहिः गच्छति।

**सुषमा** — ( सोफायां शेते किमपि ऊहाचित्रं कल्पयन्ती )

**गौरी** — शयन गृहात् अम्बे अम्बे। ( इति रुदन्ती मातरं प्राप्नोति )

**सुषमा** — बाले गौरि एहि मदङ्कं आरोह। (इति तां स्वीय अङ्कततलं आरोप्य लालयन्ती गीतं गायति)

## गीतम् (मालकौंस रागे)

भ्रम भ्रम भ्रम भ्रमर
भज भज भज नीरज षण्डम्
पिब पिब पिब मधुबिन्दुम्
कुसुमात् कुसुमं विटपात् विटपम् ध्रु.

झुं झुं झुं गुञ्जसि मधुरम्
कुसुमे कुसुमे पिबसि च मकरन्दम्
झुं झुं झुं शब्दं कुर्वन्नाकाशम्
चपलं व्रजसि वेगेनेव विमानम् १

प्रति कुसुमं पीत्वा मकरन्दम्
कुरुषे परिमल कुसुमाकर विटपम्
मधुरस संभारितं फलभर विटपम्
भ्रमर ते हृदयं रसमय हृदयम् २

ते पक्षानिल निसृत मञ्जुल शब्दम्
श्रुत्वा बालाः भय चकिता नित्यम्
बाला शकुन्तला भीता सोत्कम्पम्
मधुकर गुञ्ज नितरां निर्जन देशे मधुरम् ३

जम्बूफल सादृश्यं ते रूपम्
कुसुम परागे लुठितं ते देहम्
दृष्ट्वा फल बुद्ध्या सानन्दम्
आगच्छति ग्रसितुं कीरकुलम् ४

(गानं श्रुत्वा गौरी सुता गायत्री मातुः समीपमागच्छति)

**गायत्रीं** — मातः पिता कुत्र ?

**सुषमा** — पिता बहिर्गतः।

**गायत्री** — अधुना किमर्थं बहिर्गतः।

**सुषमा** — कार्यालय कार्यार्थं गतः।

**गायत्री** — अद्य कार्यालयः पिहितः अस्ति।

**सुषमा** — कथम्।

**गायत्री** — अद्य रविवासरः खलुः।

**सुषमा** — तर्हि मित्रगृहं गतः इति मन्ये।

**गायत्री** — अम्बे तव आरोग्यं साधु न वर्तते किम्?

**सुषमा** — साधु विद्यते।

**गायत्री** — त्वं जृम्भणं करोषि। तव निद्रा नक्तं पर्याप्तं नाभूत् किम्?

**सुषमा** — गायत्रि अधुना संध्या समयः। त्वं प्रातिवेशिक बालिकाभिः साकं खेलितुं गच्छ। (बहिः गच्छति गायत्री। गौरीं शयनगृहे शाययित्वा प्रत्यागत्य एकान्ते उपविश्य चिन्तयन्ति आस्ते)

(बहिः द्वारघण्टा नादः भवति, सुषमा गत्वा द्वारं उद्घाटयति, प्रविशति सुमतिः)

**सुमतिः** — सुषमे कथं वर्तते ते स्थितिः।

**सुषमा** — यथापूर्वं विद्यते। विकारः भवति उदरे।

**सुमतिः** — वैद्यः सुधीरः आगमिष्यति अधुना। (किञ्चित् विचार्य) सुषमे बालिके कुत्र गतवत्यौ अधुना।

**सुषमा** — ते स्वपतः अन्तः।

**सुमतिः** — साधु ते आवयोः भाषणं न श्रुतवत्यौ।

**सुषमा** — एवं वदति भवान् कारणं किम्?

**सुमतिः** — अधुना मे मित्रं वैद्यः सुधीरः आगमिष्यति। अस्मदीय भाषणं पुत्रिके नाश्रृणुतां इति मे अभिप्रायः।

**सुषमा** — ( विहस्य ) अयं ते अभिप्रायः ।

**सुमतिः** — त्वं ते आरोग्यंप्रति तस्मै सविस्तरं कथय ।

( बहिः कवाट ताडनं द्वारघण्टा नादश्च )

**सुषमा** — ( श्रुत्वा ) कोवा समागतः इति मन्ये ।

**सुमतिः** —कः आगमिष्यति सुधीरात् ऋते । ( इति उक्त्वा कवाटमुद्घाटयति )

( ततः प्रविशति शतष्कोपसहितः पेटिका हस्तः वैद्यवेषे सुधीरः )

**सुषमा** — ( उत्थाय ) अयि भोः सुधीर अभिवादये । ( इति नमस्करोति )

**सुधीरः** — सुषमे कथं विद्यते ते आरोग्यम् ।

**सुषमा** — मम आरोग्यं सम्यक् वर्तते । न कोऽपि विशेषः ।

**सुमतिः** — अरे सुधीर त्वं अत्र उपविश । ( इति आसनं दर्शयति )

**सुधीरः** — ( उपविशति ) अरे सुमते मे परिचारिका उक्तवती त्वं आगत्य प्रति निवृत्तोऽसि इति । तस्मात् अहं भ्रातृजायायाः किमभूत् इति विचारयन् अनुपदयेवागच्छम् भ्रातृजायां द्रष्टुम् ।

**सुमतिः** — भवान् तव भ्रातृजायाविषये अत्यन्तश्रद्धावान् इति जानाम्यहम् ।

**सुधीरः** — अधुना किमापतितम् ।

**सुमतिः** - तव भ्रातृजायायाः ह्यः प्रभृति वमनविकारः भवति किन्तु वमनं न भवति ।

**सुधीरः** — वमनं कथं भवति । अजीर्णतया भवति प्रायेण नत्वन्यथा ।

**सुमतिः** — त्वं वैद्यः । तस्मात् त्वमेव जानासि । कारणं नाहं जाने ।

**सुधीरः** — अधुना एतां आपाद मस्तकं परीक्षां करिष्यामि ।

**सुमतिः** — सुषमे त्वं सर्वं तस्मै कथय सः शल्यपरीक्षां करिष्यति ।

**सुषमा** — मम कापि बाधा नास्ति ।

सुधीरः — तव न कापि बाधा विद्यते इति जानाम्यहम्। तथापि परीक्षा कर्तव्या विद्यते।

सुमतिः — लोकोक्तिः एवं विद्यते कुटुम्बविषयाः गोपनीयाः व्याधि विषयाः घोषणीयाः इति। तस्मात् तव कुत्र का बाधा विद्यते सर्वमुद्दिश्य सुधीराय घोषय। सविस्तरं कथय।

सुषमा — (आगत्य मञ्चे शेते)

सुधीरः — (तां शतष्कौपेन परीक्ष्यते)

सुमतिः — किमस्ति कापि व्याधिः।

सुधीरः — नहि। इति तस्याः वामहस्त नाडीं पश्यति।

सुमतिः — किमेषा रुग्णवती।

सुधीरः — नहि। एषा अन्तर्वत्नी।

सुमतिः — (विषण्णवदनः सुधीरेण सार्थम्) कथं एषा अन्तर्वत्नी जाता।

सुधीरः — अहं कथयेयं अनन्तरम्।

सुमतिः — सुषमे त्वं गच्छ अन्तः। किञ्चित् चहां कृत्वा आनय।

सुधीरः — भ्रातृ जाये नाहं अभिलाषामि चहां किंतु काफीं देहि।

सुषमा — हां सत्यं काफीं दास्यामि। (इति अन्तः गच्छति)

सुमतिः — अरे सुधीर। कथं एषा अन्तर्वत्नी जाता।

सुधीरः — सुमते कदा शस्त्रचिकित्सा संतान निरोधार्थं कृता।

सुमतिः — मास चतुष्टयमभूत्।

सुधीरः — कः चकार शस्त्रचिकित्साम्।

सुमतिः — अत्र पार्श्वे विद्यमानः वैद्यः विद्यासागरः।

सुधीरः — हां यः विदेशात् प्रत्यागतः।

सुमतिः — हां।

सुधीरः — अयं तज्ज्ञः।

सुमतिः — कथं एषा अन्तर्वत्नी जाता।

सुधीरः — क्वचित् क्वचित् शस्त्रचिकित्सा सफलतां न प्राप्नोति। शस्त्रचिकित्सा कृतापि वीर्यनलिका वीर्यप्रवाहवेगेनविदळनं प्राप्य वीर्यं स्रावयति। वीर्यवेगसमक्षं वीर्यनलिका शक्तिहीना भवति। तस्मात् कारणात् अन्तर्वत्नीत्वं जातं इति मे मतिः।

सुमतिः — एवं भवति किम् ?

सुधीरः — भवत्येव।

सुमतिः — तदा किं प्रयोजनं शस्त्र चिकित्सया।

सुधीरः — तस्मात् विचार्य शस्त्रक्रिया कर्तव्या। नोचेत् अन्यमार्गं अनुसर्तव्यम् भवति।

सुमतिः — शासनस्य आदेशः खलु अधिकसंततिः मा भूयात् इति। तस्मात् एवं मया कृतम्।

सुधीरः — अधुना ज्ञातम्। पुनः शस्त्रचिकित्सा कर्तव्या इति मे ऊहः।

सुमतिः — अहं तस्य विद्यासागरस्य समीपं गत्वा पृच्छेयम्। कोत्र दोषः इति।

सुधीरः — सोऽपि एवमेव कथयिष्यति। गमनं निरर्थकम्। किन्तु गमने न कापि हानिः।

सुमतिः — सावकाशं गच्छेयम्।

सुषमा — (प्रविश्य) सुधीर महोदय नीयतां काफी। (इति काफीं सुमतये सुधीराय च ददाति)

सुधीरः — (काफीं गृहीत्वा पिबति, सुमतिः अपि काफीं पिबति) सुषमाभ्रातृजाये काफीं सम्यक् कृतवती। अहं सर्वदा चहापेक्ष्या काफीमेव अधिकं पिबामि।

**सुमतिः** — अरे सुधीर केचन कथयन्ति काफीपेक्ष्या चहपानं साधुरिति। तस्मात् सर्वदा अहं चहां पिबामि।

**सुधीरः** — द्वावप्येतौ निरर्थकौ। तथापि चहापानं साधुरिति मे मनीषा। यस्य यत् रोचते तत् ग्राह्यं भवति। ( उत्थाय ) अरे गच्छेयमहम्। वैद्यालये रोगिणः बहवः सन्ति। तान् सर्वान् परीक्ष्य औषधं दातव्यं वर्तते। यदि अहं तत्र न भवामि तर्हि संमर्दः अतीव भविष्यति। नमस्ते भ्रातृजाये। ( इति नमस्कृत्य गच्छति )

**सुमतिः** — अयं अतीव सज्जनः वैद्यः। मे परममित्रम्।

**सुषमा** — अहमपि तं तथैव भावयामि। ( इति द्वावपि अन्तः गच्छतः )

( यवनिका पतति )

* * *

## द्वितीयं दृश्यम्

( ततः प्रविशतः कुमाया, सुषमा रङ्गमञ्चे शेते सुमतिः सोफायां उपविश्य साप्ताहिकं पठन् आस्ते )

**गायत्री** — पितः अद्य कार्यालयं न गतं किं भवता।

**सुमतिः** — नहि।

**गौरी** — किमर्थमिति न गतं भवता।

**सुमतिः** — मातुः स्वास्थ्यं न सम्यक् विद्यते।

**गौरी** — माता ज्वरपीडिता किम्।

**सुमतिः** — हां बाले माता ज्वरपीडिता।

**गौरी** — ( सुमति उत्सङ्गे उपविश्य ) पितः अद्य अस्माकं भोजनं माता न यच्छति किम्।

**सुमतिः** — माता यच्छति।

**गायत्री** — माता अस्वस्था खलु कथं दास्यति।

**गायत्री** — पितः अद्य माता स्वपतु भवान् वयं च मिलित्वा पाकं अन्योन्य सहायेन कुर्मः।

**सुषमा** — ( विहस्य ) हसे बाले यदि यूयं सर्वे मिलित्वा पाकं करिष्यथ तर्हि खादकः कः अस्ति।

**गायत्री** — अहो मातः वयं सर्वे खादिष्यामः। सर्वे प्रसङ्गा बुभुक्षाहन्य-मानाः भवन्ति।

**सुमतिः** — हां सत्यमुदीरितं गायत्रि। बुभुक्षितानां न रुचिर्न पाकः। सुषमे कुमार्यौ बुभुक्षिते त्वमेव उत्थाय स्वयंपाकं कुरु।

**सुषमा** — ( उत्थाय ) कुमार्यौ न बुभुक्षिते। भवानेव बुभुक्षितः इति मन्ये। ( इति अन्तः गच्छति )

**सुमतिः** — हञ्जे अहं विद्यासागर वैद्यगृहं गत्वा प्रत्यागच्छेयम्। अयि बाले अधुना गृहं विहाय बहिः मा गच्छताम्।

**गायत्री** — पितः भवान् अधुना अस्माकं किमपि खादितुं आपणात् आनय।

**सुमतिः** — अधुना कथम्। मातः स्वयंपाकं करोति। अनुपदमेव भोक्तव्यं विद्यते। अधुना अहं आपणं न गच्छामि।

**सुषमा** — भोः। गृहे शाकाय न किमपि विद्यते। कोशातकीं, कारवेल्लान् उत पटोलींवां अनय।

**सुमतिः** — तथैव। ( इति पादत्राणे धरति )

**गौरी** — पितः अहमपि त्वया साकं आगच्छेयम्।

**सुमतिः** — अहं अधुना वैद्यालयं गच्छामि। तत्र बालिकानां प्रवेशोनास्ति।

**गौरी** — अहं त्वया साकं आगच्थेयम् मां गृहाण। ( इति तस्य पादबन्धनं स्वीय हस्ताभ्यां करोति )

सुमतिः — सुषमे, एहि पश्य एषा कथं मां बध्नाति।

सुषमा — (प्रविश्य) हसे गौरि तथा मा कुरु। अधुना पिता प्रत्यागमिष्यति। तव खाद्यमपि आनयिष्यति।

गायत्री — गौरि आवां अत्र क्रीडिष्यावः एहि। (इति तां कर्षति)

गौरी — (विलपन्ती गायत्रीसकाशं गच्छति)

सुमतिः — बाले गौरि अहं त्वत्कृते मोदकान् आनयेयम्। (इति तां सान्त्वयति)

गौरी — (निश्शब्दं भजते)

सुमतिः — (तां गौरीं विचुम्ब्य तस्याः हस्ते एकं रुप्यकं निक्षिप्य) बाले मा रुदि। अहं युवयोः मोदकान् आनयेयम्। अधुना अहं आगच्छेयम्।

गौरी — (विहस्य सुमतिं कण्ठे गृह्णाति)

सुमतिः — (तां उद्धृत्य चुम्बति)

सुषमा — अहो प्रेम अधिकं बभूव। अलं अनेन चुम्बनेन। त्वं सत्वरं गत्वा शाकादिकं आनय।

सुमतिः — हां अधुना गच्छामि। (इति तां गौरीं विसृज्य गच्छति)

सुषमा — बाले गायत्रि त्वं गत्वा कवाटं पिधेहि।

गायत्री — (गच्छति कवाटं पिनद्धि)

(सर्वे अन्तः प्रविशन्ति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(विद्यासागरस्य वैद्यालयः, तत्र टेबुलोपरि औषध पात्राणि, बाटिलानि विद्यन्ते, तत्र विद्यासागरः एकस्यां सोफायां उपविश्य पठति, तत्र एका परिचारिका कर्म कुर्वन्ती आस्ते)

**विद्यासागरः** — स्वसे, कथं विद्यते स बालः। यस्य श्वः शस्त्रक्रिया कृता।

**परिचारिका** — महोदय, सः पुष्णाति। सन्तोषी लसते।

**विद्यासागरः** — सः मृत्युमुखात् बहिः निर्गतः इति मन्ये।

**परिचारिका** — तत् सत्यम्।

**विद्यासागरः** — श्वः कः विद्यते शस्त्रक्रियार्थम्। पश्येयं देहि मे नामसारिणीम्।

**परिचारिका** — आनयामि भोः। (इति सारणीमानीय ददाति)

**विद्यासागरः** — श्वः कर्करोगिणः शस्त्रचिकित्सा करणीया विद्यते। सर्वं सन्नद्धं कुरु। श्वः दशघण्टावादन समये प्रातः भविष्यति)

**परिचारिका** — अवश्यं महोदय। करिष्यामि सर्वं व्यवस्थाम्।

(विद्यासागरः पुनः पठन् आस्ते। बहिः द्वारघण्टा वादनम् भवति)

**विद्यासागरः** — स्वसे कोवा आगतः। कवाटं ताडयति गच्छ। उद्घाटय कवाटम्।

**परिचारिका** — तथैव। गच्छामि। (इति गच्छति, कवाटं उद्घाटयति) एहि भोः अन्तः। (सुमतिः अन्तः आगच्छति)

**सुमतिः** — सुप्रभातम् वैद्य महोदय।

**विद्यासागरः** — सुप्रभातम्। एहि सुमते। उपविशतु भवान्। (इति आसनं दर्शयति)

**सुमतिः** — (उपविशति)

**विद्यासागरः** — अधुना आगमनस्य हेतुः कः।

**सुमतिः** — भवन्तं द्रष्टुं समागतोऽस्मि। न कोपि विशेषः।

**विद्यासागरः** — धन्योस्मि।

**सुमतिः** — अहं एकं प्रश्नं पप्रच्छुः अस्मि।

**विद्यासागरः** — कोऽयं प्रश्नः।

**सुमतिः** — निरोधार्थं कृत शस्त्रक्रिया यदा कदापि विफला भविष्यति किम्।

**विद्यासागरः** — अधुना अस्य प्रश्नस्य कारणं किम्।

**सुमतिः** — अहं ज्ञातुं इच्छामि।

**विद्यासागरः** — विफला भवितुं शक्यते। सर्वदा सर्व शस्त्रक्रियाः सफलाः न भवन्ति।

**सुमतिः** — कारणं किं विद्यते तथा भवितुम्।

**विद्यासागरः** — अनेकानि कारणानि सन्ति। अधुना अस्य प्रश्नस्य आविर्भावः कुतः।

**सुमतिः** - भवान् मे शस्त्रक्रियां अकरोत् संतान निरोधार्थम्।

**विद्यासागरः** — हां सत्यं अहं शस्त्रक्रियां अकरवम्।

**सुमतिः** — किन्तु मे जाया अन्तर्वत्नी जाता।

**विद्यासागरः** — अन्तर्वत्नी जाता कथम्?

**सुमतिः** — तदर्थमेवाहं अत्रागत्य भवन्तं पृच्छामि।

**विद्यासागरः** — त्वं अन्तः एहि। त्वामहं परीक्ष्ये।

**सुमतिः** — (अन्तः गच्छति)

**विद्यासागरः** — (अन्तः गच्छति)

**परिचारिका** — (तौ विलोक्य हसन्ती शस्त्रक्रियार्थं सर्व सामग्रिं सज्जयति)

**सुमतिः** — ( प्रत्यागच्छति, पृष्ठतः विद्यासागरः आगच्छति )

**विद्यासागरः** — सुधीर त्वं मा विचारय। मे शस्त्रक्रिया सफलता जाता। कथं एतत् अन्तर्वत्नीत्वं संवृत्तं नाहं जानामि। किन्तु सम्भवः विद्यते। यतः शस्त्र क्रियानन्तरमपि वीर्य प्रवाहवेगेन कामोद्रेकेन च वीर्यनळिकायाः विदलनं भविष्यति। तस्मात् बभूवेति मे अभिप्रायः।

**सुमतिः** — एषा शङ्का बहुधा पीडयति माम्।

**विद्यासागरः** — भवान् भवतः पत्नीं एकदा आनीय दर्शय मह्यं, तदा परीक्ष्य कथयिष्यामि।

**सुमतिः** — सुधीरः मे मित्रम्। सोऽपि तज्ञः वैद्यः शस्त्रक्रियादक्षः सोऽपि एवमेकादीत्।

**विद्यासागरः** — हां तं सुधीरं जानाम्यहम्।

**सुमतिः** — महोदय श्वः अहं मे पत्नीं आनीय तुभ्यं दर्शयेयम्।

**विद्यासागरः** — अवश्यम् दर्शय।

**सुमतिः** — ( उत्थाय ) नमस्ते। ( इति गच्छति )

( विद्यासागरः स्वसा च अन्तः गच्छतः )

( यवनिका पतति )

* * *

# चतुर्थं दृश्यम्

( गायत्रीगौर्यौ क्रीडतः पुत्तलिकाभिः। गायत्री एकस्मिन् कोणे खेलति, गौरी अन्यस्मिन् कोणे क्रीडति। गायत्री कुङ्कुमभरिणहस्ता गौरीसमीपमागत्य )

**गायत्रीं** — गौरि अद्य मे गृहे मे पुत्रिकायाः चम्पायाः विवाहः भवति। तस्मात् त्वं एहि। (इति कुङ्कुम रेखां तिलकयति)

**गौरीं** — गायत्रि कति पुत्राः पुत्रिकाश्च सन्ति।

**गायत्रीं** — मे तिस्रः पुत्रिकाः सन्ति।

**गौरीं** — पुत्राः न सन्ति किम्।

**गायत्रीं** — न सन्ति।

**गौरीं** — मम पितुः अपि पुत्राः न सन्ति।

**गायत्रीं** — मे तिस्रः पुत्रिकाः ताळीपत्रकृतकाः। ताः सर्वदा चीनांशुका वेष्टिताः वर्तन्ते।

**गौरीं** — कोऽयं वरः तव चम्पायाः।

**गायत्री** — मे पिता आपणात् चम्पाकृते एकां पुत्तलिकां आनीतवान्। सः वरः। मे प्रथम पुत्री वधूः। तयो विवाहः भविता अधुना।

**गौरीं** — अहं मम कुटुम्बेन साकं आगच्छेयम्।

**गायत्री** — एहि अवश्यम्। अहं गच्छामि।

**गौरीं** — त्वं एधि तिलकयिष्यामि। अयं अस्य देशीय नारीणां परम्परागत साम्प्रदायः। (इति कुङ्कुम भरणीं आनीय तस्मात् कुङ्कुमं गृहीत्वा गौरी गायत्र्याः फाले तिलकयति)

(ततः प्रविशति सुमतिः)

**सुमतिः** — (तां विलोक्य) किं कुरुतः भवत्यौ।

**गायत्री** — पितः अद्य मे कन्यकायाः विवाहः त्वमपि आगच्छ विवाहार्थम्।

**सुमतिः** — अरे तव पुत्रिकायाः विवाहः क्रियते। (इति तां चुम्बति)

**गौरी** — पितः मामपि चुम्ब। (इति तं प्रतिगच्छति)

सुमतिः — (द्वावपि स्वनिकटं गृहीत्वा आलिङ्ग्य चुम्बति)

सुषमा — (स्वयंपाक गृहात् प्रविश्य) किं बिलम्ब्य समागतम्।

सुमतिः — अहं विद्यासागर गृहं गत्वा प्रत्यागच्छम्।

सुषमा — किं शाकं आनीतम्।

सुमतिः — अरे अहं विस्मृतोऽस्मि शाकामानेतुम्।

सुषमा — अधुना किं कुर्याम्।

सुमतिः — मुद्गसूपं कुरु। तदेव पर्याप्तं भबिष्यति। आम्रव्यञ्जनं विद्यते। तक्रं विद्यते।

सुषमा — मुद्गसूपं अकरवम्।

सुमतिः — पर्याप्तम् भवति।

सुषमा — वैद्य विद्यासागर गृहम् गतं किम्?

सुमतिः — हां विद्यासागर गृहम् गतम्।

सुषमा — किं सः अवोचत्।

सुमतिः — सः त्वां द्रष्टुं अपिच आपादमस्तकं वैद्यकीय परीक्षां कर्तुं इच्छति।

सुषमा — दृष्टं खलु तेन सुधीरेण।

सुमतिः — दृष्टमेव किन्तु अयमपि दिदृक्षति।

सुषमा — अयि बाले भवत्यौ अन्तः गत्वा भोजनं कुरुताम्। (द्वावपि गच्छतः) अरे सुमते अहं सर्वेषां सन्निधि गन्तुं नेच्छामि।

सुमतिः — सः वैद्यः। त्वां द्रष्टुमिच्छति।

सुषमा — परीक्षावसरः नास्ति अधुना।

सुमतिः — का ते चिन्ता। का ते भीतिः।

सुषमा — चिन्ता नहि। भीतिर्नास्ति।

**सुमतिः** — तर्हि विचल तस्य सकाशम्।

**सुषमा** — अधुना मे न कोपि रोगः वर्तते। केवलं वमनं भवति तदा तदा।

**सुमतिः** — वमनं रोगिणामपि भवति। यदि अन्यः रोगः विद्यते वा नोचेत् अन्तर्वत्नीत्वं वा वयं न जानीमहे। तस्मात् एकदा परीक्षाकरणं योग्यं इति मे अभिप्रायः।

**सुषमा** — सुधीरः जगाद खलु अन्तर्वत्नीत्वमिति।

**सुमतिः** — सः मे मित्रम्। तस्य हृदयं जानाम्यहम्। सः कदापि असत्यं न भणति।

**सुषमा** — तर्हि अधुना विद्यासागरस्य समीपं किमर्थम्।

**सुमतिः** — ते मूर्खता मां क्रोधिनं करोति।

**सुषमा** — हां आगच्छामि किञ्चित् कालं उपविशन्तु। बालिकयोः भोजनानन्तरं आवां भुक्त्वा गच्छावः। ( इति अन्तः गच्छति बालिके भुक्त्वा आगत्य )

**गायत्री** -- पितः मम एकां द्विचक्रीवाहनं क्रीणातु।

**सुमतिः** — अधुना नहि क्रेष्यामि यदि त्वं कक्ष्यायां उत्तीर्णा भवसि तदा अहं क्रीत्वा आनयेयम्।

**गौरी** — पितः मम एकां बृहतीं पुत्तलिकां आनय।

**सुमतिः** — ( गौरीं उत्सङ्गे नीत्वा ) हां आनयेयम् पुत्तलिकाम्। ( इति चुम्बति )

**सुषमा** — भोक्तुं आगच्छतु भवान्।

**सुमतिः** — आगच्छामि। बालिके भवत्यौ अन्तः आगच्छताम्। ( इति ताभ्यां अन्तः प्रविशति )

**सुषमा** — ( तान् अनुसरति )

( यवनिका पतति )

* * *

# पंचमं दृश्यम्

( विद्यासागरः टेबुलोपरि किमपि लिखान्नास्ते, टेबुलोपरि अनेकानि पुस्तकानि सन्ति, परिचारिका सिरंजि सन्नद्धं कुर्वन्ती आस्ते )

( ततः प्रविशतः सुषमासुमती )

**विद्यासागरः** — ( विलोक्य ) स्वागतं, आगच्छताम्। अत्रोऽपविशतां। ( इति आसनं दर्शयति )

**सुमतिः** — अनुगृहीतोऽस्मि। ( इति उपविशति ) एषा मम पत्नी सुषमा। ( इति तां दर्शयति )

**विद्यासागरः** — नमस्ते। उपविशतु भवती। ( इति आसनं दर्शयति सुषमा उपविशति ) स्वसे। ( इति परिचारिकां आह्व्यति )

**परिचारिका** — एषाऽस्मि।

**विद्यासागरः** — स्वसे परीक्षागृहे सकलव्यवस्थां कुरु।

**परिचारिका** — यथाज्ञापर्यात। ( इति अन्तः गच्छति )

**विद्यासागरः** — सुषमे, का ते बाधा।

**सुषमा** — मम न कापि बाधा विद्यते।

**विद्यासागरः** — वमनं भवतीति तत्र भर्त्रा प्रोक्तम्।

**सुषमा** — तदा तदा वमनं भवति। तदा तदा उदरे किमपि चलतीव प्रतिभाति।

**विद्यासागरः** — वमनं प्रारम्भ्य कियत्कालमभूत्।

**सुषमा** — एकः पक्षः अभूत्।

**विद्यासागरः** — उदरे अपि बाधा विद्यते इति भवत्या प्रोक्तम्। सा बाधा असहना भवति उत सह्या भवति ?

**सुषमा** — सह्या भवति।

**विद्यासागरः** — एहि मत्सकाशम्।

**सुषमा** — (एति)

**विद्यासागरः** — (करदीपिकया तस्याः नेत्रयोः विलोक्य) भवती अन्तः परीक्षागृहं प्रविशतु।

**सुषमा** — (अन्तः प्रविशति)

**विद्यासागरः** — (तस्याः पश्चात् अन्तः प्रविशति)

**सुमतिः** — (साप्ताहिकानि दैनंदिनानि पश्यन् आस्ते)

(तत्र दूरध्वनि यन्त्र नादः भवति, सुमतिः उत्थाय तत्र गत्वा फोनं गृहीत्वा) हलो नमस्ते इयं विद्यासागरस्य वैद्यशाला। अत्र न कोपि विद्यते न्यायवादी। संख्या वक्रिता। (इति फोनं निक्षिपति, आगत्य स्वस्थाने उपविशति। अत्रान्तरे विद्यासागर सुषमे प्रविशतः)

**विद्यासागरः** — सुमते, केयं दूरध्वनिः।

**सुमतिः** — एतत् न्यायवादिनः गृहं ? किं इति कोवाऽपृच्छत्। अहं अवदम् संख्या वक्रिता इति।

**विद्यासागरः** — केचन सर्वदा अपसंख्यां भ्रामयित्वा पृच्छन्ति एवमेव। हां सुमते पश्य एषा अन्तर्वत्नी आस्ते। उक्तं खलु मया शस्त्रक्रिया सफला जातापि अन्तर्वत्नीत्वस्य संभवः अस्तीति। तस्मात् मा शङ्कां कुरु।

**सुमतिः** — न कापि मे शङ्का विद्यते। किन्तु एषा रोगार्ता जाता किं इति शङ्का समजनि। अधुना भवद्भिः प्रोक्तं खलु इतः परं न कापि शङ्का बाधते माम्।

**विद्यासागरः** — स्वसे चहपानादिकं वितीर्यताम्।

**परिचारिका** — वितीर्यते भोः। (इति अन्तः गच्छति)

**विद्यासागरः** — सुमते तव वयः कियत्।

**सुमतिः** — मम वयः सप्तविंशतिः।

**विद्यासागरः** — तव पत्न्याः वयः।

**सुमतिः** — तस्याः वयः चतुर्विंशतिः।

**विद्यासागरः** — कदा युवयोः परिणयः अभूत्। तदा युवयोः वयः कियत्।

**सुमतिः** — सप्तवर्षेभ्यः प्राक् विवाहः समभूत्। तदा एतस्याः वयः अष्टादश। मम वयः एकविंशतिः।

**विद्यासागरः** — कति पुत्राः पुत्रिकाश्च विद्यन्ते।

**सुमतिः** — पुत्रिका द्वयम् वर्तते।

**विद्यासागरः** — हां उक्तं भवता पूर्वम्, यदा त्वं निरोध शस्त्रक्रियार्थं आगतोसि तदा। विस्मृतं मया।

**विद्यासागरः** — तयो वयसी।

**सुमतिः** — वर्ष षटकम् वर्ष चतुष्टयं च।

**विद्यासागरः** — इतः परं संतानाभावः कल्याणं भवति तव कुटुम्बस्य।

**सुमतिः** — तस्मादेव अहं शस्त्रचिकित्सां अकारयम्।

**विद्यासागरः** — भवतु नाम पश्यामः किं भविष्यतिवा। मा विचारय।

(परिचारिका चहद्रोणान् झरी पात्रं एकस्मिन् विस्तीर्णं सूर्पे संस्थाप्य आनयति तत्र निक्षिप्य गच्छति)

**विद्यासागरः** — (चहा वितरणार्थं झरीपात्रं उद्धरति)

**सुषमा** — भवान् मा करोतु। अहं वितरणं कुर्याम्। (इति तस्य हस्तात् झरीपात्रं गृहीत्वा द्रोणेषु वितरति, सर्वे चहां पिबन्ति)

**विद्यासागरः** — स्वसे सर्वं शस्त्रक्रियार्थं यथा निर्दिष्टं कृतम्।

**परिचारिका** — यथा निर्दिष्टं कृतम् भोः।

**सुमतिः** — ( उत्थाय वैद्यस्य हस्ते हस्तं निधाय करचालनं कृत्वा ) नमस्ते गच्छावः। ( इति वदति )

**सुषमा** — नमस्ते। ( इति उत्थाय सुमतिना सार्धं गच्छति )

( यवनिका पतति )

*   *   *

# षष्ठं दृश्यम्

( प्रातः अष्ट घण्टावादन समयः गायत्रीगौर्यौ पुस्तकपेटिके गृहीत्वा पाठशालां गन्तुं उद्युक्ते, सुषमा सर्वं सज्जयित्वा ते प्रेषितुं प्रयतते, सुमतिः अन्तः स्वपिति )

**गायत्री** — मातः अद्य शालागमने विलम्बः जातः आवां गच्छावः।

**सुषमा** -- ( द्वावपि विचुम्ब्य ) अप्रमत्ततया गन्तव्यम्। ( इति ते प्रेषयति कवाट बन्धनं करोति )

**सुमतिः** — ( उत्थाय आगत्य कुर्च्यां उपविश्य ) सुषमे चहां देहि। ( इति पत्रिकां पठति )

**सुषमा** — ( चहां आनीय तस्मै दत्वा ) किमद्य कार्यालयं न गच्छति किम्।

**सुमतिः** — गच्छेयम्। किञ्चित् विलम्ब्य गच्छेयम्।

**सुषमा** — ( किञ्चित् साशङ्कम् ) विलम्ब्य कथम्। अधुना सत्वरं स्नात्वा पाथेयं गृहीत्वा गच्छतु भवान्। सर्वं कर्म परिसमाप्तम्।

**सुमतिः** — तथैव। ( इति चहां पीत्वा उत्थाय अन्तः गच्छति )

**सुषमा** — ( स्वात्मानं अलङ्कुर्वन्ती आस्ते )

( बहिः द्वार घण्टानादः )

**सुषमा** — (सत्वरं गत्वा कवाटं उद्घाटयति, सुधीरेण सार्धं शनैः:) अरे त्वं अधुना सत्वरं समागतोसि। एतावत्पर्यन्तं सुमतिः कार्यालयं न गतः।

**सुधीरः** — (शनैः) भवतु नाम। अहं किमपिकैतववादं करिष्ये। (इति अन्तः प्रविशति)

**सुषमा** — एहि एहि सुधीर महाशय एहि। (आश्चर्येण)

**सुधीरः** — भ्रातृजाये तव आरोग्यं कथं वर्तते। भ्राता सुमतिः गृहे वर्तते किम्?

**सुषमा** — मम आरोग्यं पूर्ववत् वर्तते। न चिन्ता कार्या। सुमति महोदयः स्नाति। उपविशतु भवान्। (इति आसनं दर्शयति)

**सुधीरः** — (उपविशति पत्रिकां पठति)

(ततः प्रविशति सज्जितः सुमतिः ;

**सुमतिः** — (सुधीरं विलोक्य) अरे अधुना कथं अत्रागमनम्।

**सुधीरः** — अत्र पार्श्वे एकं रोगिणं द्रष्टुं समागतोऽस्मि मार्गमध्ये भवदीय गृहम्। सुषमा आर्या कथमास्ते इति द्रष्टुं आगतोऽस्मि।

**सुमतिः** — रुग्णं द्रष्टुं समागतः भवान्। तथा कथय।

**सुधीरः** — अयं मृत्युमुखी आस्ते। तं द्रष्टुं समागतोस्मि।

**सुमतिः** — (किञ्चित् साशङ्कम्) अरे सुधीर, अहं अधुना कार्यालयं गच्छामि। मया सार्धं सुषमां तव वैद्यालयंप्रति आनयेयम्। तां अहं तव वैद्यालये विहाय कार्यालयं गच्छेयम्। त्वं तां सम्यक् शल्यपरीक्षां विधाय तस्यै बलवर्धनार्थं कमपि औषधं सूचय।

**सुधीरः** — अहमपि तदेव सूचयितुं समागतोस्मि। त्वं भवते यथा रोचते तथा कुरु।

**सुमतिः** — मम कारयानं स्वच्छताकरणार्थं अयच्छम् एतावत्पर्यन्तं नह्या गतम्। दिनद्वये प्राप्स्यते मया। ततः अधुना आवां तव कारयानेन आगच्छावः।

**सुधीरः** — तव कथनस्य आवश्यकता नास्ति। अहं युवां मम कारू याने नेष्यामि।

**सुषमा** — (सुषमा गम्यक् अलंकरोति)

**सुमतिः** — सुषमे तुभ्यं किं रोचते मे ऊहा रचनाः।

**सुषमा** — हां तथैव करोतु भवान्। मह्यं रोचते भवदीय कल्पना। संध्या समयपर्यन्तं अहं तत्रैव सुधीरस्य वैद्यालये स्थास्यामि भवतः आगमन पर्यन्तम्।

**सुमतिः** — त्वं सम्यक् औषधं गृहीत्वा तत्रैव विश्रान्ति सुखमनुभव। बालिके कदा गृहं प्रत्यागच्छतः ?

**सुषमा** — सार्धं पञ्चघण्टावादन समये ते प्रत्यागच्छतः।

**सुमतिः** — अहं सार्धं घण्टाचतुष्टये सुधीर वैद्यालयं आगच्छेयम्।

**सुषमा** — तथैव।

**सुधीरः** — अरे सुमते, भ्रातृजाये सुषमे एताम् मया सार्धम्। (इत्युत्थाय ताभ्यां साकं गच्छति)

(यवनिका पतति)

* * *

## सप्तमं दृश्यम्

(सुधीरस्य वैद्यालयः तत्र एकस्मिन् कोष्ठे सुधीर सुषमे संलपन्त्यौ आस्ताम्, तत्रैव गवाक्षस्य पार्श्वभागे सुमतिः कुडचकर्णो भूत्वा सर्वं श्रृणोति)

**सुधीरः** — प्रेयसि सुषमे, ते अन्तर्वत्नीत्वं मदीय संगमात् जातम्।

तत् आवां जानीवहे । सुषमे त्वां अहं पूर्वं अकामयं, किन्तु ते पितरौ मया सार्थं नाऽकुरुतां ते विवाहं । अहं एतावत्पर्यन्तं अविवाहितः लोकदृष्टया। किन्तु आवां दम्पती मनसा वचसा कर्मणा च । ते द्वावपि पुत्रिके आवयोः संजाते । आवां जानीवः ।

**सुषमा** — अरे सुधीर त्वं शतथा सुधीरः । तं परित्यज्य त्वत्सकाशे निवसितुमिच्छामि । किन्तु अहं तत् सर्वं कर्तुं अशक्ताऽस्मि । त्वं मे प्रियः त्वमेव मे भर्ता । (इति तस्य स्कन्ध देशे आनमति)

**सुधीरः** — प्रेयसि । (इति तस्याः कबरी भरं शिरश्च स्पृशति जिघ्रति ।

**सुषमा** — अरे अहं त्वामेव पतिं कामये । (इति रोदिति)

**सुधीरः** — त्वं मे जाया । त्वं मे नेत्रकौमुदी । (इति तां सान्त्वयति)

**सुषमा** — अरे सुधीर । अहं पुनः सुमतेः गृहम् गन्तुं नेच्छामि अत्रैव वसिष्यामि । मे प्रथमतः आरभ्य तस्योपरि न किञ्चिदपि प्रेम वर्तते । पित्रोः आग्रहेण तेन सार्थं विवाहाय अङ्गीकृताऽसम् । सर्वदा त्वमेव मे मनसि विराजसे । मे न किञ्चिदपि बाधा विद्यते । सर्वमपि भवतः दर्शनेन अन्तर्हिता भूत् ।

**सुधीरः** — अयं वायुसेनाधिकारी यत् किमपि वक्रितं भवति सः अस्मान् सर्वानापि मारयिष्यति । तस्य पुरतः नाहं किमपि भवामि । अहं व्याघ्र समक्षे हरिणः एव ।

**सुषमा** — यदि सः अस्मान् सर्वान् मारयितुं प्रयतते तर्हि वयं सर्वे विषं पीत्वा उत पोटासियं सैनेंढुमत्वा मरिष्यामः अयं मे निर्णयः । (इति तं द्वाभ्यां हस्ताक्ष्यां स्पृशति तं आलिङ्गितुं प्रयतते)

(यवनिका पतति)



# ।। वयं पञ्चाधिकं शतम् ।।

**व्यवस्थापकः**—( यवनिकायाः पुरतः आगत्य ध्वनियन्त्रं हस्ते गृहीत्वा )

अयि भोः सामाजिकाः निमेषद्वये वयं नाटकं प्रारभिष्यामहे। नाटक प्रारम्भे किञ्चित् वयं वक्तुं उत्सुकास्मः। देशे विविधभावना विराजमानाः प्रजाः परस्परं कलहायमानाः वर्तन्ते स्वार्थ सम्पादनाय। जगति कलहः प्राणिनां सहजः एव। कलहस्य अस्तित्वेऽपि शान्तगत्या अन्योन्य सहायेन जीवनयापनं योग्यं इति, तदेव भारत संरक्षणं भवतीति, तादृशी ऐक्यता अधुना अपेक्ष्यते इति भावनां अनेन नाटक प्रदर्शनेन वयं ज्ञापयामः। प्रजाः कलहायमानाः अपि राष्ट्रस्य संकटकाले एक चित्तीभूय देशसंरेक्षणार्थं प्रयतमानाः वयं पञ्चाधिकंशतं इति बुध्या देशरक्षणं कुर्युः इति भावयन् कविः एतन्नाटकं लिलेख। वयं पञ्चाधिकंशतं इत्यस्य नाटकस्य प्रणेता पंडित परीक्षित शर्मा। अयं गीर्वाणान्ध्र भाषा प्रवीणः। महाकविः। अयं स्वीय रचनाभिः विंशतितमे शताब्दे गीर्वाण भारतीं लोकभारतीं विधातुं कटिबद्धः प्रयतते। अस्य कवेः गीर्वाण गेयचक्रवर्तीति उपनाम विद्यते। कालावधिः व्यतीता अधुना नाटकं प्रदर्शयिष्यामः। नमांसि भूयांसि।

( इति नमस्कृत्य गच्छति यवनिकान्तरम् )

( ततः यवनिका अपसार्यते )

( रङ्गस्थलमध्ये धान्यराशिं विधाय तां परितः कृषीमलाः मण्डलं विधाय बंभ्रम्यमानाः नाटयादिकं कुर्वन्तः गायन्ति )

**गीतम् (मालकौंस रागे)**

ओ ! ! ! ओ ! ! ! चल रे चल हस रे हस
सर रे सर नट रे नट रे नटारे धृ.

क्रान्ति भाव मार्ग दर्शने परावयम्
शान्तिदीप्त मानसा मुदाऽनिशम्
दीनजीव जीवदा नीरदा भृशम्
पूर्ण हर्ष भासुराः कर्षका वयम् १

धर्मवारि निचय सिञ्चितोर्वरारे
बीजवपन श्यामसुन्दरी वसुन्धरारे
शलाटूपत्र सूनचित्रिता भूमि रे
रामराज्य मार्गयान कर्षका वयं रे २

सुजल सुफल सकस सस्य पूर्ण शालिनी
निखिल प्राणि जीवनादान मेदिनी
अच्छ मधुर सलिल पूर्ण वेगवाहिनी
फुल्ल कुसुमगन्ध लिप्त मन्दहासिनी ३

तरणि किरण तप्त धरणि कर्षकावयम्
जलदवारि सिक्त भूमि स्नातकावयम्
तुषार परुषवायु प्रकृति लालिता वयम्
निखिल सस्य राशिपुर्ण हर्षिता वयम् ४

मन्द चलन वायुवीत श्रामिका रे
अमन्द वेग कार्यकरण यान्त्रिकारे
धरणि खनन दीक्षिता सागरा रे
अचल भिदन कुशल कुलिश रूपकारे ५

( गीतावसाने सर्वे उपविश्य एक स्वरेण एवं उच्चारन्ति )

**धनुर्धराय विद्महे सर्व सिध्यै च धीमहि।**
**तन्नोधरा प्रचोदयात् ओं शान्तिः शान्तिः शान्तिः ।।**

( इति सर्वे धान्य राशिं नमस्कुर्वन्ति )

**सूर्यः** — (नारिकेळं गृहीत्वा भिन्ते तच्च देव्यै नैवेद्यं ददाति, तानि शकलानि सर्वेभ्यः प्रसादमिति ददाति, सर्वे गृहीत्वा भक्त्या खादन्ति)

**केदारेश्वरः** — अयि सुहृदः जननीधरा अस्मभ्यं इयन्तीं धान्यराशि प्रददौ। अस्मिन् वर्षे जननी धरणी अतीव करुणामयी जाता। अस्मदीय परिश्रमः सफलः जातः।

**सूर्यः** — अयि भोः सखायः। वयमेव सर्वं जगत् अन्नधान्योत्पादनेन सजीवितं कुर्मः। यदि वयं कृषीवलाः न स्याम जगति मानवाः किं खादिष्यन्ति। विचार्यमाणे वयमेव नितरां भोजन दातारः।

**केदारेश्वरः** — प्रकृति माता अस्माकं सर्व सौख्यं जनयति। भगवान् कर्मसाक्षी कर्मचारिणः अस्मान् सदैव रक्षति। वयं वरुणदेवं संप्रार्थ्य उर्वरां भीत्वा भूमिं सीतां विधाय तां सस्य श्यामलां कुर्मः।

**सूर्यः** — अयि केदार। अस्मत् ऋते अपरः कः देशरक्षणे समर्थः अस्ति। वयं कृषकाः धान्यं उत्पादयामः। तेन कारणेन नागरिकाः तत् धान्यं क्रीत्वा सुखेन भुंजते। यदि वयं नोत्पादनं कुर्मः तर्हि सर्व जनाळिः बुभूक्षया उपवासं विधाय अस्तं गमिष्यति।

**केदारेश्वरः** — तस्मात् जगति न कोऽपि अस्मान् निर्लक्ष्यभावेन पश्यति। वयं देशं श्रीमन्तं कुर्मः। वयमेव सर्वेषु मानव समुदायेषु उत्तमाङ्ग समानाः पुण्यप्रदाश्च इति मे मनीषा।

**सूर्यः** — भवता यत् प्रोक्तं तत् अलीकं न भवति। किन्तु जगति सर्वे मानवाः प्रभाविताः महिमान्विताः सन्ति। पश्य ये सुशिक्षिताः विद्यन्ते ते जीवने मानवेभ्य ज्ञानदानं विद्यादानं च विधाय मोक्षद्वारं उद्घाटयन्ति। ये संरक्षकाः विद्यन्ते ते देशं विदेशीयानां दाटीभ्यः संरक्षन्ति। ये व्यापारिणः वर्तन्ते ते सर्वे अस्मदीय उत्पादनं सर्वत्र देशे यथा मूल्यं वितरन्ति। तस्मात् सर्वाः संस्थाः प्रभावान्विताः वर्तन्ते। नात्र विद्यते निम्नोन्नत भावः उत तरतम भावश्च।

**केदारेश्वरः** — मूलतः सर्वेषां प्राणिनां आहारः अत्यंतावश्यकः वर्तते। अशनबाधा निवारणानन्तरं सर्वाणि आवश्यकानि भवन्ति। वयं देशे क्षुत्

बाधां निवारयामः, तस्मात् कारणात् वयं वरिष्ठाः इति भावना मे सर्वदा प्रतिभाति।

**सूर्यः** — विचार्यमाणे वयं कियन्तं कष्टं अनुभूय धान्यं उत्पादयामः तदनुमेयं न भवति केषामपि। वर्षासु सिक्ताः भवामः। आतपेषु तापिताः भवामः। नीहारेषु शीतवातेषु कम्पिताः भवामः। दिवारात्रं क्षेत्रेषु कष्टं अनुभूय वयं धान्यं उत्पादयामः। वयं प्रकृति जननी करुणाकटाक्ष संवर्धिताः भवामः।

**केदारेश्वरः** — अरे सोम एकां धूम्रवर्तीं देहि।

**सोमः** — अरे केदार धूम्रपत्रवर्ति विद्यते। (इति तस्मै ददाति)

**केदारेश्वरः** — (तत् गृहीत्वा मुखे निक्षिपति, सोमः तं वर्तीं ज्वालयति, सः वर्तीं पिबन्) यः अस्मान् तृणीकरिष्यति सः मूर्खः भवति। अस्मयीय सौख्यमेव भारत देश सौख्यं इति यः चिन्तयति स एव अस्मदीय कल्याणकारकः स एव अस्मदीय देवः। अस्मात् ऋते भारतं किं खादिष्यति। ततः वयं भारत देशस्य संरक्षकाः। वयं प्राणिनां प्राणदातारः।

**सूर्यः** — अरे केदार, एवमेव वयं अत्र भाषणं कुर्वन्तः तिष्ठेम तर्हि क्षेत्रे कर्म न भविष्यति। उत्तिष्ठ रे। (इति स्वयं उत्तिष्ठति) चल। (इति उत्तरीयेन शिरोवेंष्टनं विधाय) वयं कर्म कृत्वा अस्मदीयाधिक्यं औन्नित्यं च दर्शयिष्यामः। (इति धूम्रवर्तिं पिबन् गच्छति, सर्वेऽपि उत्थाय तेन सार्थं गच्छन्ति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

( कृषीवलस्य कुटीरः तत्र सः रज्जुं विरचयन् आस्ते, ततः प्रविशति हरिर्नाम खिन्नवदनः बुभुक्षितः )

**हरिः** — ( आत्मगतम् ) अहो पूर्वजन्मनि कियान् पापः कृतः मया। अहं अस्मिन् जन्मनि पंचमो भूत्वा जातः। मदीय वंशजान् चातुर्वर्णीयाः पंचमान् इति तृणीकुर्वन्ति। अहं तृषितोऽस्मि, बुभुक्षितोऽस्मि। न कोपि विद्यते अत्र मह्यं पानीयं दातुं, उत खाद्यं च दातुम्। एते मानवाः सर्वदा स्वार्थाय प्रयतमानाः जीवनं यापयन्ति। भवतु नाम। जगति दारिद्रस्य भावनायाः न किमपि स्थानं विद्यते। दरिद्राणां भावनाः अजागळस्तनसमानाः भवन्ति। ( इति इतस्ततः विलोक्य ) हां अत्र एकं कृषीवलगृहं विद्यते। तस्य गृहं गत्वा पानीयं खाद्यं च पृच्छामि। ( इति कतिचित् पदानि गत्वा, कृषीवलं विलोक्य, संबोधनापूर्वकं एवं कथयति )

अयि भोः दास। अहं तृषितोऽस्मि, बुभुक्षितोऽस्मि। किच्छित्, खाद्यं पानीयं च भवान् ददातु।

**दासः** — ( किञ्चिदुन्नमितशिरः तं याचकं दृष्ट्वा ) कस्त्वम् ?

**हरिः** — भोः अहं हरिः।

**दासः** — अरे त्वं हरिः कथम् ?

**हरिः** — अहं सत्यमेव हरिः।

**दासः** — सर्वोऽपि हरिः न भवति।

**हरि!** — अहं नाम्ना हरिः।

**दासः** — वयं दासाः। अपि च धरणीदासाः क्षेत्रपालकाः। वयं उर्वरां भित्वा धान्योत्पत्तिं कुर्मः।

**हरिः** — तस्मादेव भवतां संन्निधिं भिक्षार्थंमागतोऽस्मि। तत्र भवन्तः धरणी पुत्राः।

**दासः** -- अस्मानुद्दिश्य स्तोत्रं मा कुरु।

**हरिः** — स्तोत्रं नहि दासप्रभो। सत्यं ब्रवीमि।

**दासः** — यूयं अस्मदीय क्षेत्रे कर्मकराः। वयं दातारा: भवन्तः ग्राहकाः।

**हरिः** — सत्यमुदीरितम्।

**दासः** — हञ्जे। (इति जायां आह्वयति)

(ततः प्रविशति दासपत्नी रंजना)

**रंजना** — किं आह्वयति भवान् मां?

**दासः** — हां आह्वयामि।

**रंजना** — किमर्थम्।

**दासः** — पश्य एतस्य नाम हरिः।

**रंजना** — तस्मात् किं कर्तव्यम्।

**दासः** — तस्मै पातुं जलं भोक्तुं यत् किमपि खाद्यं प्रयच्छ। (इति रज्जुं गृहीत्वा अन्तः प्रविशति)

**रंजना** — (अन्तः प्रविश्य अन्नपानीयं च आनीय) अरे हरे इदं खाद्यं गृहाण। (इति खाद्यपूर्ण पत्रपुट भूमौ निक्षिपति) इदं पानीय कलशं गृहाण। (इति अधः निक्षिपति निर्लक्ष्य भावनेन)

**हरिः** — किमेतत् मातः। एवं निर्लक्ष्यभावेन तृणीकारबुद्ध्या ददाति भवती। अहमपि मानवः सभक्तिकं प्रेम्णा यदि दीयते तत् ससन्तोषं हरिणा भुज्यते।

**रंजना** — अरे शतमूर्ख, भिक्षार्थं आगत्य, मां तृणीकरोषि। अहं भक्त्या ददामि गृहाण। (इति उक्त्वा अन्तः गच्छति)

**हरिः** — (खाद्यं स्वीय वस्त्राञ्चलेन बध्वा पानीयं पीत्वा पात्रं तत्र अधः निक्षिपति)

**रंजना** — (प्रविश्य) अरे हरे कथं निक्षिपसि कलशं एवं? कलशं अधोमुखं निक्षिप।

**हरिः** — तथैव। (इति अधोमुखं निक्षिपति)

**रंजना** — (अन्तः प्रविश्य कलशान्तरेण पानीय मानीय तत्र विद्यमान कलशोपरि संप्रोक्ष्य तत् पात्रं हस्ते गृहीत्वा नयति)

**हरिः** — मातः किमर्थमेवं करोति भवती।

**रंजना** — त्वं हरिजनः। हरिजनेन स्पृष्टं जलेन पवित्री कर्तव्यं इति मे माता मही जगाद तस्मादहं एवं करोमि।

**हरिः** — क्षेत्रे वयं धान्यं उत्पादयामः तत् सर्वधान्यं युष्मदीयगृहे वर्तते किं गृहं अपवित्रं जातम् किम्?

**रंजना** — मुखं पिधेहि। अधिकं मा वद। त्वं अस्पृश्यः अपेहि मन्मुखात्।

**हरिः** — हां अस्पृश्यः भवति, हरिः पापात्मभिः।

**रंजना** — अरे त्वं साधु व्यवहर। वयं क्षेत्राधिकारिणः त्वां हनिष्यामः। त्वं सर्वदा अस्मदीय भूम्यां कर्मकारी असि।

**हरिः** — इयं भारतभूमिः, कर्मभूमिः पुण्यभूमिः इति परम्परागताभिप्रायः इति श्रुतं मया। अत्र सर्वे कर्मकराः एव तथैवाहमपि। अहं कर्मणा जीवामि।

**रंजना** — अरे अधिकं मा वद। त्वं गृहे भुक्त्वा गृहदारुफलकानि गणयसि अपेहि। (इति क्रुद्धया सा तं तृणीकरोति)

**हरिः** — शूद्राणामपि अहं अस्पृश्यः, किमेतत् मे जन्म। (इति चिन्तया निर्गच्छति)

**रंजना** — अयं नीचः। नीचानां स्वभावः दुरतिक्रमः। यदि दयां दर्शयिष्यामः तर्हि ते अस्मत् स्कन्धोपरि उपवेक्ष्यन्ति। (इति मुखं वक्रितं कुर्वन्ती अन्तः गच्छति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

( गुप्तः मोदकैः अपि च अन्य खाद्यपदार्थैः स्वीय आपणे उपविष्टः अस्ति ततः प्रविशति हरिः )

**हरिः** — नमो नमः गुप्तमहोदय।

**गुप्तः** — कोऽसि त्वम्। ( इति आपादमस्तकं पश्यति )

**हरिः** — अहं हरिः।

**गुप्तः** — त्वं हरिः कथम्।

**हरिः** — अहं हरिः एव।

**गुप्तः** — हरिः इत्यस्य पदस्य मर्कटः इति अर्थः भवति।

**हरिः** — हरिः इत्यस्य पदस्य अनेके अर्थाः सन्ति।

**गुप्तः** — सन्तु नाम। अधुना त्वया किं अपेक्ष्यते।

**हरिः** — मम पुत्रिकायै खादितुं एकं मोदकं भवान् यच्छतु इति अहं याचे।

**गुप्तः** — अरे हरे इदं याचकानां स्थानं नहि। इदं आपणं वर्तते। अत्र विक्रेतुं वस्तुचयः संस्थाप्यते।

**हरिः** — एकं यच्छतु भवान् इति अहं याचे।

**गुप्तः** — किं रूप्यकं वर्तते तव समीपे।

**हरिः** — मत्सकाशे न किमपि विद्यते।

**गुप्तः** — रूप्यकेन विना मोदकः कथं भवति।

**हरिः** — अहं ते क्षेत्रे कर्मकारः।

**गुप्तः** — तत्र क्षेत्रे तव कर्म कृते तदैव मूल्यं दत्तम्।

**हरिः** — हां सत्यमेव दत्तं तदैव मूल्यम्। रूप्यकं अनन्तरं दास्यामि, अधुना मोदकं ददातु।

**गुप्तः** — यदि हस्ते रूप्यकं विद्यते तर्हि मुखे मोदकः भवति। नोचेत् तिरोगमनमेव वरम्।

**हरिः** — अहं दरिद्रः। कर्म कृत्वा जीवामि। एतावत्पर्यन्तं मया न भुक्तं। अधुनैव भुक्त्वा आगतोऽस्मि।

**गुप्तः** — दरिद्रः इति कथयसि, कुत्र भुक्तं त्वया।

**हरिः** — तत्र दासगृहे किञ्चित् खादितुं प्राप्तं, तत् भुक्त्वा आगच्छामि।

**गुप्तः** — दासः तुभ्यं खाद्यं विनामूल्यं अयच्छत् किम्?

**हरिः** — हां विनामूल्यं दत्तवान्।

**गुप्तः** — अहं वणिक्। लक्ष्मीदर्शनं विना ते मोदकं न दास्यामि।

**हरिः** — अहं कर्म कृत्वा जीवामि। मत्सकाशे अधुना रूप्यकं नास्ति।

**गुप्तः** — अहं तुभ्यं कर्म दास्यामि।

**हरिः** — यच्छतु भवान्।

**गुप्तः** — हञ्जे रत्ने। (इति पत्नीं आह्वयति)

(ततः प्रविशति रत्ना)

**रत्ना** — किं आहूतास्मि।

**गुप्तः** — हां।

**रत्ना** — किमर्थम्?

**गुप्तः** — अस्मै काष्ठविदळन कर्म दत्वा कर्म समाप्त्यनंतरं तस्म एकं रूप्यकं दत्वा प्रेषय।

**रत्ना** — तथैव। (इति अन्तः प्रविश्य, कुठारमानीय तत्र निक्षिप्य संमार्जनीं गृह्णाति)

**हरिः** — (शनैः कुठारं गृहीत्वा रथ्यां गच्छति)

**रत्ना** — ( गृहं संमार्जयन्ती ) प्रातः प्रभृति न कोपि ग्राहकः समागतः, एतावत्पर्यन्तं लक्ष्मीदर्शनं न बभूव, किन्तु अमुष्मै रूप्यकं दातव्यं, किं अर्थः विद्यते अस्मिन् व्यापारे ?

**गुप्तः** — हञ्जे अयं व्यापारः उत्तरोत्तर बलवान् भविष्यति। विचारं मा कुरु।

**रत्ना** — उपविश्य भाषणं क्रियते भवता परिश्रमः न कदापि कृतः। ( इति वेगेन संमार्जयति, ततः प्रविशति हरिः कुठारहस्तः )

**हरिः** — मातः काष्ठविदळनकर्म कृतम्।

**रत्ना** — अरे त्वं तत्रैव तिष्ठ। एकं पदमपि मा विचल।

**हरिः** — मातः रूप्यकं दीयताम्। अयं कुठारः इदं काष्ठचयश्च। ( इति तत्र निक्षिपति )

**रत्ना** — ( अन्तः गत्वा जलकलशहस्ता प्रविश्य कुठारोऽपरि काष्ठचये च संप्रोक्ष्य अन्तः नयति )

**हरिः** — मातः किमर्थं जलेन काष्ठचयं कुठारं च सिञ्चसि।

**रत्ना** — अरे त्वं अस्पृश्यः त्वया स्पृष्टं नाहं शक्या ग्रहीतुं तस्मात् जलेन पवित्रं करोमि। ( इति जलेन सिञ्चति )

**हरिः** — मातः जलेन सर्वाणि पवित्रीकृतानि भवन्ति किम् ?

**रत्ना** — हां पवित्रीकृतानि भवन्तीति मे मातामही अवदत्। तस्मात् अहं एवं करोमि।

**हरिः** — वयं अस्पृश्याः किन्तु अस्माभिः सर्वैरपि कर्म कारयित्वा यूयं सुखमनुभवथ। मातः धरण्यां सर्वे मानवाः देवपुत्राः तरतमभेदः कुतः ?

**रत्ना** — सः एवं वदति सर्वं श्रुत्वा भवान् मौनं वहति किम् ? ( इति भर्तारं गुप्तं कथयति )

**गुप्तः** — अरे हरे ! किमर्थमेवं प्रजल्पसे। त्वं तव सीमोल्लङ्घनं मा कुरु, गच्छ।

**हरिः** — अहं स्थितां गतिं विचारयामि।

**रत्ना** — त्वं तव गतिं विचारय। स्थितां लोकगतिं किं विचारयिष्यसि।

**हरिः** — रूप्यकं देहि मातः।

**गुप्तः** — एतावत्पर्यन्तं तस्मै रूप्यकं न दत्तं किम् ?

**रत्ना** — नहि, सः मत्कृत कार्यं दृष्ट्वा प्रजल्पति। रूप्यकदाने अपि मे समयः नास्ति। ( इति रूप्यकं हरेः संमुखं निक्षिपति )

**हरिः** — किमर्थमेवं भेदभावं दर्शयसि।

**रत्ना** — अरे मूर्ख, मुखं पिधेहि। किं त्वं मां पाठं बोधयसि। अपेहि रूप्यकं गृहीत्वा मम संमुखात्।

**हरिः** — ( आत्मगतम् ) अहो बत एषा काळी भूत्वा मां तृणी करोति। अहं अनेन रूप्यकेन मोदकं क्रीत्वा गच्छेयम्। ( इति गुप्तसकाशं आगत्य ) अयि भोः श्रेष्ठिन् मोदकं दीयतां। ( इति रूप्यकं भूमौ निक्षिपति )

**गुप्तः** — ( सन्तोषेण रूप्यकं गृहीत्वा तस्मै मोदकं कर्गजे बध्वा भूमौ निक्षिप्य ) गृहाण। ( इति कथयति )

**हरिः** — अयि भोः गुप्त, मया दत्तं रूप्यकं स्पृश्यं भवति किम् ?

**गुप्तः** — लक्ष्म्याः स्पृश्याऽस्पृश्यता नास्ति। सा सर्वातीता जगज्जननी। ( इति धनपेटिकायां निक्षिप्य धनपेटिकां नमस्करोति )

**हरिः** — ( गृहीत्वा ) नमः गुप्तमहोदय। ( इति निर्गच्छति )

**रत्ना** — अल्पानां स्थानं यावत्पर्यन्तं दातव्यं तावत्पर्यन्तमेव दातव्यं नत्वधिकं, यदि अधिकं स्थानं दीयते तर्हि ते आगत्य अस्मदीय उत्तमाङ्गे उपविश्यन्ति। ( इति कुठारं काष्ठचयं च गृहीत्वा अन्तः प्रविशति )

**गुप्तः** — लक्ष्मीः लोला। लक्ष्मीः मां न कदापि त्यक्ष्यति। मदीय रूप्यकं पुनः मत्सकाशं आगतम्। काष्ठविदळनकर्मापि जातम्। भवतु नाम मोदकः गतः। अयं व्यापारः लक्ष्मीसंवर्धनकारकः भवति।

लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरङ्ग धामेश्वरीं
दासीभूत समस्त देववनितां लोकैकदीपाङ्कुराम्
श्रीमन्मन्द कटाक्षलब्धविभवत् ब्रह्मेंद्रगङ्गाधरां
त्वां त्रैलोक्य कुटुम्बिनीं सरसिजां वन्दे मुकुन्दप्रियाम्॥

( इति धनपेटिकां नमस्कृत्य थच्छति )

( यवनिका पतति )

* * *

## चतुर्थं दृश्यम्

( ग्रामाध्यक्षः, विष्णुशर्मा, यशोवर्मा, भानुगुप्तः दिवोदासः इत्यादयः भूमौ उपविष्टाः सन्ति )

**प्रतीहारी** - ( प्रविश्य ) अयि अध्यक्ष महोदय, द्वारि कश्चन हरिनामकः पौरः भवतां दिदृक्षया तिष्ठति )

**ग्रामाध्यक्षः** — ( सर्वान् विलोक्य ) अरे प्रवेशय तम्।

**प्रतीहारी** — तथैव। ( इति निर्गच्छति )

( ततः प्रविशति हरिः )

**हरिः** — ( प्रविश्य नतमस्तकः पञ्चाङ्गुळ्यः दशविधाय ) अभिवादये पञ्चायतिभ्यः।

**ग्रामाध्यक्षः** — किं ते कथनीयं निवेदय। अत्रोऽपविश।

**हरिः** — ( भूमौ उपविशति कथयति च ) प्रभो, अहं दरिद्रः। मम कुत्रापि देशे कर्म कर्तुं समयः न केनापि परिकल्पितः।

**विष्णुशर्मा**—इदं वाक्यं श्रुत्वा मम अतीव आश्चर्यं भवति। किमेतत् सत्यम्?

**हरिः** — हां इदं सत्यमेव भोः।

**विष्णुशर्मा** — कथं? कुत्र कुत्र किं वृत्तं तत् सविस्तरं कथय।

**हरिः** — न कोपि पानीयमपि ददाति पातुम्।

**यशोवर्मा** — कुत्र कुत्र भवता प्रयतितम्।

**हरिः** — अस्मिन् ग्रामे दासस्य समीपे प्रयतितम्।

**यशोवर्मा** — कोऽयं दासः।

**हरिः** — श्रृङ्गाटिकायां दक्षिणतः द्वितीय सौधे कश्चन दासः निवसति सः।

**भानुगुप्तः** — किं याचितं भवता।

**हरिः** — महोदय अहं बुभुक्षितोऽस्मि, तृषितोस्मि किञ्चित् पातुं खातुं अपि च यत् किमपि कर्म कर्तुं च ददातु इति अयाचम्।

**भानुगुप्तः** — दत्तवान् किम्?

**हरिः** — दत्तवान्। किन्तु त्वं अस्पृश्यः अत्र न किमपि विद्यते, दत्तं अत्वा पानीयं च पीत्वा गच्छ इति अवदत्।

**दासः** — अनन्तरेम्।

**हरिः** — अहं अस्पृश्यः इति तस्य पत्नी मया पीतं पानीयपात्रं जलेन प्रोक्ष्य शुद्धिं कृत्वा अन्तः निनाय। तेन कर्मणा अहं अवमानितः अभवम्।

**ग्रामाध्यक्षः** — एतत् कर्म अवमानहेतुः न भवति। किन्तु आरोग्य हेतुः शुद्धिमूलकः भवति। तस्य समक्षे करणं कर्म एतत् गर्ह्यं भवति इति मे मतिः।

**विष्णुशर्मा** — अनन्तरं किं जातं रे कथय।

**हरिः** — अहं एकस्य गुप्तस्य गृहं अगच्छम्।

**विष्णुशर्मा** — तत्र किं जातम्।

**हरिः** — अहं एकं मोदकं मे कुमार्यै तमपृच्छम्।

**भानुगुप्तः** — हां गुप्तः किमवादीत्।

**हरिः** — विना च रूप्यकेन मोदकं न दास्यामि इति अवादीत्।

**विष्णुशर्मा** — अनंतरं किं जातम्।

**हरिः** — अहं अवदं अहं कर्मजीवी इति।

**विष्णुशर्मा** — ततस्ततः।

**हरिः** — सः गुप्तः भार्यामाहूय अस्मै काष्ठविदाळनकर्म दत्वा तत् कर्म समाप्त्यनंतरं तस्मै रूप्यकमेकं देहि इत्यवोचत।

**विष्णुशर्मा** — ततस्ततः।

**हरिः** — अहं तत् कर्म अकरवम।

**विष्णुशर्मा** — अनन्तरम्।

**हरिः** — सा नारी काष्ठसंचये, कुठारे च पानीयं संप्रोक्ष्य तत् द्वयं अन्तः निनाय।

**यशोवर्मा** — ततस्ततः।

**हरिः** — अहं अपृच्छं तां मातः त्वं किमर्थमेवं करोषि इति।

**यशोवर्मा** — सा अवादीत् त्वं अस्पृश्योऽसि। तव हस्तस्पर्शया एतानि सर्वाणि मलिनानि जातानि इति।

**यशोवर्मा** — अहो ततः।

**हरिः** — तत् श्रुत्वा अहं नतमस्तकः स्वात्मानं विनिन्दन् तत् सर्वं युष्मभ्यं निवेदयितुं अत्रागतोऽस्मि।

**यशोवर्मा** — अध्यक्षमहोदय श्रुतं खलु भवता सर्वम्। जगति जनाः एवं विधाः वर्तन्ते।

**ग्रामाअध्यक्षः** — अस्पृश्यतामुद्दिश्य कठोरदण्डः भवितव्यः वर्तते।

**यशोवर्मा** — कोऽत्र भोः।

**प्रतीहारी** — ( प्रविश्य ) अहमस्मि ।

**यशोवर्मा** — गुप्तदासौ आनय अस्याः पञ्चायत्याः समक्षम् ।

**प्रतीहारी** — यथाज्ञापयति भवान् । ( इति निर्गच्छति )

( यवनिका पतति )

* * *

## पंचमं दृश्यम्

( तत्र पञ्चायति सदस्याः उपविष्टाः सन्तिः )

**ग्रामाध्यक्षः** — कोऽत्र भोः ।

**प्रतीहारी** — ( प्रविश्य ) एषोऽस्मि भोः ।

**ग्रामाध्यक्षः** — सत्वरं दासं प्रावेशय ।

**प्रतीहारी** — यथाज्ञापयति देवः । ( इति नमस्कृत्य गच्छति )

( ततः प्रविशति दासः )

**दासः** — नमांसि महोदय । ( इति नमस्करोति )

**ग्रामाध्यक्षः** — दास एहि अत्र उपविश । ( इति आसनं दर्शयति )

**दासः** — ( उपविशति )

**ग्रामाध्यक्षः** — अयि दास, भवान् भवतः पत्नी च अस्पृश्यतां पालयतः इति हरिणा प्रतिपादितं अस्ति । किं तत् प्रतिपादनं सत्यम् ।

**दासः** — हां हरिणा यदुक्तं तत् सत्यमेव भोः ।

**शर्मा** — किमर्थं कृतं तथा ।

**दासः** — इयमस्पृश्यता बहुकालात् परम्परागता देशे प्रचलति। अहं साम्प्रदायमनुसरम्।

**शर्मा** -- अयि दास, अयं साम्प्रदायः इति देशकीर्तिं मानाशय। अयं मध्यकाले संजातः पंकिलित साम्प्रदायः इति विचारय।

**दासः** — कथने सौलभ्यं विद्यते किन्तु आचरणे दुष्करं भवति।

**शर्मा** — तस्मादेव आचरणार्थं प्रयतनीयः इति कथयामि।

**दासः** — देशे सर्वत्र सर्वोऽपि अस्पृश्यतां पालयति। एषा मत्विषयकी नहि।

**वर्मा** — तदनुपालनं साम्प्रतमसाम्प्रतं इति अहं भणामि।

**दासः** — अयि भोः समाजे सर्वत्र तरतम भावाभ्यां अस्पृश्यता सर्ववर्गेषु संदृश्यते किमुत मद्विषये।

**वर्मा** — कुत्र दर्शय।

**दासः** -— हरिजनेष्वपि चर्मकारवर्गाः इति मातङ्गीयाः इति भेदाः सन्ति कथमहं हरिजनं स्पृशेयम्।

**भानुगुप्तः** — अयि दास, स्पृश्यता, अस्पृश्यता च आरोग्यस्वच्छताव्यवहाराभ्यां भवतः।

**दासः** — हरिजनाः सर्वदा पशुमांससंपर्केण कर्मकुर्वन्ति ते अस्वच्छतापूर्णाः कथं तैः स्पृश्यतां पालयेयम्।

**शर्मा** — तत् सत्यमेव। अनारोग्यमानुषस्पर्शा विषये आरोग्यसूत्राणि परिपालनीयानि भवन्ति। किन्तु मानवं अमानवः इव विलोकनं पापः भवति।

**ग्रामाध्यक्षः** — ( करेतलध्वनिं करोति )

**प्रतीहारी** — ( प्रविश्य ) एषोस्मि भोः।

**ग्रामाध्यक्षः** — गुप्तं प्रवेशय।

**प्रतीहारी** — तथैव। ( इति नतमस्तकः गच्छति )

(ततः प्रविशति गुप्तः)

**गुप्तः** — नमोवः। (इति नमस्करोति)

**ग्रामाध्यक्षः** — एहि गुप्तवर्य उपविश। (इति आसनं दर्शयति)

**गुप्तः** — (उपविशति)

**ग्रामाध्यक्षः** — गुप्त महोदय भवान् भवतःपत्नी च अस्पृश्यतां पालयित्वा आगन्तुकान् अवमानितान् कुरुतः इति हरिः अकथयत् किं तत् सत्यम्।

**गुप्तः** — सत्यमेव।

**ग्रामाध्यक्षः** — किमर्थमेवं कृतम्।

**गुप्तः** — सर्वत्र सर्वोऽपि अस्पृश्यतां पालयति मम विषये कोऽयं अपराधः।

**शर्मा** — अस्पृश्यतां सर्व व्याप्तां विधाय ब्रवीषि किं तत् सत्यं कथय।

**गुप्तः** — अयि भोः तरतमभेदाः सर्वत्र विद्यन्ते समाजे पश्यतु भवान्। उदाहरणार्थं अयं ब्राह्मणः अयं क्षत्रियः एषः वैश्यः एषः शूद्रः इति अयं अन्यः हरिजनः इति च।

**यशोवर्मा** — तं भेदभावं नाशयितुमेव वयं प्रयतामहे।

**गुप्तः** — तत् कथं भविष्यति। येन केनापि नाम्ना समाजे जनसमुदायं विभज्य पालनीयं भवति। तरतमभाव नाशनं असम्भवमिति अस्पृश्यता निवारणं असहजमिति मे अभिप्रायः।

**यशोवर्मा** — पाश्चात्य देशेषु अयं भावः नास्तीति लोकः कथयति। अस्मदीय देशे कुतः अयं भावः।

**गुप्तः** — तत्रापि विद्यते रूपान्तरेण तरतम भावः।

**यशोवर्मा** — कथं विद्यते विस्तारय।

**गुप्तः** — धनिक वर्गः, निर्धन वर्गः, श्रामिक वर्गः इति च। तत्र अन्योन्य दर्शनमपि पातकमिति तत्रस्थ वर्गाणां भावः। कालिम वर्णीयान् विलोक्य श्वेत वर्णीयाः

अस्पृश्यता भावनापेक्ष्या पापपुण्यभावनया व्यवहरेन्ति। तत्र कालिम श्वेतवर्णयोर्मध्ये मारण होमः भवति।

**यशोवर्मा** — अस्मदीय देशे सर्व मानव सौभ्रातृत्वं अधुना अपेक्ष्यते।

**गुप्तः** — अस्मदीय देशे चातुर्वर्ण्यव्यवस्था विद्यमानायां सत्यां परस्पर स्नेह भावेन वर्तन्ते। तत्र तथा न वर्तन्ते। तस्मात् भारतवर्षे अतीव सहिष्णुता वर्तते इति ज्ञातव्यं विद्यते भवता।

**विष्णुशर्मा** — तस्मात् अनुकम्पा भावेन वयं भारतीयाः सर्वानापि स्नेहपूर्ण भावनया पश्यामः यतः आत्मा एकः इति। अत्र अस्पृश्यता अधुना विडम्बना भवत्येव। किन्तु न कोऽपि परमार्थतः अनुपालयति अस्पृश्यतां इति मे मतिः।

**गुप्तः** — अयि भोः अयं हरिः मम सकाशं मोदकार्थं समागतः। अहं विना मूल्यं न दास्यमीति अवदम्। सः कर्म याचे। तस्मै दत्तं कर्म मया। धनं च प्राप्तवान्। एतत् सर्वं कथं बभूव केवलं अनुकम्पा भावनया। समाजे सर्वोऽपि अन्योन्याश्रयेण जीवनं यापयति।

**यशोवर्मा** — तत् सत्यमेव भवता यत् उदीरितं तत् सर्वं अङ्गीकरोमि। किन्तु त्वं हरिजनः इति भवतः पत्नी तेन स्पृष्टं काष्ठचयं कुठारं च जलेन संप्रोक्ष्य अन्तः निनाय किमेतत् साधु भवति।

**गुप्तः** — एवं करणे तस्य जीवनस्य किमापतितम्। लोके अयं व्यवहारः एवमेव प्रचलति। तत्रासाधुभावना नास्ति।

**ग्रामाध्यक्षः** - अस्मिन् ग्रामे मम अध्यक्षतायां न कुत्रापि अस्पृश्यता पालनीया अस्ति।

**विष्णुशर्मा** — अहं देशसमैक्यतावश्यकतामुद्दिश्य अस्पृश्यता निवारणार्थं जनानां भाषणादिकं विधाय समाजं बलवत्तमं कर्तुं इच्छामि।

**ग्रामाध्यक्षः** — अयि शर्मन् भवान् राज्ये अस्पृश्यता निवारणार्थं, समाज बलकरणार्थं भाषणं विदधातु।

**विष्णुशर्मा** — अहं प्रतिग्रामं भ्रामं भ्रामं अस्पृश्यता निवारणार्थं प्रचाराय वक्तॄन् प्रेषयिष्यामि।

**ग्रामाध्यक्षः** — अयि भोः हरिदासगुप्तवर्मशर्म महोदयाः यूयं सर्वे गच्छथ श्वः प्रभृति यूयं सर्वे समाजं बलवत्तमं विधातुं प्रयतत। (इति उत्तिष्ठित सर्वे उत्तिष्ठन्ति एकैकशः गच्छन्ति)

(यवनिका पतति)

* * *

# षष्ठं दृश्यम्

(ग्रामे श्रृङ्गाटिकायां एकस्यां वेदिकायां कुर्च्यां शर्मा आसीनः वर्तते गुप्त दास हरि इत्यादयः सामाजिकाः भूत्वा उपविष्ठाः वर्तन्ते, अन्ये च बहवः सामाजिकाः वर्तन्ते)

**विष्णुशर्मा** — (उत्थाय) अयि भोः मित्रोत्तमाः मया किञ्चित् कथनीयं वर्तते। यत् अहं भावयामि तत् कथयामि। भवतां प्रश्नानां प्रत्युत्तरं अहं दास्यामि भवन्तः पृच्छन्तु। अयि सुहृदः वयं सर्वे एकराष्ट्रीयाः भारतीयाः। केचन प्रथयतः अहं अमुक प्रान्तीयः इति उक्त्वा प्रान्तीयतायाः प्राधान्यं यच्छन्ति। तदहं न सेहे। तादृशी भावना राष्ट्रद्रोह कारिणी भवति दुराभिमानपूर्णा भवति। तस्मात् प्रान्तीयता वादं निर्मूल्य देशप्रेम वर्धनं कर्तव्यमस्माभिः।

**हरिः** — (उत्थाय) राष्ट्रभावना कथं भवति मानवानाम्। (इति उपविशति)

**विष्णुशर्मा** — राष्ट्रीय भावना भारतीय ग्रन्थपठनेन संगीत नृत्यसाहित्य वेदान्त शास्त्राभ्यासेन देशे सर्वत्र देशभक्तिः मानुषेषु भविष्यति।

**गुप्तः** — अधुना बहवः पठन्ति सकल परीक्षासु उत्तीर्णतां भजन्ते।

**विष्णुशर्मा** — एताः विद्याः परीक्षाश्च सर्वाः उदर पोषणार्थं कर्म करणार्थमेव उपयुक्ताः भवन्ति किन्तु ताभिः परीक्षाभिः ताभिः विद्याभिः देशभक्तिः न भवति। एभिः मानवाः स्वार्थिनः भवन्ति न तु देशभक्ताः।

हरि: — देशभक्तिः कथं संपादनीया भवति निवेदयतु भवान्।

विष्णुशर्मा — सर्वैरपि भारतीयैः संस्कृत भाषा अभ्यसनीया भवति तर्हि तदैव देशभक्तिः तेषु भविष्यति नत्वन्यथा।

हरि: — [ उत्थाय ] चातुर्वण्य निर्मूलनं कथं भविष्यति।

विष्णुशर्मा — चातुर्वर्ण्यं निर्मूलनस्य आवश्यकता नास्ति।

हरि: — तत् कथम्।

विष्णुशर्मा — यतः वयं सर्वे भारतीयाः। अस्माकं भावना संस्कृतिश्च एका एव। ब्रह्मज्ञानं यस्य अस्ति, यः त्यागं करोति, यः सुखं नोपेक्षते यः साधारण जीवनेन जीवति सः ब्राह्मणः। सः यः कोऽपि वा भवितुमर्हति। तथैव यः देशरक्षणे निरतः भवति सः क्षत्रियः। यः वाणिज्यं करोति सः वैश्यः। यः क्षेत्रेषु धान्योत्पादनं करोति सः शूद्रः। यः पशुपालनादिकं करोति सः हरिजनः। सर्वं सर्वमपि भवितुं शक्तः भवति। यदि चातुर्वर्ण्य विभागः नास्ति तर्हि येन केनापि नाम्ना व्यवहारः लोके कर्तव्यः भवति। तदापि लोके व्यवहारार्थं तरतम भावः देशे राष्ट्रेच भ त्येव।

हरि: — तस्मात् प्राचीन व्यवस्था समीचाना साभिप्राया अर्थयुक्ता इति भवतः अभिप्रायः।

विष्णुशर्मा — समाजे केचन स्वार्थपराः संकुचित भावनया तरतम भावनादीन् राष्ट्रहितापेक्ष्या राष्ट्रनाशाय उपयोगं अकुर्वन्। वयं सर्वे इतः परं, स्वस्तिरस्तुनः, स्वस्तिर्मानुष्येभ्यः। शंनो अस्तु द्विपदे। शं चतुष्पदे इति आषभावनानुरूपं बहुजन हिताय, बहुजन सुखाय व्यवहरिष्यामः।

दासः — एवं कर्तुं शक्यं भवति किम्?

विष्णुशर्मा — कर्तुं शक्यं भवति। यादृशी भावना यत्र सिद्धिर्भवति तादृशी।

हरि: — अधुना सर्वत्र देशे अस्पृश्यता व्याप्ता विद्यते, कदा तस्या अन्तः भविष्यति।

**विष्णुशर्मा** — अस्माकं सर्वेषां विदितमेव यत् अस्मदीय राष्ट्रं बहुविशालं अनेक समस्यापरिपूरितं च। सर्वमपि दुःखं एकवारं अपास्तकरणं कष्टं भवति। कतिपय वर्षानन्तरं सर्वमपि सुखमयं परिष्कृतं भविष्यति। सर्वजन योगक्षेमकल्याणार्थं अस्मदीय नेतारः दिवारात्रं प्रयतन्ते।

**हरिः** — अयि भोः दरिद्रता सर्वत्र नरीनर्तिकदा प्राणिनः सुखान्विताः भवेयुः।

**विष्णुशर्मा** — वयं सर्वे विना च तरतमभावः देशहिताय देश औन्नत्यै संहत्य जनहितकारकं कर्म कुर्मः तदा दरिद्रता दरिद्रभावं प्राप्स्यति। न केनापि कदापि अकर्मकृता भवितव्यम्।

**हरिः** — न कदापि समाजे समभावना भवितुं अर्हति।

**विष्णुशर्मा** — समभावनां जनयितुं प्रयतिष्यामः "यत्ने कृते यदि न सिध्यति कोऽत्र दोषः"। समाजे नैक विभागाः सन्ति तथापि सर्वेविभागाः प्रधान पञ्च विभागेषु अन्तर्हिताः भवन्ति। भारतवर्षे ते एवं सन्ति, ब्राह्मण, क्षत्रिय, वैश्य, शूद्र हरिजनाः ए ते पञ्चवर्णाः समाजपुरुषस्य पञ्चप्राणाः। तत्र उच्चनीच भावोनास्ति। यदि समाजः एकेन हीनः भवति पतनोन्मुखं भविष्यति, इति भावनया व्यवहारः कर्तव्यः इति मे अभिप्रायः।

**हरिः** — न कदापि सर्वेषां पञ्चवर्णानां संसृष्टिः भवति वसुधातले। जगति तरुषु अनेके विभिन्न तरवः सन्ति। व्यष्टिरूपेण तेषां अस्तित्वं राजते। पक्षिषु बहवः विचित्र पक्षिणः विभिन्नरावराजिताः तेषां व्यक्तिमत्वं प्रदर्शयन्ति ते न कदापि समान शीलतया एकचित्तीभूय सन्ति।

**विष्णुशर्मा** — भवता प्रतिपादितं सत्यमेव। सर्वोपि स्वीय चातुर्येण जगति अस्तित्वं दर्शयति। श्रृण्वन्तु एकां वृत्तकथां कथयामि। महाभारते यदा गन्धर्वाः दुर्योधनादीन् निगृह्य गताः तदा भीमः एवं जगाद।

**हरिः** — किमिति जगाद।

**विष्णुशर्मा** — यत् वयं कर्तुं उद्युक्ताः तदेव कृतं गन्धर्वैः इति।

**हरिः** — दुर्योधनादयः वञ्चनशीलाः तस्मात् सम्यगेव वृत्तं इति ममापि द्योतते तादृशी भावना।

**विष्णुशर्मा** — तथा मा वद। तस्मिन् समये धर्मराजः एवं जगाद भीमंप्रति।

**दासः** — किमिति।

**विष्णुशर्मा** — अरे भीम, एते दुर्योधनायः पराः न सन्ति। एते अस्मदीय भ्रातरः। कौरव पाण्डवयोर्मध्ये त्रिद्वेषपूर्ण भावना वर्तते। वयं सर्वे सर्वदा कलहायमानाः स्मः। किन्तु अधुना पराः अस्मदीय बन्धून् देशजान् गृहीत्वा अगच्छन्। ततः वयं अस्मदीय भेदभावं परस्पर द्वेषभावं संत्यज्य तान् जेतुं वयं पञ्चाधिकं शतं इति भावनया अस्मदीयैः मिळित्वा शत्रूनाशनं कुर्याम इति।

**हरिः** — तदा किं जातम्।

**विष्णुशर्मा** — तदा अर्जुनः गत्वा गन्धर्वादीन् जित्वा कौरवान् विमोचयामास। तद्वत् वयमपि भेदभाव संराजमानां: अपि राष्ट्रहिताय राष्ट्रसुखाय धर्मरक्षणाय परस्पर स्नेहभावनया वयं पञ्चाधिकं शतं इति न्यायेन भारतवर्षे जीवेम इति मे आदेशः।

( हरिदास गुप्तादयः उत्थाय परस्परं आलिङ्गयन्तः शर्मणः समीपमागत्य एकैकशः शर्माणं आलिङ्गय ) वयं देशरक्षणे पञ्चाधिकं शतम्। ( इति उन्नमित मुष्टिहस्ताः क्रमशः गच्छन्ति )

( यवनिका पतति )

* * *

# ॥ न स्त्री स्वातन्त्र्यमर्हति ॥

( व्यवस्थापकः यवनिका पुरतः आगत्य ध्वनिग्रहण यन्त्रं हस्ते गृहीत्वा )

अयि भोः प्रेक्षकाः अद्य वयं महाकविना गीर्वाणगेयचक्रवर्तिना सप्तविंशति नाटक प्रणेत्रा पण्डित परीक्षित् शर्मणा विरचितं "न स्त्री स्वातन्त्र्य मर्हति" इति नाटकं प्रदर्शयितुं उत्सुकास्मः। अयं कविः इतःपूर्वं ललितगीतालहरी इति गेय काव्यं, विंशति सर्गात्मकं यशोधरा महाकाव्यं, एकोत्तरशत गीतात्मक अक्षयगीत रामायणं इत्यादिकं काव्य संतानं उत्पाद्य गीर्वाण प्रपञ्चे प्रथितयशाः अभवत्। समाजे समकालीनाः प्रतिभा व्युत्पत्ति रहिताः केचन पण्डितं मन्यमानाः समकालीन प्रतिभान्वितं महाकविं विलोक्य ईर्ष्याऽसूयाभ्यां परिवेष्टिताः तस्य कवेः नामापि उच्चारयितुं दुराभिमानेन विचेष्टमानाः भवन्ति। सहजेयं प्रवृत्तिः परम्परागता भवति। समाज परिवर्तनोन्मुखाः केचन नायकान् मनमानाः आत्मानां मान्यता प्राप्त्यर्थं विपरीतार्थान् अस्य वाक्यस्य परिकल्प्य स्मृति कर्तारं मनुं तिरस्कृत्य, समाजे स्वोपभोगार्थं, स्त्री स्वातन्त्र्य मर्हति इति घोषयन्ति। तानुद्दिश्य अयं कविः तेषां बुद्धिहीनतां दर्शयन् मनोः ऋते उत्तमः धर्मशास्त्रकर्ता एतावत्पर्यन्तं जगत्यां नोद्भूतः इति दर्शयन् न स्त्री स्वातन्त्र्य मर्हतितीत्यस्य वाक्यस्य अर्थः कियतपर्यन्तं परिमितः इति दर्शयन् एतन्नाटकं लिलेख। कथं इमं भावं अयं कविः पात्रैः संसूचयमास भवन्तः विदांकुर्वन्तु। नमांसि। ( इति नमस्कृत्य अन्तः गच्छति )

( यवनिका अपसार्यते )

( ततः प्रविशति धौतपरिधान मण्डितः उत्तरीयेन भूषितः शिखायज्ञोपवीत भासुरः विभूति समलंकृतः हस्ते मनुस्मृतिं धृत्वा न्यायाधीशः चतुर्वेदी। तत्रैव एकस्मिन् दिग्विभागे तस्य पुत्री सुषमा कुर्च्यां उपविश्य टेबुलोपरि लिखन्ती आस्ते। टेबुलायां अनेकानि पुस्तकानि श्रेण्यां निक्षिप्तानि सन्ति। चतुर्वेदी इतस्ततः चरन् मनुस्मृतिं पश्यन् पठति।

**पिता रक्षति कौमारे। भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्धक्ये। न स्त्री स्वातन्त्र्यमर्हति ॥**

(अहह) साधुक्तं मनुस्मृतिकारेण। अयं मनुः तस्मिन् समये विद्यमान समाज परिस्थितिमनुसृत्य एनं स्मृति ग्रन्थं लिलेख। समाजः सर्वदा परिवर्तते। परिवर्तनानुसारं कतिचित् नवीन परिवर्तनानि कर्तव्यानि सन्ति। किन्तु मनुदूषणेन, मनुस्मति दाहनेन किं भवति परिवर्तना समाजे? एतादृश कर्मकरणं तेषा मूर्खत्वं नीचत्वं दर्शयंतीति कथने न किमपि साहसं भवति। (इति शयन कुर्च्यां उपविशति)

**सुषमा** — पितः भवान् न्यायाधीशः। सर्वमपि न्यायशास्त्रं चुलिकीकृतं भवता। सर्वमपि शास्त्रं ते करतलामलकं विद्यते। अद्य मनुस्मृति पारायणं करोषि कुतः।

**चतुर्वेदी** — बाले तव प्रश्नः सार्थः विद्यते। शृणु। बहवः मूर्खाः स्त्रीणां स्वातन्त्र्यं परिकल्पनीयं इति कथयित्वा, स्त्री स्वातन्त्र्यानन्तरं ताः अनुभवितुकामाः इच्छन्ति। तस्मात् मनुं द्विषति। तदहं न सेहे। मनुस्मृतिः सर्वदा पठनीयः विद्यते भारतीयानाम्।

**सुषमा** — पितः अस्मदीय विधिविद्यालये अपि प्राध्यापकाः मनुं शतथा स्तुवन्ति। नाहं जाने किमर्थं केचन ब्रुवाः तं अधः पातयन्ति।

**चतुर्वेदी** — येनकेनाप्युपायेन प्रसिद्धः पुरुषोभवेत्। तस्मात् यथाकथंचित् स्वीय व्यक्तिमत्वं प्रदर्शयितुं केचन वक्रगत्या प्रयतन्ते। तदेवात्र कारणम्।

**सुषमा** — किं पुरा स्त्रीणां स्वतन्त्रता नासीत्?

**चतुर्वेदी** — प्राचीन भारतवर्षे स्त्रीणां यत् स्वातन्त्र्यं अवर्तत तत् स्वातन्त्र्यं न कुत्रापि जगति अवर्तत।

**सुषमा** — पितः मनुः न स्त्री स्वातन्त्र्य मर्हतीति किमर्थं प्रत्यपादयत।

**चतुर्वेदी** — मनोः काले समाजे स्त्री अपहरणं स्त्रीमानभङ्गादयः असीमिताः अभवन्। स्त्री यदि गृहं विहाय रथ्यायां गच्छेत् तर्हि पुनः सा गृहमागमिष्यतिवा नवा इति भीतिः अवर्तत। तस्मात् मनुः तत्कालीनं समाज परिस्थितिमनुसृत्य नियमावलिं लिलेख इति केषांचन मतम्। तदपि मे मतं भवति।

**सुषमा** — पितः न स्त्री स्वातन्त्र्य मर्हतीति वाक्यस्य अर्थः कियत् पर्यन्तं समाजे अनुपालनीयः भवति।

**चतुर्वेदी** — जगति पुरुषाणामिव स्त्रीणामपि स्वातन्त्र्यं जन्मतः संक्रामितं भवति। किन्तु समाजे कतिपय स्थानेषु कतिपय समयेषु तासां स्वतन्त्रता स्वच्छन्दता मा भूयादिति मे मतिः। जगति सर्वोऽपि नियमानुसारं जीवति। मानव समाजे विशिष्य स्त्रीजीवनं नियमान्वितं भवितव्यमिति शास्त्रज्ञानां समाजशास्त्रज्ञानां मतम्।

**सुषमा** — कुत्र कस्मिन् समये स्त्रीणां स्वच्छन्दता मा भूयात्।

**चतुर्वेदी** — व्यभिचार गृहाणां समीपे, गलिच्छ समाजे पानशाला समीपे रात्रौ च न स्त्री स्वातन्त्र्यमर्हति। तया सार्थं कोऽपि संरक्षकः संबन्धीकः सर्वदा रथ्यायां गमन समये गन्तव्यः भवति। तथा यदि स्यात् अन्यः पशुः इव न व्यवहरिष्यति। तस्मात् मनुः एवं न्यगादीत्।

**सुषमा** — यदि स्वच्छन्दचारिणी भवति तर्हि किं भविष्यति?

**चतुर्वेदी** — किं भवति? अधः पतनं भवति अन्ततः मरणं भवति। यदि स्त्री-पुरुषौ पवित्र कर्मणा वर्त्मना च स्यातां तर्हि तयोः संततिः आरोग्येण नर्तिष्यति। स्वच्छन्दाचरणं स्वच्छन्द वेषभूषा धारणं, अर्धनग्न वेषधारणं, कामोद्दीपन हेतुभूतं अलंकरणादिकं, सर्वेषां स्वशरीर स्तनभर नाभीदेशप्रदर्शनं एकैकं समाजनाशाय हेतुः भवति, किमुत समवाय विषये।

**सुषमा** — वेषभूषा धारणे अपि न स्त्री स्वातन्त्र्यमर्हति? एतत् कथं पितः।

**चतुर्वेदी** — बाले पुरुष प्रकृति विलसिते अस्मिन् प्रपंचे सर्वोऽपि प्राणिः निसर्ग शक्त्या आकर्षितः भवति। यथा पुष्पं विलोक्य भ्रमरः मकरन्दपानाय सवेगं पुष्पं गच्छति तथा पुरुषः स्त्रिया आकर्षितः भवति। अपिच एकः पशुः एकां पाशवीं स्वजातीयां विलोक्य यथा अनुगच्छति तद्वत् स्त्रियं विलोक्य पुरुषः रिरंसति।

**सुषमा** — अयं निसर्गः एव।

**चतुर्वेदी** — तथा मानव समाजे न भवितुमर्हति।

**सुषमा** — कुतः ?

**चतुर्वेदी** — समाजे व्यवहारः नियमबद्धः भवति। यदि नियमोल्लंघनं भवति तर्हि समाज पतनमेव भवति। पशूनामिव मानवेष्वपि स्वैरविहारः यदि स्यात् तर्हि समाजः पशुसमाजः भविष्यति। तर्हि वयं रथ्यासु चरितुं अशक्नुमः भवेम। सर्वत्र कामः रथ्यासु रसो भूत्वा प्रवहिष्यति। तस्मात् मानव समाजे स्त्रीणां पुरुषाणामिव स्मतन्त्रता न शोभते।

**सुषमा** — अत्र वेषभूषासंबन्धः कुतः।

**चतुर्वेदी** — अत्र वेषभूषा संबन्धः पटुतरः भवति। असीमितं कामोद्दीपन भूतं वेषभूषादिकं भवेत् तर्हि समाजे सर्वत्र अविनीतिः प्रवहयिष्यति। तदा रथ्यासु हत्या चुम्बनालिङ्गनादयः कामक्रीडादिकं विनायासं भविष्यन्ति। तस्मात् अप्रमत्ततया स्त्रीभिः समाजे व्यमहर्तव्यमिति अनुभवज्ञाः अवदन्।

**सुषमा** — सर्वदा स्त्रीणां जीवनं पुरुषायत्तं भवितव्यं किम् ?

**चतुर्वेदी** — हां भवितव्यं इति मनोः अभिप्रायः।

**सुषमा** — तद्वत् पुरुषाणां जीवितमपि वनितायत्तं इति मे अभिप्रायः।

**चतुर्वेदी** — सत्यमेव स्त्रीपुरुष जीवितं अन्योन्यायत्तं भवति। नरः नार्याः बलवत्तरः। तस्मात् साधारणतः स्त्रियं संकटात् संरक्षिष्येति नरः। स्त्रीपुरुषौ आधाराधेयौ। तस्मात् लोकोक्तिः विद्यते खलु विनाश्रयं न शोभन्ते पण्डिता वनितालताः इति। ततः जीवितान्तं यं कमपि आश्रित्य स्त्री स्वीय जीवितं निर्वाहनीया इति सामाजिकाभ्युदय कांक्षिणी अभिप्रायः।

**सुषमा** — तस्मात् आवयोः संभाषणे निष्कर्षः कः ?

**चतुर्वेदी** — तस्मात् कारणात् जीवने योग्यं आश्रयभूतं पुरुषं प्राप्य जीवन यापनं साधुः इति ममाभिप्रायः।

**सुषमा** — पितः मम विद्यालयं गन्तव्यं विद्यते। अहं गच्छेयम्। (इति उत्थाय अन्तः गच्छति)

**चतुर्वेदी** — "प्राप्तेच षोडशो वर्षे पुत्रं मित्रवदाचरेत्" इति पुत्र विषयेऽपि मनुना सत्यमुदीरितम्। अधुना तत् सर्वं अस्माभिः समाजे अनुभूयते। आधुनिकाः पुत्राः समाजे कुपुत्राः भवन्ति। तैः पितरौ मित्रवत् व्यवहरतः। एतत् सर्वं स्वानुभवेन पूर्वमेव मनुना निगदितमासीत्। देवाय मनवे नमः। (इति नमस्करोति अत्रान्तरे तस्य पत्नी वेदवती चहाचषक हस्ताप्रविश्य)

**वेंदवती** — प्रातः प्रभृति कुमार्या साकं मनुस्मृतिचर्चां कुर्वन्नास्ते भवान्। किमद्य भवता न्यायालयं न गम्यते।

**चतुर्वेदी** — हां किमर्थं न गम्यते? अवश्यं गम्यते।

**वेदवती** — चहां पिबतु। (इति चहां तत्र त्रिपादपीठे निक्षिप्य अन्तः गच्छति)

**चतुर्वेदी** — (चहां गृहीत्वा पिबति)

(यवनिका पतति)

* * *

# द्वितीयं दृश्यम्

(विद्यालयस्य प्रधानचार्यस्य लेखनकक्षा, तत्र प्राचार्यकेशवः कुर्च्यां उपविश्य टेबुलोपरि पत्रेषु किमपि लिखन् अस्ति, ततः प्रविशति इतिहास प्राध्यापकः माधवः)

**माधवः** — अयि भोः अन्तः प्रवेशयम्।

**केशवः** — विनावरोधं प्रविशतु।

**माधवः** — नमस्ते। (इति नमस्कृत्य समीपस्थ आसने उपविशति)

**केशवः** — को विशेषः।

**माधवः** — अयि भोः कक्ष्यायां युवतीनां व्यवहारः केवलं असभ्यपूर्णः अमर्यादायुतः भवति।

**केशवः** — कस्यां कक्ष्यायाम्।

**माधवः** — बि. ए. चरम वर्षीय अ, विभाग कक्ष्यायाम्।

**केशवः** — तासां नामानि गृहीत्वा तासां पितृभ्यां निवेदयतु पत्ररूपेण वार्तयतु।

**माधवः** — प्रतिसप्ताहं अहं निवेदयामि।

**केशवः** — किं प्रत्युत्तरमागतम्?

**माधवः** — नहि।

**केशवः** — कास्ताः युवत्यः? तासां नामानि कथयतु।

**माधवः** — कक्ष्यायां सर्वाः निर्लज्जायुताः व्यवहरन्ति।

**केशवः** — अग्रेसरायाः नाम कथयतु।

**माधवः** — अग्रेसरायाः नाम शालिनी।

**केशवः** — अहो बत। सा?

**माधवः** — किम्?

**केशवः** — न किमपि विद्यते। सर्वोपि प्राध्यापकः तामेवोद्दिश्य कथयन्ति यत् सा विद्यालये विषवल्लरी जाता इति।

**माधवः** — सा निर्लज्जा अस्ति।

**केशवः** — सा किं करोति कक्ष्यायाम्?

**माधवः** — सा सर्वान् युवकान् विलोक्य नेत्रस्पन्दनं करोति हावभावादिकं प्रकटयति।

**केशवः** — ततस्ततः।

**माधवः** — सर्वे युवकाः तामेव पश्यन्तः नेत्रस्पन्दनं कुर्वन्ति हस्तसंज्ञाया तां प्रेरयन्ति।

**केशवः** — एतादृशी स्थितिः सर्वविद्यालयेषु सर्वकक्ष्यासु देशे सर्वत्र विद्यते।

**माधवः** — एतादृशी स्थितिः भवति सर्वत्र देशे ? विचार्यमाणे मे शरीरं दहति। सा शालिनी अर्धं निचोलावृता भवति। ऊरुभाग पर्यन्तं परकरीं धरति। यदा सा कक्ष्यायां प्रविशति तदा सर्वे युवकाः बहुशीत्कारं उद्गारंच कुर्वन्ति।

**केशवः** — सा निर्लज्जा गणिका समाना इति सर्वे प्राध्यापकाः कथयन्ति एकदा भवान् तां आहूय साधु व्यवहर्तव्या भवत्या इति बोधयतु।

**माधवः** — केषांमपि वाक्यं सा न श्रृणोति।

**केशवः** — तर्हि तां मत्सकाशं प्रेषयतु।

**माधवः** — भवानेव चतुर्थ कर्मचारिणा पत्रं कक्ष्यायां प्रेषयतु। तदा अध्यापकः तत् पत्रं कक्ष्यायां पठित्वा तां भवतः सकाशं संप्रेष्यति।

**केशवः** — हां सम्यक् प्रोक्तं भवता। तथैव कुर्याम्।

**माधवः** — गच्छेयमहम्। नमस्ते। (इति नमस्कृत्य गच्छति)

**केशवः** — (एकस्मिन् पुस्तके पत्रं विलिख्य आह्वान घण्टां ताडयति)

(ततः प्रविशति सागरोनाम चतुर्थ कर्मचारी)

**सागरः** — (प्रविश्य) नमस्ते। (इति नमस्करोति)

**केशवः** — हां सागर त्वं पत्रमेतत् गृहीत्वा बि. ए. अन्तिम वर्षीय अ कक्ष्यायां आध्यापकाय दर्शय। (इति ददाति पुस्तकम्)

**सागरः** — तथैव भोः। (इति गृहीत्वा गच्छति)

**केशवः** — (विचारयन्नास्ते)

(ततः चतुर्थ कर्मचारी द्वारस्थः रामन्ना प्रविश्य एकं पत्रं प्रधानाचार्याय यच्छति, प्रधानाचार्यः गृहीत्वा पठित्वा)

अरे रामन्ना तां प्रवेशय।

**रामन्ना** — तथैव। (इति निर्गच्छति)

**केशवः** — (लिखन् आस्ते)

(ततः प्रविशति नैकपुस्तक हस्ता अत्यन्तकामुकवेषा अर्धनग्न शरीरा शालिनी)

**शालिनी** — (प्रविश्य) नमस्ते प्राचार्यवर्य। (इति नमस्करोति)

**केशवः** — (लिखन् तां दृष्ट्वा) एहि बाले। उपविश।

**शालिनी** — (उपविशति)

**केशवः** — बाले कथं पठसि।

**शालिनी** — सम्यक् पठामि। भोः किमाहूतास्मि।

**केशवः** — हां भवती आहूतासि।

**शालिनी** — को विशेषः।

**केशवः** — विद्यते बहुविशेषः।

**शालिनी** — कथयतु भवान्।

**केशवः** — बाले त्वं विद्यालयं किमर्थमागच्छसि?

**शालिनी** — विद्यार्जनाय।

**केशवः** — यदि विद्यार्जनाय आगच्छसि तर्हि अयं वेषः अनुचितः। बाले त्वं चीरधारिणी भूत्वा अङ्गीं सम्यक् धृत्वा भारतीयनारीवेषे विद्यालयं एहि। कक्षयायां विनयभूषिता व्यवहर।

**शालिनी** — आचार्यवर्य भवदीयोक्तिः तथ्या भवति। किन्तु मे एतादृश वेषे भूषाधिकं रोचते।

**केशवः** — त्वं तव गृहे आत्मानं अलंकृत्य यथेच्छं विहर। किन्तु विद्यालये विद्यालयस्य आवरणे एतादृशी स्थितिः अयोग्या अननुरूपा भवति।

**शालिनी** — महोदय, अहं प्रयतिष्ये। किन्तु वेषभूषाविषये युष्माकं इयान् आग्रहः कुतः ?

**केशवः** — वेषभूषा यथास्थिति यथासन्दर्भं राजते। सर्वत्र यथायोग्यं वक्तव्यं अपि च व्यवहर्तव्यं वर्तते बाले।

**शालिनी** — ईदृशी वेषभूषया अनिष्टापत्तिः का ?

**केशवः** — त्वन्मूलकं अयं विद्यालयः भवति विद्या-लयः अपि च कामालयः। तथा मा भूयात् इति मे भावना।

**शालिनी** — (अवहित्थया) भवन्तः शिक्षकाः सन्ति। विद्यां शिक्षयन्तु छात्रान्। तदेव युष्माकं करणीयं विद्यते। अपि च तदेव शोभतेच। वेषभूषाविषये बोधनं युष्माकं अयोग्यं अधिक प्रसङ्गोऽपि असाम्प्रतम्।

**केशवः** — बाले साधु समुदीरितं त्वया। त्वं गमिष्यसि।

**शालिनी** - (कपोलेहस्तं निक्षिप्य) विनाशकाले विपरित बुद्धिः। (इति पानीयं पिबति)

(यवनिका पतति)

* * *

# तृतीयं दृश्यम्

(ज्योत्स्नाऽनन्दौ चहां पिबन्तौ वार्तापत्रिकां पश्यन्तौस्तः मुखपृष्ठे शालिनीहत्यां दृष्ट्वा ससंभ्रमाश्चर्याभ्तां ज्योत्स्नां कथयति आनन्दः)

**आनन्दः** — ज्योत्स्ने पश्य।

**ज्योत्स्ना** — किम् ?

**आनन्दः** — श्रृणु। विद्यालयं गच्छन्तीं युवतीं शालिनीं दामोदरनाम युवा मोटर सैकलोऽपरितां उपावेश्य गृहं नीत्वा तत्र स्वीयागारे तामुपभुच्य अमारयत् इति पोलीसधिकारिणः अवदन्। तस्मिन् विषये अधिक अन्वेषणा चलत्येव।

**ज्योत्स्ना** — छ छ आधुनिक दिवसेषु जनेषु दया, पापभीतिः सभ्यता नम्रताश्च विलुप्ताः सन्ति। किमर्थं छात्राः विद्यालयं गच्छन्ति। तत्र ते किं कुर्वन्ति न कोऽपि विचारयति। एवं विचार्यमाणे मे प्रतिभाति कतिपय वर्षानन्तरं देशः पशु जीवनमयः भविष्यतीति।

**आनन्दः** — एतादृशी स्थितिः देशे भविष्यतीति न केनाप्यनुमीयते। अधुना सर्वोऽपि मानवः जीवन मूल्यानि संत्यज्य केवल अर्थ संपादने अपि च सुखानुभवे च निमग्नः भवति। पूर्वं चार्वाकः एकः भवति। किन्तु अस्मिन् काले सर्वेऽपि चार्वाकाः।

**ज्योत्स्ना** — भारतस्य ईदृशी स्थितिः पाश्चात्य साम्प्रदायानुकरणेन भवतीति मे मतिः।

**आनन्दः** — अनुकरणं दोषः एव। अनुकरणं एकव्याधिरूपेण प्रसृतं भवति। परधर्मं अनुकरणेन समाजः अकालमरणं प्राप्स्यति। उक्तं खलु परधर्मः भयावहः इति।

**ज्योत्स्ना** — आधुनिक चलनचित्रे समाजः दोषयुक्तः भवति। आधुनिक चलनचित्रसृष्टिः केवलं अर्थं सम्पदनार्थं अपि च प्रजासु अविनय कामपरीतभावैः हत्याप्रोत्साहनादिकं प्रजनयितुं हेतुपूर्णा भवति।

**आनन्दः** — सत्यं भणसि त्वं ज्योत्स्ने। यदि चलन चित्रसृष्टिः स्थगिता भवति प्रजासु कलासृष्टिः पठनशक्तिश्च अधिके भविष्यतः। प्रजाः न्याय मार्गे च व्यवहरिष्यन्ति।

**ज्योत्स्ना** — अधुना साधु परिवर्तना लोके भवितुं अशक्या भवति। यतः प्रजाः अविनयमार्गेषु वक्रितपथिषु यथेच्छं चरन्तः सन्ति।

**आनन्दः** — अवश्यं समाजः सन्मार्गगामी भविष्यति। अयं समयः संधि-समयः। क्षेमकल्याणकृते निरीक्षा कर्तव्या।

**ज्योत्स्ना** — गृहेषु पितरौ स्वीय संतानाय न किमपि वर्तनमुद्दिश्य कथयन्ति। तेषां कथयितुमपि समयः नास्ति। बालिकाः युवत्याश्च विद्यालयार्थं एतस्मात् प्रदेशात्

तं प्रदेशं, तस्मात् प्रदेशात् एनं प्रदेशं गन्छन्त्यागच्छन्ति च। गमनागमने मध्येमार्गं किं भवति, गृण्डा उत मवाली उत दादा ताः मध्येमार्गं कथं स्पर्धन्ति किं कुर्वन्ति न कोऽपि विचरयति। अस्मिन् विषये पितरावपि दोषिणौ भवतः।

**आनन्दः** — युवकाः युवत्याश्च विद्यालयं गच्छन्ति उत कुत्रापि कामालयं गच्छन्ति न कोऽपि चिन्तयति। समाजे पूर्वसमाजरचना पापभीतिः क्रमशिक्षणादयः नष्टाः अभवन्। अधुना समाजः राक्षससमाजः न तु मानव समाजः भवति।

**ज्योत्स्ना** — यत् किमपि कथ्यते चेत् तत् सर्वं अरण्यरोदनं भवति।

**आनन्दः** — सत्यमुक्त भवत्या न कोऽपि शृणोति अस्मदीय भाषणम्।

**ज्योत्स्ना** — यदि सर्वोऽपि जनः भारते एवं विचारयिष्यति तर्हि एकस्यां क्षपायां देशः धर्ममार्गपरिवर्तितः भविष्यति।

**आनन्दः** — अधुना आवाभ्यां पत्रिकायां अत्र अस्मिन् प्रदेशे संभूतविषयमुद्दिश्य विचार्यते। एवं देशे सर्वत्र एकस्मिन् दिवसे कति बलात्काराः भवन्ति, कति युवत्यः म्रियन्ते न कोऽपि जानाति। बत देशसंस्कृतिः पङ्किलतां प्राप।

**ज्योत्स्ना** — आधुनिक विद्यार्थी विद्यार्थिन्यः केवलं वेषैः विद्यालये कालं यापयन्ति। न ते पठन्ति नियमबद्धाश्च भवन्ति।

**आनन्दः** — युवत्यः विद्यालयं गच्छन्त्यः किमर्थं निरवधिसज्जितवेषैः अलंकृताः भवन्ति नाहं जाने।

**ज्योत्स्ना** — ताः विद्यार्जनाय।

**आनन्दः** — विद्यार्जनाय उत सुखार्जनाय नोचेत् धनार्जनाय।

**ज्योत्स्ना** — तव भाषणे आन्तर्यं नाहं जानामि।

**आनन्दः** — पठनार्थं वेषः कुतः ? सतु सामान्यवेषः नहि, अर्धनग्नवेषः। ताः यं कमपि कामयितुं, आक्रष्टुं उत व्यापारोर्थं गच्छन्तीति मे ऊहः। समाजे सर्वमपि अस्तव्यस्तं स्त्रीमूलकं भवति।

**ज्योत्स्ना** — स्त्रीमूलकं इति भवन्तः पुरुषाः मन्वते। तदसङ्गतम्। पुरुषाणां विषयेऽपि अविनयः भवति। सर्वत्र समाजः पुरुषमूलकं अस्ताव्यस्तं भवति इति मे मनीषा।

**आनन्दः** — ज्योत्स्ने भवत्या प्रोक्तं सत्यं भाति मे। पश्य यत्र गुंड विद्यते तत्र पिपीलकाः रेखायां गच्छन्ति, गुडमाधुर्यता प्राप्त्यर्थं। यदि गुंड न स्यात् तर्हि पिपीलिकारेखायाः अभाव एव।

**ज्योत्स्ना** — गुडा भावः न भविष्यति।

**आनन्दः** — गुटाभावः न भविष्यति। किन्तु पिपीलिकेभ्यः गुडं परि-रक्षणीयं भवति। तावदेव कथने मे सारांशः।

**योत्स्ना** — वैराणि स्त्रीमूलकानीति तवाभिप्रायः।

**आनन्दः** — हां सत्यमेव "बद्धमूलस्य मूलंहि महद्वैरतरो स्त्रियः। ट्रायदहनं भारतरामायणादिकं स्त्रीमूलकमेव खलु।

**ज्योत्स्ना** — वयं पिपीलिकाः नहि। युक्तायुक्त विचारणायुक्त मानवाः। सर्वं विचार्य करणीयं विद्यते।

**आनन्दः** — यदि कामभावना उत वासना उद्भवतः तदा युक्तायुक्त विचारणा विनष्टा भवति। तस्मात् कामभावना यथा नोद्भवति तथा वस्त्र धारणं कर्तव्यं अस्ति। विद्यालये रथ्यासु कथं कामोद्दीपन वस्त्रधारणम्। सर्वमपि अस्तव्यस्तं समाजे स्त्री मूलतः भवति नत्वन्यथा।

**ज्योत्स्ना** — आधुनिक समाजे जीवनं प्रश्न परंपरापूर्णं वर्तते। विवाहः एव जटिलप्रश्नः भवति समाजे। पितरौ शुल्कं दत्वा विवाहकरणे अशक्तौ भवतः। विना च शुल्कं विवाहः न भवति। तस्मात् पितरौ युवतीनां स्वच्छन्दतायाः परमं प्रामुख्य स्थानं यच्छतः। तस्मात् पितरौ येनकेनापि युवकेन विवाहः निश्शुल्कः भविष्यति चेत् भारः न्यूनीकृतः भविष्यतीति चिन्तयतः। अधुना समाजः सर्वथा विषवलये संलग्नः अस्ति।

**आनन्दः** — स्त्रीणां स्वच्छन्दता वृत्तिः निस्सीमा भवति। तस्मात् बलात्कारेण मरणं भवति तासां। शालिन्यः मरणं स्वच्छन्दतावृत्ति कामुक भावनावच्छिन्न मरणमिति वितर्क्यते। एते पोलीस अधिकारिणः कथं अन्वेषयन्ति अन्ततः न्यायालयः किं आदिशति पश्यावः। अत्र आवयोः वाद प्रतिवाद कथम्। उत्तिष्ठ कार्यालयसमयः भवति। अद्य सत्वरं गन्तव्यं विद्यते कार्यालयं प्रति। (इति अन्तः गच्छति)

**ज्योत्स्ना** — अति सर्वत्र वर्जयेत्। (इति चहाचषकौ गृहीत्वा अन्तः प्रविशति)

(यवनिका पतति)

* * *

# चतुर्थं दृश्यम्

(उच्च न्यायालयः तत्र न्यायाधीशस्य आसनं वर्तते, उभयतः वादि प्रतिवादि न्यायवादिनः वर्तन्ते, ततः प्रविशति न्यायाधीशः चतुर्वेदी, सर्वे उत्तिष्ठन्ति, चतुर्वेदी उपविशति अनन्तरं सर्वे उपविशन्ति)

**चतुर्वेदी** — (टेबुलोपरि विद्यमान पत्राणि विलोक्य) अपराधिनं प्रवेशयतु।

**पुलिशः** - (नमस्कृत्य, गत्वा अपराधिनं आनयति, अपराधी कथयितुं साक्षिपञ्जरे प्रविशति)

**अभियोक्ता** — (भगवद्गीतां गृहीत्वा अपराधिसकाशं गत्वा तस्य हस्तं भगवद्गीतोपरि निक्षिप्य) मदुक्तिमनुसृत्य भण।

**दामोदरः** — तथैव।

**अभियोक्ता** — अहं सत्यं कथयामि, असत्यं न कथयामि।

**दामोदरः**— अहं सत्यं कथयामि असत्यं न कथयामि। अयि भोः न्यायाध्यक्षाः न्यायवादिनः अपिच प्रेक्षकाः श्रृण्वन्तु। यदि मम कथने असत्यं स्यात् तर्हि मम रज्जु गळ बन्धन शिक्षा भवतु।

**न्यायाधीशः** — दामोदर सविस्तरं शान्तं यथाक्रमं कथयतु। तव न्यायानुरूपोपण्डः भविता।

**दामोदरः** — अयि भोः अहं एकः सज्जनः। अहं वर्षद्वयात् प्राक् अस्मिन् विद्यारण्य विद्यालये पठित्वा बि. ए. परीक्षायां उत्तीर्य विश्वविद्यालयात् प्रमाण पत्रं गृहीत्वा उद्योगार्थं बहु प्रायतम्। न कुत्रापि मे उद्योगः लब्धः। अहं मम जीवने सर्व कक्ष्यासु प्रथमः अभवम्। बि. ए. प्रथम कक्ष्यायां उत्तीर्णः। एतावत्पर्यन्तं मे जीवितं अकलङ्कितं वर्तते।

**वादिन्यायवादी** — भवान् अधुना किं करोति।

**दामोदरः** — उद्योगाभावे अहं परेल प्रदेशे बालकेभ्यः शिक्षणां ददामि भारतीय संस्कृतिं बोधयामि। तन्मार्गेण यत् धनं प्राप्यते तत् अपर्याप्तं भवति। तस्मात् एकेन मित्रेगसार्थं मद्योत्पादन कर्म करोमि। वस्तुतः नाहं जाने कथं मद्यं उत्पादयन्ति। किन्तु तत्कृते मदीय अंशदानं वर्तते।

**वादिन्यायवादी** — भवान् मद्यं न पिबति।

**दामोदरः** — नाहमपिवम्। नाहं पिबामि। नाहं पास्यामि।

**वादिन्यायवादी** — मद्यमुत्पादयसि, किन्तु मद्यं न पिबसि, श्रुत्वा मे आश्चर्यं भवति।

**न्यायाधीशः** — हां कथयतु दामोदर।

**दामोदरः** — एकदाहं विद्यालयं द्रष्टुमगच्छम्।

**वादिन्यायवादी** — तत्र त्वं किं द्रष्टुं गतवानसि।

**दामोदरः** — अहं तस्मिन् विद्यालये अपठम्। तस्मात् एषा मे मातृसंस्था इति बुध्या तत्र तां विद्यारण्यकलाशालां द्रष्टुं अगच्छम्।

**वादिन्यायवादी** — ततस्ततः।

**दामोदरः** — तदा एका युवती अत्यन्त कामुकदर्शना कुच्चकचभारनिम्रोन्नतशरीरा सरसाङ्गी मया दृष्टा आसीत्। तस्याः वेषः मदनक्रीडार्थं आह्वयती वास्ते। अहं तां दृष्ट्वा कामवासनावशगः अभवम्। एवं कदापि मे जीवने नाभूत्। तदाहं भीत्या कामतृष्णया तस्याः सकाशं गत्वा किं त्वं मया सार्थं ओबरायन् शरिटान्

होटल आगमिष्यसि इत्यपृच्छम्। अनुपदमेव सा मया सार्धं आगन्तुं चकमे। तदाहं तां मे परेल गृहमानयम्।

**वादिन्यायवादी** — ततस्ततः।

**दामोदर** — तदा सा अवदत् अधुना ओब्रायन् शरिठान् होटल न गम्यते किं इति।

**वादिप्रतिवादी** — ततस्ततः।

**दामोदरः** — तावत्पर्यन्तं गन्तुं मदनः नाङ्गीकरोति मां। अत्रैव त्वरयति संगमार्थं इति तामन्वभवम्।

**न्यायाधीशः** — तदा किमभूत्।

**दामोदरः** — अयि दामोदर अहं त्वया साकं विवाहितुमिन्छामि इति सा अवादीत्।

**वादिन्यायाधीशः** — विवाहार्थं त्वया अङ्गीकृतं किम्?

**दामोदरः** — नहि।

**न्यायाधीशः** — कुतः।

**दामोदरः** — सा मां अन्यथा चिन्तितवती।

**न्यायाधीशः** — सा किं चिन्तितवती?

**दामोदरः** — आधुनिकेषु दिवसेषु गुण्डाः शतथा कामनां पूरयिष्यन्ति सर्व सौख्येषु प्लावयिष्यन्ति, यदपेक्षते तत् आनीय दास्यन्ति सर्वदा सुरक्षा भवति। एतादृश सुखः अन्यत्र न लभ्यते। अहं त्वां परिणेष्यामि इति।

**वादिन्यायवादी** — ततस्ततः।

**दामोदरः** — अहं गुण्डा नहि। अहं एकः सज्जनः सुशिक्षितः संस्कारवान्। त्वदीय दर्शनेन तव अर्धनग्न वेषेण अहं उन्मत्तः भूत्वा कामुको भूत्वा तवाङ्गीकारेण त्वां अन्वभवम्।

**वादिन्यायवादी** — ततस्ततः।

**दामोदरः** — तदा सा ओबेरायन् शरिटाम् कदा नेष्यसि मां इत्यपृच्छत्। तदाहं अद्य रात्रौ गच्छावः इत्यवोचम्। अत्रान्तरे मे सप्तमित्राणि आगत्य मां कवाटोद्घाटनं कुरु इति जगर्जुः। तदाहं उद्घाटितवानस्मि।

**वादी** — ततस्ततः।

**दामोदरः** — ते सप्तमित्राणि मां बहिरागच्छ इत्यवोचन्। अहं बहिः आगच्छम्। तदा ते सर्वे मां भर्त्सयित्वा एकैकशः तां यथेच्छं अन्वभवन्। तदा तस्य आक्रन्दनं श्रुत्वा अहं भीतः अद्रवम्। तदा किमभूत् नाहं जाने। तस्मात् नाहं हन्तकः भवामि।

**वादिन्यायवादी** — तस्याः मरणं भवन्मूलकं जातम्।

**प्रतिवादिन्यायवादी** —अवरोधः क्रियतेमया वादीन्यायवादी दामोदरं पीडयति। एतादृशी स्थितिः अयोग्या।

**न्यायाधीशः** — वादिन्यायवादिन् भवान् उपविशतु। अयि भोः प्रतिवादिन्यावादिन् भवान् पृच्छतु दामोदरम्।

**प्रतिवादिन्यायवादी** — दामोदर सज्जनमानुषस्य जीवने इयं स्थितिः कथं संभूता विशदय।

**दामोदरः** — अयि भोः श्रृण्वन्तु अहं सामान्य मानुषः। मम जींवने न कस्याप्यपकारमकरवम्। अहं सर्वदा शालायां विद्यालये च सर्वं विषयेषु प्रथमः। मम चारित्र्यं सर्वत्र सर्वदा आदर्शप्रायं भवति सर्वेषां छात्राणाम्। भवन्तः मां उद्दिश्य अन्वेषणं कृत्वा विचारयन्तु। तादृश सर्वगुणमण्डितोऽहं एकदा शालिनीं दृष्टवा काम संतप्तः अभवम्। एषा शालिनी अत्यन्त कामुकी स्वरुपेण मनोविकारकारणीभूतेन आहार्येण, अर्धनग्नशरीरेण मां उन्मत्तं चक्रे। तस्मात् अहं विवशः तस्याः सकाशं गत्वा तस्याः अङ्गीकारेण तां गृहं नीत्वा अन्वभवम्। अहं सप्तमित्रेभ्यः भीतः अद्रवम्। अनन्तरं किमभूत् नाहं जाने। तस्मात् नाहं कारकः तस्याः मरणस्य।

**प्रतिवादीन्यायाधीशः** — अयि न्यायधीश महोदय पुरुष प्रकृति विलसिते जगति सर्वेषां स्त्रीपुरुषाणां सत्कर्म कर्तुं जन्मतः स्वातन्त्र्यं वर्तते।

न स्त्री स्वातन्त्र्यमर्हतीत्यस्य वाक्यस्यअर्थं नैके अनेक मार्गेषु संकुचितार्थान् परिकल्पयन्ति, स्त्रीणां संपूर्ण स्वातन्त्र्यमावश्यकं इति। यदि स्त्री अर्धनग्नवस्त्राच्छादनेन रथ्यासु गच्छेत् तर्हि एतादृशी स्थितिः भवतीति अवगन्तव्यं भवति।

**वादिन्यायाधीशः** — पुरुषः मानवतां ज्ञात्वा समाजे व्यवहर्तव्यः किन्तु न पशुभावेन।

**प्रतिवादिन्यायाधीशः** — जगति आकर्षणशक्ति निरोध्दुं वयं के। पुरुषः आज्यघटोपमः स्त्री कृपीटयोनिः। तयोः अन्योन्यालोकनेन कामः प्रज्वलितः भवति। तस्मात् सर्वदा अति जागरुकतया स्त्रियः व्यवहर्तव्याः भवन्ति।

**वादिन्यायवादी** — भवान् दामोदरं निरपराधिनं कर्तुं प्रयतसे।

**प्रतिवादिन्यायवादी** — भवान् प्रकृतिधर्मानभिज्ञः दामोदरं अपराद्धं विधातुं प्रयतते। अस्मिन् विषये न्यायाधीशस्य पन्थाः प्रमाणं भवति।

**वादिन्यायवादी** -- अयं स्त्रीस्वातन्त्र्य विरोधी।

**प्रतिवादिन्यायवादी** -- अयि भोः भवान् भवतः स्वसारं स्त्री स्वातन्त्र्यमावश्यकमिति नक्तं उत अर्धनग्नवेषेण दिवा एकाकिनीं विहर्तुं प्रेषय।

**वादिन्यायवादी** — अनावश्यकं असाधु वदति भवान् न्यायाधीशस्य पुरतः।

**प्रतिवादिन्यायवादी** — मम कथने अयमेव तात्पर्यः। स्त्रीणां सर्व विषयेषु स्वतन्त्रता समानता अर्हतादयः अवश्यं जन्मतः संक्रामिताः। किन्तु रथ्यासु निर्लज्जाः भूत्वा स्वच्छन्दचारणाः न भवितव्याः। ताः स्त्रीमर्यादा सीमोल्लघनं न कर्तव्याः। पुरुषाः अपि तथैव वर्तनीयाः इति ममाभिप्रायः। अत्र विद्यमान रहस्यं अज्ञात्वा मूर्खाः केचन मनुस्मृतिं ज्वालयन्ति। तेन कर्मणा तेषां मौर्ख्यमेव प्रकटी क्रियते। मनोः उत्तमः बुद्धिमान् संहिताकारः उत स्मृतिकारः एतावत्पर्यन्तं जगति नोद्भूतः। समाज परिवर्तनानुरूपं अर्थः निर्वचनीयः भवति। किन्तु पुस्तकदाहनं नहि। समाज नाशन कारकाः पंडितं मन्यमानाः आधुनिकाः कामुकाः पुरुषाः स्त्री स्वातन्त्र्यमर्हतीति विविधार्थान् परिकल्प्य स्वातन्त्र्ययुतां स्त्रियं अनुभवन्ति। तासां कौटुम्बिकजीवनं नाशयन्ति। अधुना जगति स्त्रीणां विद्यमानं नोचेत् अविद्यमानं अवयवप्रदर्शनं

व्याधिरूपेण परिव्याप्त भवति। तथा करणमेव स्त्री स्वातन्त्र्यमिति कामुकाः कामुक्यः यथेच्छं विहरन्ति।

**वादिन्यायवादी** — अधिक प्रसङ्गोऽयं भवति।

**न्यायाधीशः** — आदेशः। (इति टेबुलं ताडकेन मारयति) तस्य भाषणे व्यत्ययं मा करोतु भवान्।

**प्रतिवादिन्यायवादी** — अयं दामोदरः सज्जनः। अयं उद्दीपित भावेन, तस्याः अङ्गीकारेण तयासार्थं सुखमन्वभवत्। सा अन्यैः मारिता न तु अनेन। तस्मात् अयं शिक्षार्हः न भवति।

**न्यायाधीशः** — दामोदरः नीयतां अन्तः। अद्य सभा स्थगिता भवति। दिन द्वये निर्णयः भविष्यति। (इत्युत्थाय गच्छति, सर्वे उत्तिष्ठन्ति गच्छन्ति)

(यवनिका पतति)

* * *

## पंचमं दृश्यम्

(न्यायधीशः चतुर्वेदी, तस्या पत्नी वेदवती पुत्रिका सुषमा च एकत्र उपविश्य शालिनी हत्याकाण्डमुद्दिश्य संलपन्तः सन्ति।

**वेदवती** — शालिनीहत्याविषयः अत्र न्यायालये चर्चा भवति, हन्तकस्य कीदृशी शिक्षा भवद्भिः विधीयते कथयन्तु।

**चतुर्वेदी** — न्यायालयीनविषयाः न्यायालये चर्चनीयाः भवन्ति न तु गृहे।

**सुषमा** — दोषः कुत्र विद्यते ? कः दोषी अभूत् पितः।

**चतुर्वेदी** — बाले त्वमपि न्यायशास्त्रं पठसि, पत्रिकायां हत्याकाण्डमुद्दिश्य पठसि, कस्ते निष्कर्षः तं हत्याकाण्डमुद्दिश्य।

**सुषमा** — पितः मम एवं स्फुरेति सर्वोऽपराधः शालिन्याः इति।

**चतुर्वेदी** — त्वं एवं विचारयसि ?

**सुषमा** — विचारधारा वक्रिता किम् ?

**चतुर्वेदी** — न्यायवादिनां बहुमार्गाः सन्ति। ते सर्वे सत्यासत्य मार्गपूर्णाः भवन्ति।

**वेदवती** — तस्मात् लोके एका प्रथा विद्यते यत् न्यायवादिनस्सर्वे अन्याय वादिनः इति।

**चतुर्वेदी** — बाले, अपि च वेदवति वयं सत्यमार्गानुयायिनः। सर्वदा अस्माभिः सत्यमार्गे केवलं गन्तव्यं विद्यते। असत्यमार्गगमनापेक्ष्या मरणं योग्यं इति मे मतिः। वयं भारतीय परम्परा प्रेमिणः अन्यायं उक्त्वा विधाय च जीवनयापनं अस्माकं अयोग्यं भवति। वयं सर्वदा तत्वान्वेषिणः। अस्माकं सर्वदा हरिश्चन्द्रादयः पूज्याः अनुसरणीयाश्च भवन्ति।

**वेदवती** — तस्मादेव अहं अपृच्छं कीदृशीशिक्षा दीयते इति।

**चतुर्वेदी** — हञ्जे वेदवति। मया कथितं खलु वयं सत्यमार्गानुयायिनः। अत्र न्यायालयीनविषयाः गृहे चर्चनीयांशाः न भवितव्याः इति। अहं इयन्तं कथयामि लोकः अधुना भारतीयतां विसृजन् अन्य देशीयानां धर्मप्रभावेन क्रमशः पतनोन्मुखः भवति। एतादृशी भावना निरोद्धव्या विद्यते।

**सुषमा** — ततः किं कर्तव्यं पितः।

**चतुर्वेदी** — शैशवे केवलं भारतीयं माहत्म्यमुद्दिश्य बालिकाबालकानां कथनीयं विद्यते। नोचेत् कतिपय दिवसानन्तरं सर्व युवतीः युवकाः पशवः भूत्वा रथ्यासु विहरिष्यन्ति जीवित मूल्यानि विस्मृत्य। प्रपञ्चे मकुटायमान भारतराष्ट्रस्य कीर्तिः कलङ्किता भविष्यति। भारतं अस्यां स्थित्यां परकीयं भविष्यति अनंतरं पाशविक जीवनभरितं भविष्यति।

**सुषमा** — पितः अस्मदीय विद्यालये केचन विद्यार्थी विद्यार्थिन्यः भारतीय संस्कृतिं भारतीयविद्याः भारतीयान् सर्वदा टीकां कुर्वन्ति। तां टीकां श्रावं श्रावं मे

विद्यालयं त्यक्तुं इच्छा भवति। तत्र सर्वे वेषभूषिताः असंस्कारिणः असंस्कारिण्यः आयच्छन्ति। न कोऽपि जानाति भारतेतिहासं, भारतीय गत वैभवं वर्तमान भारतीयस्थितिं च। सर्वेऽपि राष्ट्रभक्तिहीनाः। ते पठित्वा न्यायवादिवृत्तिं स्वीकृत्य किं करिष्यन्ति नाहं जाने।

**चतुर्वेदी** — भारतदेशे सर्वत्र स्थितिः एवं विद्यते। एतादृशी स्थितिः परिवर्तनीया भवति।

**वेदवती** — एकः कुटुम्बः एवं विचिन्त्य किं करिष्यति।

**चतुर्वेदी** — एवं सर्वोऽपि विचिन्त्य अकर्मकृत् भवेत् चेत् देशः कार्य-हीनः वृद्धिहीनः भविष्यति। आमूलतः विद्यायाः स्वरुपः परिवर्तनीयः भवति।

**सुषमा** — ममापि तथैव प्रतिभाति पितः। न कोऽपि भारतीयतां उद्दिश्य चिन्तयति अस्मिन् प्रदूषिते प्रपञ्चे।

**चतुर्वेदी** — प्रथमतः कामोद्दीपन कारकं अलङ्करणं रथ्यासु शालासु विद्यालयेषु तदयन्त्र अवरोद्धव्यं विद्यते। स्त्रीणां पुरुषाणां बालिकानां बाल-कानां वृद्धानां च सर्वत्र भारतवर्षे वेषभूषा निर्णयः एकः नियमबद्धः भवितव्यः। यदि प्रथमतः अश्लीला अयोग्या चलनचित्र सृष्टिः निरूद्धा भवति, तर्हि वेषभूषा निर्णयः अनुपदमेव आचरणयोग्यः भविष्यति।

**सुषमा** — सर्वत्र व्यवहारे क्रमशिक्षणावश्यकता भवति।

**चतुर्वेदी** — सत्यं वदसि बाले।

**वेदवती** — एषा भवतः पुत्री खलु। तस्मादेव भवतः प्रतिमा जाता प्रतिभया।

**चतुर्वेदी** — (विहस्य) सत्यमुदीरितं भवत्या वेदवती। किंचित् चहां करोतु।

**वेदवती** — आनयेयम्। (इत्युत्थाय अन्तः गच्छति)

**सुषमा** — पितः अहं अद्य मम मैत्रिण्याः गृहं गच्छेयम्।

**चतुर्वेदी** — त्वं कदा गमिष्यसि।

**सुषमा** — अद्य मध्याह्ने एकघण्टावादन समये गच्छेयमहम्। पुनः चतुर्वादनसमये संध्याकाले समागच्छेयम्।

**चतुर्वेदी** — तथैव गच्छ।

( तत्र टेबुलोपरि दूरध्वनियन्त्रं शब्दायते )

**सुषमा** — ( गत्वा दूरध्वनिं गृहीत्वा ) हेलो, हां हां एतत् चतुर्वेदीनः गृहम्। हां हां ते गृहे सन्ति। हां धरतु भोः आह्वयेयं तान्। ( पितरमुद्दिश्य ) पितः कोवा शर्मा आह्वयति। ( इति ग्रहणमुष्टिं टेबुलोपरि निक्षिप्य गच्छति )

**चतुर्वेदी** -- ( उत्थाय गत्वा ग्रहणमुष्टिं हस्ते धृत्वा ) हेलो अहं चतुर्वेदी भणामि। नमस्ते। एतावत्पर्यन्तं न किमपि विनिश्चतम्। दिवसद्वये सर्वमपि समाप्तं भविष्यति। धन्यवादाः। ( इति ग्रहणमुष्टिं यन्त्रे निक्षिप्य ) सर्वोऽपि स्वार्थं समीहते अपिच स्वात्मानं उन्नतं मनुते। छ छ। ( इति वदन् आगत्य कुर्च्यां उपविशति )

**वेदवती** — ( चहाकरण्डकसूर्पवाहिनी आयाति तत्र टेबुलोपरि करण्डकसूर्पं निक्षिप्य उपविशति )

**चतुर्वेदी** — ( चहां गृहीत्वा पिबन् ) हसे वेदवति अधुना स्नात्वा, पूजां विधाय न्यायालयं गन्तव्यं विद्यते, किं स्नातुं जलं उष्णमभूत् ?

**वेदवती** — कदावा उष्णमभूत्। अद्य भवान् भुक्त्वा न गच्छति किम् ?

**चतुर्वेदी** — नहि अद्य सोमवती अमावास्या खलु, अद्य उपवासः क्रियते।

**वेदवती** — मध्याह्ने किञ्चित् अल्पाहारार्थं गृहं प्रत्यागच्छतु।

**चतुर्वेदी** — तथैव। ( इति उत्थाय अन्तः गच्छति )

**वेदवती** — ( अनुनासिका स्वरगुञ्जनेन गायन्ती, करण्डकसूर्पं गृहीत्वा अन्तः प्रविशति )

( यवनिका पतति )

* * *

# षष्ठं दृश्यम्

( न्यायालयः तत्र सर्वे स्वीय स्थानेषु उपविष्टाः सन्ति ततः प्रविशति चतुर्वेदी न्यायाधीशः सर्वे उत्तिष्ठन्ति, न्यायाधीशः उपविशति, सर्वे उपविशन्ति )

**प्रतिवादिन्यायवादी** — अयि न्यायाधीश महोदय अयं दामोदरः न शिक्षार्हः न च दण्डनीयः। शालिन्याः हत्या अन्यैः कृता।

**चतुर्वेदी** — साक्षिणः वचनमनुसृत्य अन्तिमनिर्णयः करणीयः वर्तते।

**प्रतिवादिन्यायवादी** — साक्षिणं प्रवेशयतु। ( इति पोलीसुं कथयति, पोलीसः साक्षिणमानयति सः साक्षी चतुष्फलक पञ्जरे स्थित्वा गीतापुस्तकोपरि हस्तं निक्षिप्य तिष्ठति )

**अभियोक्ता** — अयि भोः साक्षि, अहं यत् ब्रवीमि तत् अनुसृत्य भण। अहं सत्यं ब्रवीमि, सत्यादन्यत् न ब्रवीमि।

**साक्षी** — अहं सत्यं ब्रवीमि सत्यादन्यत् न ब्रवीमि। ( इति कथयति )

**प्रतिवादिन्यायवादी** — किं भवता शालिन्याः हत्या दृष्टा ?

**साक्षी** — हां दृष्टा मया।

**न्यायाधीशः** — त्वं सविस्तरं कथय।

**साक्षी** — अमावास्यक्षपायां एक घण्टा वादनसमये अहं मूत्रयितुं उत्थाय मम गृहात् बहिरागच्छम्। तदा कुक्कुराः भौ भौ कुर्वन्तिस्म। तदाहं अन्तर्हितः मम प्राङ्गणे शववाहकान् अपश्यम्। ते दामोदरगृहात् एकं शवं बहिरानीय तं एकस्मिन् मञ्चे पिण्डीकृत्य संस्थाप्य चत्वारः पुरुषाः वहन्तः अचलन्। एकः मार्गदर्शकः अभूत्। अन्यौ द्वौ पार्श्वतः शवस्य दण्डहस्तौ भूत्वा निश्शब्दं अगच्छताम्। ते सर्वे दामोदरस्य मित्राणि मद्यव्यवसायभागस्वामिनः।

**प्रतिवादिन्यायवादी** — किं त्वं सर्वान् विलोक्य ते एते इति। स्मरिष्यसि किम् ?

**साक्षी** — अवश्यं स्मरिष्यामि।

**प्रतिवादिन्यायवादी** — तान् दोषिणः प्रवेशयतु।

**पुलिशः** — (तान् प्रवेशयति)

**प्रतिवादिन्यायवादी** — किं त्वं जानासि एतान्।

**साक्षी** — ( तान् दृष्ट्वा ) हां एतेसप्त शालिनी घातुकाः।

**प्रतिवादिन्यायवादी** — एतस्मादन्यत् किमपेक्ष्यते भोः।

**न्यायाधीशः** — अयि भोः एतावत्पर्यन्तं समालब्धवार्तानुसारं दामोदरः सज्जनः पुरुषः इति सर्व विद्यासंस्थेभ्यः पत्राणि समागतानि। सः स्वजीवने कुत्रापि न कस्यापि अकरणीयंकृत्यं चकार। एषः शालायां विद्यालये अधुना स्वजीवन निर्वहणे च कदापि अकार्यं न चक्रे। अयं शालिन्याः कामोद्दीपन वेषभूषाभ्यां तस्याः अश्लीलपूर्णवर्तनाभिः मोहितः तस्याः अङगीकारं प्राप्य तयासाकं रेमे। अत्र तेन न कोप्यपराधः कृतः। तथापि अनेन अज्ञातरील्या तस्याः मृत्योः कारणं प्रकल्पितं। तस्मात् शिक्षास्मृतौ विनिर्दिष्ट नियमानुसारं एतेषां सप्त घातकानां रेज्जुगळबन्धनेन मरणशिक्षा विधीयते, दामोदरस्य सहस्र रूप्यकाणां दण्डः विधीयते। ( इत्युक्त्वा उत्थाय गच्छति, पोलीस अधिकारी सप्त हन्तकान् अन्तः नयति, दामोदरः सर्वैरपि अभिनन्द्यते क्रमशः सर्वे गच्छन्ति )

**कर्मचारी** — अरे गणक न स्त्री स्वातन्त्र्यमर्हतीति यत् मनुना प्रोक्तं तत् युगान्तेऽपि सत्यं भवति। केचन कामुकाः स्वार्थमभिलषन्तः न स्त्री स्वातन्त्र्यमर्हतीत्यस्य स्त्रीय कुटुम्बे विद्यमान स्त्रियः स्वातन्त्र्यं नार्हन्ति तत् भिन्नं स्त्रीमण्डलं स्वातन्त्र्यमर्हति। अन्य कुटुम्बेषु विद्यमानास्त्रियः यथेच्छं पुरुषाः इव निर्भीकाः समानार्हतया व्यवहर्तव्याः इति कथयन्ति।

**गणकः** — तथा कथने तथा प्रचारकरणे को लाभः।

**कर्मचारी** — को लाभः शृणु। स्वेच्छायुतानां कामिनीनां सहवासेन अनायास लब्ध संभोगलाभः एव महान् लाभः।

**गणकः** — तदर्थमेव सातत्य व्यभिचारार्थमेव ते तथा नानार्थान् परिकल्पयन्ति। अहो ज्ञातं अधुना। पूर्वेद्युः एका महिळा एकत्र सभायां एवं जगाद।

**कर्मचारी** — किमिति।

**गणकः** — अहं सुशिक्षिता पदवीधरा पदधरा। मे गृहे स्वतन्त्रता विद्यते। मे पतिः सर्वदा मह्यं आर्थिक स्वतन्त्रतां यच्छति। मम गृहे वाक् स्वातन्त्र्यं अपिच सर्व प्रकार स्वातन्त्र्यं विद्यते। केचन चोराः स्त्रीमुक्तता स्त्रीमुक्तता इति मुक्तकण्ठं सभासु घोषयन्ति गर्जन्ति। अधुना स्त्रीणां न कापि न्यूनता विद्यते। ताः समाजे पुरुषसमानाः भवन्ति। नाहं जाने तेषां हृदि अभिप्रायः कः इति।

**कर्मचारी** — सा नारी तेषां चोराणां मानसिकभावं अपठत् इति मे मतिः।

**गणकः** — (पेटिकां बध्नन्) ते चोराः स्त्रीस्वातन्त्र्यमिति उक्त्वा स्त्री स्वातन्त्र्यानन्तरं ताः यथेच्छं अनुभवितुं अयं मार्गः इति मनसि चिन्तयन्ति। अत्र विद्यमान रहस्यं अनभिज्ञाताः प्रजाः वञ्चिताः भवन्ति। मनुना यदुक्तं तत् सत्यं। स्त्री सर्वदा मानाभिमान शीललज्जारक्षणार्थं सर्वदा सर्वदशासु यथा सन्दर्भं वयोमर्यादा मनुसृत्य परेभ्यः वंचकेभ्यः गुण्डेभ्यः संरक्षणीया इति मनोः अभिप्रायः।

**कर्मचारी** — पशुपेक्ष्या हीनाः केचन पुरुषाः शालां गच्छन्तीं बालिकां अपि च चातुर्मास वयस्कां बालिकां यथेच्छं अनुभूय अमारयन् इति वयं दिनपत्रिकासु पठामः। एतत् सर्वं दिव्यज्ञानेन मनुः पूर्वमेव विचार्य।

**पिता रक्षति कौमारे। भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्धक्ये। न स्त्री स्वातन्त्र्यमर्हति॥**

इत्युक्तवान्।

**गणकः** — अयं विषयः अतिविस्तारेण सुदीर्घं विचारर्णायः भवति। तस्मात् अहं वच्मि प्रश्नचिह्नेन "न स्त्री स्वातन्त्र्यमर्हति?" इति।

(यवनिका पतति)

* * *

॥ इति श्री गीर्वाणान्ध्रभाषाप्रवीणेन, गीर्वाणगेयचक्रवर्तिना, पंडित ओगेटि परीक्षित् शर्मणा विरचितं सप्तविंशतिनाटकपरिमितं परीक्षिन्नाटकचक्रम् समाप्तम्॥